**प्रवृत्त्यशक्तत्वादेवेदं जगत् प्रवृत्तये ईशावास्यम् । अन्यथा तन्न स्यात् । अतः [1]अस्वतन्त्रत्वात् स्वतःप्रवृत्त्यशक्तमीशाधीनम् । किञ्च यस्मादिदं प्रकृतिगं यस्माच्च विष्णुः प्रकृतीश्वरस्ततोऽपि । यद्यस्मादेवमुक्तप्रकारेण तदधीनस्वरूपत्वात् सर्वं वित्तं तदीयमेवातस्तद्दत्तेनैव भुञ्जीथाः । अतः परमेश्वरादन्यं न प्रयाचेत भवानित्यर्थः ॥ १ ॥**

**वामन**- ईशावास्यमित्यादिस्तुतिमन्त्रं व्याख्याति- **ईशस्येति** ॥ यत् किञ्च इदं चराचरं जगत् । जगतीसंज्ञायां प्रकृतौ संस्थितं, तत् सर्वं सर्वेश्वरेण हरिणा तन्नियन्तुमावास्यम् । नचात्र जगतीशब्देन पृथिव्युच्यते । नह्यस्यामेव सर्वजगदवस्थानं युज्यते । जगत् गतमस्यामिति जगती प्रकृतिः । नचेयं स्वशक्त्यैव सावरणाण्डं धत्ते । 'यस्मात् स प्रकृतीश्वरः' इति वक्ष्यमाणत्वात् । एवं भोक्तृभोग्यादेः सर्वस्येशाधीनत्वात् तद्दत्तेनैव वित्तेन भोजनाच्छादनादि कुर्याः । अथ यत् तेन तुभ्यं न दत्तम्, अन्यस्मै वा दत्तम्, तदन्यस्य कस्यचिद् धनम् । तस्मात् त्वं तत् मैव गृधः । 'गृधु अभिकाङ्क्षायाम्' । एवं सुखदुःखादिकमपि दैवप्राप्तमिति बुद्ध्वा भोक्तव्यमिति भावः । इयं हि सम्बुद्धिः स्वबुद्धिविषयैवेति बोद्धव्या । प्रतियोग्यन्तरादृष्टेः । 'मतिं वसिष्ठ मीळ्हुषे भरस्व' इत्यादिवत् । ब्राह्मवचनं चाऽह- **स्वत इति** ॥ १ ॥

**वादि**- यद्यपि तेन 'ईशावास्यम्' इत्यत्रोक्तेन ईशेन इति परामर्शो युज्यते । तथाऽपि तत्पदस्य यत्पदसापेक्षत्वमभिप्रेत्योक्तम्- **बुद्ध्या विवेकेनेति** ॥ य ईशः तेन इति परामर्श इति भावः । यद्यपि 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति श्रुतौ प्रवेशमात्रमुच्यते । तथाऽपि स्वभावत एव सर्वत्र व्याप्तस्य सृष्ट्यनन्तरं स्वसृष्टवस्तुषु पुनः प्रवेशस्तत्प्रवर्तनार्थमिति भावः । अव्याकृताकाशस्य प्रकृत्यात्मकत्वात् प्रकृतिस्वामिकत्वात् 'आकाश एव तदोतं प्रोतञ्च' (बृ.उ.३.८.७) इति श्रुतावाकाशपदेन प्रकृतिरेवोच्यत इति भावः । 'नान्यं प्रयाचयेत्' इति भाष्ये स्वयं न याचेत अन्यमुखेन याचयेदिति भ्रमनिवारणाय 'स्वार्थिको णिच्' इति भावेनोक्तम्- **न प्रयाचेत भवानिति** ॥ अन्यथा [2]निर्व्यलीकवैराग्याभावप्रसङ्गात् । 'मा गृधः कस्यस्विद्धनम्' इति मूलश्रुतिविरोधाच्च ॥ १ ॥

---

१. ईशावास्यत्वात् २. निरवधिक

**श्रीनि- आवासमर्हतीति** ॥ तथा च आवासशब्दात् अर्हे अर्हार्थे यत्प्रत्ययः स्यादिति तद्धितप्रत्यये तकारलोपे सकारस्थस्याकारस्य 'यस्येति च' (सि.कौ.३११) इति लोपे आवास् य आवास्य इति रूपसिद्धिः ॥ **त्यक्तस्य चेति** ॥ त्यक्तस्य चेत्यतः पूर्वं त्यक्तेन भुञ्जीथा इत्यनेनोक्तमिति शेषः । ननु ईशावास्यस्यैव पूर्वप्रकृतत्वात् तेनेशेनेत्युक्तिः कथमित्यत आह- **समासेति** ॥ षष्ठीसमास इत्यर्थः । 'तदधीनप्रवृत्तित्वात्तदीयं सर्वमेव यत्' इति प्रमाणेऽर्थान्तरस्यापि कथनात् तदनुसारेण भाष्येऽपि अयमेवार्थोऽभिप्रेत इत्याशयेनाह- **पूर्वार्धेति**॥ पूर्वार्धसिद्धतात्पर्यार्थस्य सर्वस्य अस्वातन्त्र्यरूपस्य, ईशस्य स्वातन्त्र्यरूपस्य परामर्शः परामर्शकोऽयं तेनेति शब्दः ॥ **भोजनादिकमिति** ॥ 'भुज पालनाभ्यवहारयोः' इति धातोरिति भावः । ननु यत्किञ्च यदिदं सर्वं जगत् स्वतः प्रवृत्त्यसमर्थं अस्वतन्त्रमिति यावत् । ईशावास्यत्वादिति हेतुहेतुमद्भावोऽभिप्रेतः । प्रमाणे च विपरीत एव साध्यसाधनभावः कथ्यते । अतः कथमेतदित्याशङ्क्य वह्निमत्वादेव धूमवत्वमन्यथा तन्न स्यादितिवत् न विरोध इत्याशयेनाह- **स्वत इति** ॥ तत् ईशावास्यम् । यथास्थितहेतुहेतुमद्भावं दर्शयति- **अत इति** ॥ तस्यैव विवरणम् ॥ **ईशावास्यत्वादिति** ॥ **ततोऽपीति** ॥ कैमुत्येन ईश्वराधीनमिति भावः ॥ १ ॥

**छलारी- आवासमर्हतीति** ॥ 'अर्हे कृत्यतृचश्च' (सि.कौ.२८२२) इति सूत्रादाङ्पूर्वकवसेः अर्हार्थे 'ऋहलोर्ण्यत्'(सि.कौ.२८७२) इति ण्यत्प्रत्यय इति भावः । ननु ईशावास्यमित्यत्र ईशशब्दस्य समासे विशेषणत्वेन अप्रधानत्वात् तेनेति कथं परामर्श इत्यत आह- **समासेति** ॥ **बुद्ध्या विवेकेनेति** ॥ ईशावास्यमिति समासपदार्थावबोधके ईशस्यावास्यमिति विग्रहवाक्ये ईशस्येति षष्ठ्यन्तपदस्य बुद्ध्या पृथक्कृतस्य तेनेति परामर्श इत्यर्थः । ईशावास्यमित्यत्र अर्हार्थे ण्यत्प्रत्ययाङ्गीकारे जगतः सौन्दर्यविशेषाभावेन कथमीशावासार्हत्वमित्यत ईशप्रयोजनाभावेऽपि जगत्प्रयोजनस्य सत्वादित्याह- **प्रवृत्त्यर्थमात्मन इति** ॥ **आकाश इति** ॥ भूताकाशोपादानभूतप्रकृतावित्यर्थः । जगतः प्रकृत्याश्रितत्वकथनेन कथमीश्वराधीनत्वमागतमित्यत आह- **प्रकृतिश्चेति** ॥ **एतस्मिन्खल्वक्षर इति** ॥ 'अक्षरमम्बरान्तधृतेः' (ब्र.सू.१.३.१०) इत्युक्तेः अक्षरशब्दो विष्णुपरः ।

तेनेत्यस्यावृत्तिमभिप्रेत्याह- **तेन कारणेन तेनेशेनेति** ॥ चतुर्थपादे आवृत्तिमप्याश्रित्याह- **यतश्चेति** ॥ अस्मिन् मन्त्रे 'भुञ्जीथाः' इति 'मा गृधः' इति मध्यमपुरुषप्रयोगात् हे मन इति सम्बुध्यन्तम्, त्वमिति कर्तृपदश्चाध्याहार्यम् । अत एव भागवते अष्टमस्कन्धे 'आत्मावास्यमिदं विश्वं यज्जगत्यां जगन्मनः' इत्यत्र मनःशब्दस्य सम्बोधनपरत्वेन विजयध्वजाचार्यैः व्याख्यातत्वात् । अनेनैवाशयेन टीकायां 'न प्रयाचयेत्' इत्यस्य 'भवान्' इति कर्तृपदमध्याहृतम् । स्वतः प्रवृत्त्यशक्तत्वादेवेत्येवकारः विष्णोः प्रयोजनव्यावृत्त्यर्थः ॥ १ ॥

**सत्य-** ईशस्येति भाष्ये समासकरणस्य अभिप्रायमाह- **अनेन आवासमिति** ॥ ननु पूर्वमीशावास्यपदेन जगतः प्राधान्येन ईशस्याप्राधान्येन प्रकृतत्वात्तेनेति कथमीशपरामर्श इत्यतः शब्दतोऽप्राधान्येऽपि, अर्थतः प्राधान्यात् युक्तः परामर्श इत्यत आह- **समास इति** ॥ तेनेति ईशपरामर्श इति व्याख्यातम् । प्रकारान्तरेण व्याचष्टे- **पूर्वार्धेति** ॥ ईशस्वातन्त्र्यजगत्पारतन्त्र्यरूपस्य पूर्वार्धसिद्धतात्पर्यस्य परामर्श इत्यर्थः । उदाहृतप्रमाणे 'स्वतः प्रवृत्त्यशक्तत्वात्' इति यथाश्रुत एव हेतुहेतुमद्भाव इति प्रतीयते । तदयुक्तम् । असिद्धस्य हेतुत्वं सिद्धस्य साध्यत्वमित्यापातात् व्याख्येयमन्त्राननुगुण्यप्रसङ्गाच्चेत्यतो यथावद्व्याचष्टे- **स्वतःप्रवृत्त्यशक्तत्वादेव इति** ॥ वह्निमत्वादेव धूमवानितिवत् व्यापकायोगव्यवच्छेदार्थमेवशब्दोऽध्याहृतः । अत एव यथास्थितहेतुहेतुमद्भावं दर्शयति- **अत ईशावास्यत्वादिति** ॥ 'न प्रयाचयेत्' इत्यत्र 'हेतुमति णिच्' इति प्रतीतिनिरासाय प्रतिपदमाह- **न प्रयाचेतेति** ॥ प्रमाणे णिजन्तत्वेन परस्मैपदप्रयोगे सत्यपि याचतेरात्मनेपदित्वात् प्रयाचेत इत्युक्तम् ॥ १ ॥

**नृसिंह-** तत्त्वं विवक्षुः परमात्मतत्त्वं वक्तुमिच्छुः मनुः विच्छिन्नविषयतृष्णत्वं विधत्ते इति सम्बन्धः ॥ **सोपपत्तिकमिति** ॥ प्रथमार्धतात्पर्यवर्णनं- **तेनेतीति** ॥ प्राधान्येन प्रस्तुतजगत्परामर्शकत्वे तस्यास्वातन्त्र्यव्युत्पादनमयुक्तं प्रसज्येत । ईशस्य तु समासोपसर्जनतया प्रस्तुतत्वादिति भावः । त्यक्तस्येति स्वत्यक्तस्येत्यर्थः । अन्यकर्तृकत्वेऽपि त्यागस्य यत्र कुत्रचित् त्यक्तस्येति वा ज्ञेयम् ॥ **पूर्वार्धेति** ॥ पूर्वार्धतात्पर्येण यदीश्वरस्वातन्त्र्यं अन्यस्यास्वातन्त्र्यं चेति सिद्धम् । तदुभयपरामर्शोऽयमित्यर्थः । अत एवास्यार्थद्वयस्यैव हेतुतया उत्तरत्र

साध्यद्वयसम्बन्धः प्रदर्शयिष्यते । तात्पर्यसिद्धार्थपरामर्शकत्वाभावे पूर्वोत्तरार्धयोः हेतुहेतुमद्भावो न प्रतीयेत । न चैतद्भाष्यानुक्तम्, 'अतो नान्यं प्रयाचयेत्' इत्यतः शब्देनैव तथा व्याख्यातत्वादिति हृदयम् ॥

नन्वीश्वरदत्तेनैव भोजनमयुक्तम् । न हि ईश्वरः स्वयमागत्य धनं प्रयच्छतीत्यत आह- **यदृच्छेति** ॥ 'मा गृधः कस्यस्विद्धनम्' इत्यत्र परकीयद्रव्यापहारेच्छा न कर्तव्येत्येव भासते । अतः कस्याचिद्राजादेस्सकाशादिति व्याख्या । अत एव भाष्येऽपि 'अतो नाऽन्यं प्रयाचयेत्' इत्युक्तम् । ननु मन्त्रे ईशावास्यत्वहेतोः साधकतयोक्तस्य जगदस्वातन्त्र्यस्य भाष्ये कथं तल्लिङ्गतया व्यपदेशः । अन्योन्याश्रयप्रसङ्गादित्यतः सावधारणं योजयति- **स्वत इति** ।। सावधारणत्वे च यथा वह्निमत्वादेव धूमवत्वमित्युक्तौ वह्नेर्धूमप्रयोजकतालाभेन धूमस्य गमकत्वं, वह्नेर्गम्यत्वं च लभ्यते । तद्वदत्रापीति न विरोध इति भावः । 'तद्दत्तेनैव भुञ्जीथाः' इत्यत्र अधिकारिसम्बोधनेन उक्तत्वात् 'नान्यं प्रयाचयेत्' इत्यत्रापि भवान् इत्यध्याहृतम् ॥ १ ॥

**रघु-** ननु आद्यमन्त्रस्यैव व्यर्थत्वात् तद्गतेशावास्यपदव्याख्यानपरमुत्तरभाष्यं सुतरामनर्थकमित्यतो मन्त्रं तावदवतारयति- **उपदिष्टमपीत्यादिना** ॥ उपनिषत् विच्छिन्नतृष्णत्वमाद्येन मन्त्रेण विधत्ते इत्यन्वयः । यद्वा मनुरिति कर्तृपदमध्याहार्यम् । तथात्वे उपनिषदधिकारसिद्ध्यर्थमित्येकपदम् । ननु तत्त्वप्रतिपादनाय प्रवृत्तोपनिषत् विच्छिन्नतृष्णत्वं कथं प्रतिपादयेदित्यत उक्तम्- **तावदिति** ॥ तदेव स्पष्टयति- **तत्त्वं विवक्षुरिति** ॥ 'अनेजदेकम्' इत्यादिनेति शेषः । तर्ह्यर्थभेदादेकवाक्यत्वं न स्यादित्यतो अवान्तरार्थभेदो न दोषायेत्याशयेनोक्तम्- **अधिकार-सिद्ध्यर्थमिति**॥ तत्त्वज्ञानाधिकारस्य वैराग्यसिद्ध्यर्थमित्यर्थः । ननु तत्त्वोपदेशेनैव तत्त्वज्ञानसिद्धेः किं वैराग्यस्य तत्राधिकारत्वकल्पनयेत्यत उक्तम्- **उपदिष्ट-मपीत्यादीतिशब्दान्तम्** ॥ अनेनान्वयव्यतिरेकावुक्तौ । इतिशब्दो हेतौ । अधिकारसिद्ध्यर्थमित्यनेनान्वयः । नन्वेवं 'मा गृधः कस्यस्विद्धनम्' इत्येतावता वैराग्यस्य विहितत्वादन्यद्व्यर्थमित्यत उक्तम्- **सोपपत्तिकमिति** ॥ एतच्चाग्रे स्पष्टम् । एवं मन्त्रमवतार्य भाष्यमवतारयति- **तत्रेति** ॥ मन्त्रे इत्यर्थः । मन्त्रस्यावश्यकत्वे सिद्धे इति वा । ननु विग्रहप्रदर्शनार्थमुत्तरभाष्यस्य प्रवृत्ति-

रुतावास्यपदव्याख्यानार्थम् । नाद्यः । ईशस्यावास्यमीशावास्यमित्येव वक्तव्यत्वात् । न द्वितीयः । ईशस्येत्यस्य व्यर्थत्वात् । आवास्यपदेन तदर्थलाभाच्चेत्यतः उभयोरपि विवक्षितत्वात् नान्यतरवैयर्थ्यमित्यभिप्रेत्यावास्यपदेन आवासयोग्यत्व-लाभप्रकारं दर्शयन् विग्रहमपि दर्शयति- **अनेनेति** ॥ **आवासमर्हतीति** ॥ अनेन आङ्पूर्वात् 'वस निवासे' इत्यस्मात् 'अर्हे कृत्यतृचश्च' (सि.कौ.२८२२) इत्यर्हार्थे ण्यप्रत्यये आदिवृद्धौ आवास्यमिति भवतीत्युक्तं भवति । ननु ईशावास्यमित्यत्र अध्यापकैरीशेति वास्यमिति च पदद्वयस्य पठ्यमानत्वात् कथं भाष्ये एकपदत्वेन व्याख्यानम् । परेणापि अत एव भिन्नपदत्वेन व्याख्यातमिति चेन्मैवम् । 'द्रवत्पाणी शुभस्पती' इत्यादौ अध्यापकपदपाठातिक्रमेण ऋग्भाष्ये प्रकारान्तरेण व्याख्यातत्वेन अध्यापकपाठस्य अपपाठत्वाभिप्रायेण वा, ऋष्यन्तरदृष्टैकपदत्वाभिप्रायेण वा सर्वज्ञभाष्यकृद्व्याख्यानस्य उपपन्नतरत्वात् । न च पदद्वयस्यापि ऋष्यन्तरदृष्टत्वे तेन भाष्यकृदुक्तार्थलाभ इति वाच्यम् । ईशा परमेश्वरेण विभक्तिव्यत्ययेनेशस्य परमेश्वरस्य वास्यं वासार्हमिति व्याख्यानेन तल्लाभोपपत्तेः । अपव्याख्यानं तु अर्थानुपपत्तेरेवानुपपन्नम् । न तु भिन्नपदत्वेन । युक्तं चैकपदत्वाश्रयणेन व्याख्यानम् । 'आत्मावास्यमिदं सर्वं यज्जगत्यां जगन्मनः' इति भागवते एकपदत्वेनैव अर्थतोऽस्यानुवादात् । भिन्नपदत्वस्य अर्थतोऽनुवादपक्षे आत्मवास्यमित्येव स्यान्न तु दीर्घतयेति भाति ॥

॥ **अन्यथाप्रतीतेति** ॥ जगतीशब्दस्य पृथिवीपरत्वे सर्वमस्वतन्त्रं परमेश्वराधीनमिति वक्ष्यमाणार्थालाभात् प्रकृतासङ्गतिः । 'प्रवृत्तये प्रकृतिगम्' इति वक्ष्यमाणप्रमाणविरोधश्च । अतोऽन्यथाप्रतीतित्वमिति भावः ॥ **न प्रतीयत इति** ॥ प्रतीयमानस्य जगत ईशस्य वा परामर्शो नोपपद्यते । जगता ईशेन वा त्यक्तेनेत्यस्य असङ्गतत्वात् । समासे अप्रधानतया प्रकृतस्येशस्य प्राधान्येन परामर्शायोगाच्चेति भावः । ईशपरामर्शपक्षोक्तद्वितीयदोषं परिहरति- **समास इति** ॥ **बुद्ध्या विवेकेनेति** ॥ प्राधान्येनोपस्थितस्य विशिष्टस्य प्रथममन्वयबोधे जाते विशेषणविशेष्यव्यतिरेकेण विशिष्टस्याभावाद्विशेष्यान्वये बाधिते विशेषणेनान्वयस्य न्यायप्राप्तत्वमिति बुद्ध्या विवेकेनेत्यर्थः । एतस्य स्वर्गी ध्वस्तः इत्याद्युदाहरणम् । यद्वा शब्दतःप्राधान्यार्थतःप्राधान्ययोः बुद्ध्या प्राबल्यदौर्बल्यविवेके क्रियमाणे

अर्थतः प्राधान्यस्यैव प्रबलत्वादीशस्य चार्थतः प्रधानत्वाद्युज्यते तेनेति परामर्श इत्यर्थः । 'त्यक्तेन' इत्यस्य दत्तेनेति व्याख्यानेनैव प्रथमदोषपरिहारः सुज्ञान इति भावः । ननु तेनेतीशपरामर्शाङ्गीकारेऽपि वाक्यार्थाव्यवस्थितिरेव जगदीशस्यावास-मर्हीति । प्रकृत्यां जगत् । ईशेन दत्तेन भुञ्जीथाः । कस्यस्विद्राजादेः सकाशात् धनं मा गृध इत्येतेषामन्योन्यान्वयशून्यत्वादित्यतो भाष्यमुपलक्षणमित्यभिप्रेत्य 'स्वतःप्रवृत्त्यशक्तत्वात्' इति वक्ष्यमाणप्रमाणानुसारेण तेनेत्येतत् प्रकारान्तरेण व्याचष्टे- **पूर्वार्धेति** ॥ जगत ईशावास्यत्वे ईशाधीनप्रकृत्याधारत्वे चोक्ते तत एवेशस्य स्वातन्त्र्यं जगतोऽस्वातन्त्र्यञ्च यत् तात्पर्यतः सिद्धं तत्परामर्शश्चायमित्यर्थः । एवञ्च सति ततश्चायमिति वक्ष्यमाणदिशा श्रौतविशेषणानां हेतुहेतुमद्भावेनान्वयः सुगम इति भावः । नन्वेवमपि मन्त्रार्थानुपपत्तिरेव । जगत्स्वप्रवृत्तये ईशस्यावास-मर्हतीत्येतदसिद्धम् । प्रमाणाभावात् । जगत्यां जगदित्यपि अप्रामाणिकम् । प्रामाणिकत्वे वा जगतः प्रकृत्यधीनत्वप्राप्तावपि ईशाधीनत्वाप्राप्तेः। नच प्रकृतेरीशाधीनत्वादीशाधीनप्रकृत्याधारस्य जगतः ईशाधीनत्वमविकलमिति वाच्यम् । प्रकृतेरीशाधीनत्वे प्रमाणाभावादित्यतः सर्वत्र प्रमाणोपन्यासेनासिद्धिं परिहरन् श्रौतपदानां हेतुहेतुमद्भावेन योजनाप्रकारप्रदर्शनपूर्वकं मन्त्रार्थं सङ्गृह्णाति- **ततश्चेति** ॥ इदं सर्वं यत्किञ्च जगदित्येतेषां तच्छब्दाध्याहारपूर्वकमन्वयं प्रदर्शयति- **यत्किञ्च जगदिदं तत्सर्वमिति** ॥ यदिदं किञ्च जगत्तत्सर्वमिति योजना । 'प्रवृत्त्यर्थमात्मनः' इत्यस्यात्मनः प्रवृत्त्यर्थमिति सम्बन्धः । एवमसिद्धिं परिहृत्य 'तेन त्यक्तेन' इत्यत्रास्य साक्षाद्धेतुत्वासम्भवात् अवान्तरसाध्य-मध्याहरति- **तेन ज्ञायत इति** ॥ एवमेव अतोऽपीत्युत्तरवाक्यमपि व्याख्येयम् ॥

ननु ईशावास्यमित्यनेनैव ईशजगतोः स्वातन्त्र्यपारतन्त्र्यसिद्ध्या जगत्यां जगदिति व्यर्थमित्यतः प्रकारान्तरेण ईशादेः स्वातन्त्र्याद्युपपादकत्वान्न वैयर्थ्यमित्याशयेनाह- **किञ्चेति** ॥ न च जगत्यां जगदिति श्रुतेः स्वयं प्रमाणत्वात्तदुक्तेऽर्थे 'आकाश एव' इति (बृ.उप.३.७.८) श्रुत्युपन्यासोऽयुक्त इति वाच्यम् ।

प्रमाणस्य प्रमाणञ्चेत् बलवद्विद्यते मुने ।
ब्रह्मदृष्टानतो मन्त्रान् प्रमाणं सलिलेश्वर॥

इत्यादिप्रमाणानुसारेण बलवत्त्वार्थं वा मीमांसाप्रकारप्रदर्शनार्थं वा तदुपन्यासोपपत्तेः ॥ **आकाश एवेति** ॥ 'दीप्तेराकाशशब्दोक्ता श्रीर्हि सर्वाश्रया मता' इति बृहद्भाष्यदिशा आकाशशब्दश्चित्प्रकृतिवाचक इति भावः ॥

एवमसिद्धिं परिहृत्यासङ्गतिं परिहर्तुं श्रुतावध्याहर्तव्यमाह- **प्रकृतिश्चेति** । अत्राप्यसिद्धिं परिहरति- **एतस्मिन्निति**॥ 'अक्षरमम्बरान्तधृतेः' (ब्र.सू.१.३.१०) इत्युक्तदिशा अक्षरशब्दवाच्यो विष्णुरिति भावः । एवं प्रकारद्वयेन ईशजगतोः स्वातन्त्र्यपारतन्त्र्ये उपपाद्य तत्र तात्पर्यसिद्धं स्वातन्त्र्यं 'तेन त्यक्तेन' इत्यत्र हेतुत्वेन योजयति- **यत एवमिति** ॥ आवृत्तस्य तेनेत्यस्य हेतौ तृतीयान्तत्वमित्याशयेनोक्तम्- **कारणेनेति** ॥ परमेश्वरस्य साक्षाद्राजादिवद्वित्त-दातृत्वमसम्भवीत्यत उक्तम्- **यदृच्छयेति** ॥ भगवदिच्छयेत्यर्थः । भुजधातोः अनेकार्थत्वाद्विवक्षितमर्थं दर्शयति- **भोगं कुर्या इति** ॥ अत्र 'यज्जगत्यां जगन्मनः' इति भागवतसमाख्यया स्वकीयं मनः सम्बोद्ध्य मध्यमपुरुषप्रयोगः कृत इति द्रष्टव्यम् । प्रकारद्वयसिद्धमस्वातन्त्र्यमपि हेतुत्वेन योजयति- **यतश्चेति** ॥ तेनेत्यतः परं कारणेनेत्यनुवर्तते । अप्रयोजकत्वपरिहाराय तस्य दाने सामर्थ्या-भावादित्युक्तम् । ननु 'मा गृधः कस्य स्विद्धनम्' इत्यत्र परकीयद्रव्यापहारेच्छा न कार्येति प्रतीयते । तथात्वे अस्य मन्त्रस्य वैराग्योपदेशरूपत्वं न स्यादित्यतो 'अतो नान्यं प्रयाचयेत्' इति भाष्यं मनसि निधाय व्याचष्टे- **राजादेः सकाशादिति** ॥ ननु प्रमाणे इदं जगत् ईशावास्यं स्वतः प्रवृत्त्यशक्तत्वादिति साध्यसाधनभावः प्रतीयते । सोऽनुपपन्नः । असिद्धेन स्वतः प्रवृत्त्यशक्तत्वेन सिद्धेशावास्यत्वस्य साधनानुपपत्तेः । अनुपयुक्तं चेशावास्यत्वसाधनम् । स्वतन्त्रत्वादीशेन दत्तेन भुञ्जीथाः । राजादेरस्वतन्त्रत्वात् ततो मा गृध इति ह्यर्थोऽत्र विवक्षितः तत्र जगत ईशावास्यत्वसाधनस्य क उपयोगः । किन्तु ईशजगतोः स्वातन्त्र्यपारतन्त्र्य-साधनस्यैवेत्यत एवशब्दाध्याहारेण स्वतःप्रवृत्त्यशक्तत्वस्य साध्यत्वलाभप्रकारं दर्शयति- **स्वतः प्रवृत्त्यशक्तत्वादेवेति** ॥

एवशब्दाभिप्रायमाह- **अन्यथेति** ॥ यदि स्वतः प्रवृत्त्यशक्तं न स्यात्तर्हि प्रयोजनाभावादीशावास्यं न स्यादित्यर्थः । अयं भावः । नात्र यथाश्रुतः साध्यसाधनभावः । किन्तु ईशावास्यत्वात्स्वतः प्रवृत्त्यशक्तमिति विपरीत एव । न

चैव वक्रोक्तिर्व्यर्थेति वाच्यम् । साधनस्य ईशावास्यत्वस्य साध्यस्वतःप्रवृत्त्यशक्तत्वायोगव्यवच्छेदज्ञापनार्थत्वात् । साधनस्य साध्यायोगव्यवच्छेदे ज्ञापिते व्यभिचारशङ्काया हेतूच्छेदेन अप्रयोजकत्वशङ्कायाश्चानुदयात् । एवमेव हि वह्निमत्वादेव धूमवत्त्वमित्यादिप्रयोगो व्याख्यायते शास्त्रेषु । अन्यथा तत्रापि यथाश्रुतसाध्यसाधनभावप्रसङ्गेन बहुविप्लवप्रसङ्गादिति ॥

अवधारणमहिम्ना लब्धं यथास्थितसाध्यसाधनभावं दर्शयति- **अत ईशावास्यत्वादिति** । 'तेन त्यक्तेन' इत्यत्र ईशाधीनत्वस्यैव हेतुत्वं न तु स्वतःप्रवृत्त्यशक्तत्वस्येत्यत ईशाधीनमित्युक्तम् । यस्मादित्यस्य पूर्वोत्तराभ्यां सम्बन्धमभिप्रेत्याह- **यस्मादिति** ॥ ततोऽपीत्यस्य स्वतःप्रवृत्त्यशक्तमीशाधीनमिति पूर्वेणान्वयः । अतःशब्दान्वयार्थं यच्छब्दमनूद्य व्याचष्टे- **यदिति** ॥ यदित्यस्य अव्ययत्वं वा प्रथमाया विपरिणामं वा अङ्गीकृत्येदं व्याख्यानमित्यवगन्तव्यम् । 'तदधीनप्रवृत्तित्वात्' इत्येतत्पूर्वसिद्धानुवादरूपमेव नापूर्वहेतुकथनमित्याशयेनोक्तम्- **एवमुक्तप्रकारेणेति** ॥ अत इत्यस्य पूर्वेणोत्तरेण च सम्बन्ध इत्याशयेनोक्तम्- **अस्ततद्दत्तेनेति** ॥ **अत इति** ॥ यतो जगत्स्वतःप्रवृत्त्यशक्तमतो राजादेरस्वतन्त्रत्वेन दाने सामर्थ्याभावादित्यर्थः । 'प्रयाचयेत्' इति स्वार्थे णिजित्याशयेनाह- **प्रयाचेतेति** । प्रमाणे णिजन्तस्य धात्वन्तरत्वेन परस्मैपदप्रयोगेऽपि वस्तुतो याचतेरात्मनेपदित्वात् प्रयाचेतेत्युक्तमिति ज्ञातव्यम् । उदाहृतभागवतानुसारेण स्वमनः सम्बोध्य मनुनोक्तत्वात् भवानित्युक्तम् ॥ १ ॥

## उपनिषत्

**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः ।**
**एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ २ ॥**

## भाष्यम्

**अकुर्वतः कर्म न लिप्यत इति नास्ति ।**

**अज्ञस्य कर्म लिप्येत कृष्णोपास्तिमकुर्वतः ।**
**ज्ञानिनोऽपि यतो ह्रास आनन्दस्य भवेद्ध्रुवम् ॥**

अतोऽलेपेऽपि लेपः स्यादतः कार्यैव सा सदा ॥
इति नारदीये ॥ २ ॥

**टीका**- तृष्णाविच्छेदवत् स्वोचितकर्मानुष्ठानमप्यावश्यकं ज्ञानार्थिना-मित्येतत् 'कुर्वन्नेव' इति द्वितीयमन्त्रेण विधत्ते । तत्र 'नान्यथेतोऽस्ति' इत्येत-दुर्गमार्थत्वाव्द्याख्याति- **अकुर्वत इति** ॥ ततश्चायं मन्त्रार्थः । शतं समाः शतं वर्षाणि । इह मानुषादिजन्मनि । यज्जिजीविषेत् जीवितुमिच्छेत् । तत्कर्माणि स्वोचितानि कुर्वन्नेव । आमरणं भगवत्पूजात्मकान्यसङ्कल्पित-फलानि स्वोचितानि कर्माणि सर्वथा कुर्यादिति यावत् । कुतः? एवं कर्माणि कुर्वति नरे मनुष्यमात्रेऽपि त्वयि कर्म पापं न लिप्यते। स्वोचितेन असङ्कल्पितेन फलेन कर्मणा भगवत्पूजां कुर्वन्तमल्पाधिकारिणमपि न प्रागुत्तराणि कर्माणि पापानि बाधन्ते । ततश्च ज्ञानाधिकारी स भवतीति यावत् । इतः कर्मकरणादन्यथा । कर्म न लिप्यत इति नास्ति । भगवत्पूजामकुर्वन्तं पापानि बाधन्त एव । ततश्चासौ ज्ञाने नाधिक्रियते अशुद्धचित्तत्वात् । अतः कर्माणि कार्याणीति । अपरे व्याचक्षते । ज्ञानिनः सर्वकर्मत्यागः पूर्वमन्त्रेण विहितः । यथा ईशा ईशित्रा परमेश्वरेण । यत्किञ्च जगत्यां पृथिव्यां जगदिदं तत्सर्वं वास्यमाच्छाद्यम् । तेन कारणेन त्यक्तेन सर्वकर्मत्यागेन । भुञ्जीथाः पालयेथाः । एवं त्यक्तेषणस्त्वं कस्यस्विद्धनं मा गृधः मा काङ्क्षीः । अथवा मा गृधः कस्मात् कस्यस्विद्धनं न कस्यापि । अतो मिथ्याविषये बुद्धिं मा कार्षीरिति । यस्तु नरमात्रोऽल्पज्ञस्तं प्रति कर्मानेन मन्त्रेणोच्यत इति । तदनुपपन्नम् । अज्ञवज्ज्ञनिनोऽपि भगवत्पूजात्मकस्वकर्माकरणे पापलेपसद्भावेन द्वाभ्यामपि तत्कर्तव्यतायाः स्मार्तत्वादिति भावेनाह- **अज्ञस्येति** ॥ कृष्णोपास्तिं 'स्वकर्मणा' इति शेषः । नियतमोक्षस्य कर्मणामकिञ्चित्करत्वादलेपस्य ज्ञानिनः कुतः कर्मलेप इत्यत आह- **यत इति** ॥ ह्रासो भवेत् । 'कृष्णोपास्त्य-करणनिमित्तपापेन' इति शेषः । यतो ह्रासो भवेदतो मोक्षप्रच्युतिरूपलेपरहितेऽपि ज्ञानिनि कर्मलेपः स्यादेव । यत एवमुभयोर्लेपोऽतो द्वाभ्यामपि सा कृष्णोपास्तिः कार्यैवेत्यर्थः ॥

असङ्गगतश्च सर्वस्येशाच्छाद्यत्वकथनम् । न हि तत्कर्माकरणे हेतुः । तथा सत्यज्ञस्यापि तत्प्रसङ्गेनोत्तरमन्त्रविरोधात् । ईशावास्यत्वज्ञानोपलक्षणपक्षेऽप्य-सङ्गतिरेव । न हि जगदीशावास्यमिति जानता कर्म न कार्यमिति नियमोऽस्ति ।

**अद्वैतज्ञानमनेनोपलक्षितमिति चेन्न । विरोधात् । न ह्याच्छाद्याच्छादकयोरभेदो दृष्टपूर्वः । सर्वमपीशावास्यमङ्गीकुर्वताऽवश्यं जगतीपदस्य सर्वोपलक्षणत्व-मङ्गीकर्तव्यम् । ततो वरं प्रकृतिवाचकत्वग्रहणमेव । सर्वार्थलाभात् । न च तत्पक्षस्योपयोगोऽस्ति । 'भुञ्जीथाः' इत्यस्य पालनार्थतायामात्मनेपदविरोधः । धनमिथ्यात्वञ्च प्रत्यक्षादिविरुद्धमिति ॥ २ ॥**

**वामन-** न केवलमीशदत्तभोजनेतरवर्जनादेव पूर्यते । किन्तु कर्तव्यं च भगवदुपासनादिकर्मेत्याह- **कुर्वन्नेवेति** ॥ इह परमेश्वरे मनोवागादिभिः सत्कर्माणि कुर्वन्नेव जीवः शतं समाः जीवेत् । एवं नरे त्वयि अज्ञानादिना क्रियमाणमयोग्यं कर्म न लिप्यते । इतोऽन्यथा न लिप्यत इति नास्ति । किन्तु लिप्यत एव । अत्रायं पाठविशेषः । एवं त्वयि न कर्म लिप्यते नरे इति पूर्ववाक्यम् । नान्यथेतोऽस्ति इत्युत्तरवाक्यम् । तथाऽप्येतत् पूर्वस्यान्तर्भागे पठ्यते संहितायां विषये । कुतः? 'नरा वा शंसम्' (ऋ.सं.१०.६४.३) इत्यादाविवान्तःपदन्यायेनान्तर्वाक्यस्यापि सम्भवात् । एतदभिप्रायं व्यक्तं वक्ति- **अकुर्वत इति** ॥ भगवद्विषयकर्माणि अकुर्वतः पापं कर्म न लिप्यत इति नास्ति । लिप्यत एवेत्यर्थः । अत्र नारदीयवचनञ्चाह- **अज्ञस्येति** ॥ अज्ञस्य कर्मलेपो नाम ज्ञानोत्पत्तिनिरोधः । ज्ञानिनस्त्वानन्दह्रास इति भेदः । अतस्तत्परिहारार्थं भगवदुपासनादिकं कार्यमेवेत्यर्थः ॥ २ ॥

**वादि-** न प्रागुत्तराणि कर्माणि पापानि बाधन्त इत्यस्य निरन्तरभगवत्पूजाया अपि सकलपापप्रायश्चित्तरूपत्वादिति भावः । 'न हि जगदीशावास्यमिति जानता' इत्यत्र रात्रौ तमसा, अह्नि हिमान्या च जगत आच्छाद्यत्वं जानताऽपि सन्ध्यावन्दनादिकर्मकरणदर्शनादिति भावः । अद्वैतज्ञानमनेनोपलक्ष्यत इत्येतदपि न प्रकृतोपयोगि । अद्वैतज्ञानवता मायावादिना आचार्येणैव जपादिकर्मणां क्रियमाणत्वात् । अङ्गीकृत्य दूषणान्तरमाह- **न हीति** ॥ न च तत्पक्षेऽस्योपयोगोऽस्तीत्यस्य ईशाच्छाद्यस्वर्गाद्यर्थं तैरपि यज्ञादेः क्रियमाणत्वादिति भावः । 'भुजोऽनवने' इत्यवनार्थे आत्मनेपदनिषेधादिति भावेनाह- **आत्मनेपदविरोध इति** ॥ किञ्च ईशा ईशित्रा आच्छाद्यं जगदिति च न मायावादिना वक्तुं शक्यते । ईश्वरो मायया अविद्यमानमेव जगद्दर्शयतीति हि

तन्मतम् । कथमन्यथा दृश्यत्वेन मिथ्यात्वं वदेत् । अपि च रक्षसा रसातले आच्छादितजगतः वराहरूपिणा भगवता आच्छादकजलादुद्धृत्य प्रकाशितत्वाच्च कथमीशाच्छाद्यत्वम् । 'तमेव भान्तमनुभाति सर्वम्' (आ.उ.४.१२) इति च तत्पक्षः । अतोऽपि नेशाच्छाद्यत्वम् । किञ्च -

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्॥ (गीता.१५.१२)

इति गीतायां जगदीशेन कृष्णेनैवोक्तत्वात् कथमीशाच्छाद्यं जगत् । अतो यत्किञ्चिदेतत् । प्रत्युत 'तदव्यक्तमाह हि' (ब्र.सू.३.२.२३) 'यत्तदद्रेश्यमग्राह्यम्' (आ.उ.१.६) 'अदृश्यत्वादिगुणको धर्मोक्तेः'(ब्र.सू.१.२.२१) 'मायायवनिकाच्छन्नमहिम्ने ब्रह्मणे नमः' इत्यादिश्रुतिस्मृतिभ्यः स्वमते ब्रह्मैव आच्छाद्यम् । ब्रह्मणो जगदारोपाधिष्ठानत्वाङ्गीकाराच्च स्वप्रक्रियया ब्रह्मैव आच्छाद्यम् । एवञ्च ईशाच्छाद्यत्वेन त्यागे ब्रह्मण एव त्यागप्रसङ्गः । न तु कर्मणः । अतोऽपि स्वाज्ञानविजृम्भितमेवेदं व्याख्यानम् । अपि च जगदीशाच्छाद्यं चेत् कर्म कुतः त्याज्यम् । कर्मणोऽपि जगदन्तःपातित्वादिति चेत् तर्हि मोक्षसाधनमनोवृत्तिरूपापरोक्षज्ञानस्यापि तत एवोपेक्ष्यत्वं स्यात् । किञ्च इन्द्रवाय्वादिरूपतया महाज्ञानिभिः पाण्डवैरेव महता प्रयत्नेन राजसूयाश्वमेधादिकर्मणां कृतत्वात्कथं ज्ञानिना कर्म त्याज्यम् । किञ्च महाज्ञानिनं पार्थं प्रति 'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन'(गीता.२.४७) इति निवृत्तरूपकर्मण्येव ज्ञानिन एवाधिकारस्योक्तत्वात् । अनेनैव क्वचित् कर्मणां त्याज्यत्वोक्तिः काम्यकर्मणामेवेति सूचितम् ।

नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ (गीता.१८.७)

इति सन्ध्यावन्दनादिकर्मणामत्याज्यत्वस्यैव भगवता कथनाच्च । 'पालयेथाः' इत्यत्र पालनविषयतया कर्म च न परेण वक्तुं शक्यम् । ईशाच्छाद्यसकलजगतामुपेक्षणे सति आत्मैव ह्युर्वरितः । एवञ्च स्वात्मानमेव त्वं पालयेथा इत्युक्तं स्यात् । तच्च कर्तृकर्मभावविरोधान्नित्यस्यात्मनः पाल्यत्वायोगाच्च अयुक्तम् ।

अतो मर्कटः स्वकरगतरत्नमालाया इव उपनिषदामपकर्तैव परो न व्याकर्तेति युक्तमुत्पश्यामः ॥२॥

**श्रीनि-** यत् यदा । तत् तदा । ईट् ईशौ ईश इत्येवं ईट्शब्दस्य तृतीया ईशेति । अत ईशित्रेति व्याख्यातम् । 'वस आच्छादने' इति धातोः वास्यमाच्छाद्यमित्युक्तम् । द्वाभ्यां ज्ञान्यज्ञानिभ्याम् । तस्य भगवत्पूजात्मकस्वकर्मणः । नन्वत्र कृष्णोपास्त्यकरण एव अनर्थोक्त्या तस्या एव कर्तव्यता न स्वविहितकर्मण इत्यत आह- **स्वकर्मणेति** ॥ **शेष इति** ॥ स्ववर्णाश्रमोचितकर्मणेत्यर्थः । कृष्णेत्यतःपूर्व 'स्वकर्मणा' इति शेषः । 'अलेपेऽपि' इत्यस्य व्याख्यानं 'मोक्ष...' इति । लिङ्गभङ्गरूपेत्यर्थः । आनन्दह्रासेत्यनन्तरं 'स्वकर्मणा' इति शेषः । परव्याख्यानस्य प्रमाणोदाहरणेनैव दूषितत्वात् स्वयं दूषणान्तरं चाह- **असङ्गतं चेति** ॥ ननु कथमसङ्गतम् । ज्ञानिना कर्म न कर्तव्यं सर्वस्येशाच्छाद्यत्वादिति ज्ञानिना कर्माकरणे हेतुत्वेन सार्थक्यादित्यत आह- **न हीति** ॥ तत्प्रसङ्गेन कर्माकरणप्रसङ्गेन । तथा च अज्ञानिना कर्म न कर्तव्यं सर्वस्य ईशाच्छाद्यत्वादिति सत्प्रतिपक्षत्वमिति भावः । इष्टापत्तिनिरासाय उक्तम् - **उत्तरेति** ॥ अज्ञं प्रति कर्मविधायकोत्तरमन्त्र इत्यर्थः ॥ **ईशावास्यत्वज्ञानेति** ॥ 'ईशावास्यपदेन' इति शेषः । सर्वस्य ईशाच्छाद्यत्वज्ञानित्वात् ज्ञानिना कर्म न कर्तव्यमित्युच्यते । न हि एवं अज्ञः अतस्तेनावश्यं कर्म कार्यमेवेत्याशयः । नियामकमाशङ्कते- **अद्वैतेति** ॥

अनेन ईशावास्यपदेन जगत ईशाच्छाद्यत्वं नाम ईशाभेदेन अद्वैतं ब्रह्मैकमेव तत्त्वमिति ज्ञानम् । तद्वत्वात् कर्मादिकं ज्ञानिना न कार्यम् । इतरस्यानेवंविधत्वात्तेन कार्यमित्याशयः । विरोधमुपपादयति- **न हीति** ॥ **अवश्यमिति** ॥ अन्यथा पृथिव्यां विद्यमानस्य सर्वजगत एव ईशाच्छाद्यत्वप्राप्त्यान्तरिक्षादिलोकस्थितस्य सर्वस्यापि जगतः ईशाच्छाद्यत्वासिद्धेरित्याशयः । सर्वोपलक्षणत्वं सर्वलोकोपलक्षणत्वम् ॥

॥ **सर्वार्थेति** ॥ सर्वस्यापि पदार्थस्य ईशाधीनत्वलाभादित्यर्थः । 'आकाश एव' इत्यादि श्रुतेः सर्वस्यापि प्रकृतिस्थत्वादित्याशयः । अस्य सर्वजगतः पृथिव्याश्रितत्वकथनस्य । अस्मत्पक्षे तु सर्वजगदाधारप्रकृतिरपि यदा भगवदधीना तदा किमु वाच्यम्, सर्वं जगदीशाधीनमिति कैमुत्यकथनपरत्वेन सार्थक्यमिति

ध्येयम् ॥ **आत्मनेपदेति** ॥ 'भुजो अनवने' अवनं रक्षणं पालनमिति यावत् । पालनभिन्नार्थ एव भुजधातोः आत्मनेपदविधानात् । त्वया च भुजधातोः पालनार्थकत्वोक्तेः भुञ्जीथा इत्यात्मनेपदविरुद्धमित्यर्थः ॥ **प्रत्यक्षादीति** ॥ धनसत्यताग्राहीत्यर्थः । आदिपदेन अर्थक्रियाकारित्वाद्यनुमानागमयोः सङ्ग्रहः ॥ २ ॥

**छलारी**-'कुर्वन्नेवेह कर्माणि' इति मन्त्रे यथास्थितान्वयपक्षे स्वोचित-कर्मानुष्ठानस्य आवश्यकत्वाप्रतीतेः तदन्वयपूर्वकं मन्त्रार्थमाह- **ततश्चायं मन्त्रार्थ इति** ॥ अत्र शतं समाः शतवर्षाणि जिजीविषेत् जीवितुमिच्छेत् इति यत् शतवर्षजीवनापेक्षणं तत्कर्माणि स्वोचितानि कुर्वन्नेव । स्वोचितकर्मकरण-पूर्वकमेव कुर्यादित्यक्षरार्थः । अस्य तात्पर्यमाह- **आमरणमिति** ॥ 'एवं त्वयि' इत्येतत्सङ्गमयितुं पृच्छति- **कुत इति** ॥ किं फलमित्यर्थः । एवमित्यस्यार्थः- **कर्माणि कुर्वतीति** ॥ **नरे मनुष्यमात्र इति** ॥ नरेति विशेषणस्य सार्थक्याय मात्रग्रहणम् । अपिशब्दः कर्मकर्तॄणां देवानां कैमुत्येन पापलेपाभावसूचनार्थः । 'न ह वै देवान् पापं गच्छति' इति श्रुतेः । त्वयीत्यपि स्वायम्भुववचनं स्वात्मानं प्रति एव । एतत्पदजातस्य तात्पर्यमाह- **स्वोचितेनेति** ॥ **प्रागुत्तराणीति** ॥ कर्मकरणात्पूर्वं कृतानि करणकाले वा ॥ **न बाधन्त इति** ॥ 'न लिप्यते' इत्यस्यार्थोऽयम् । क्रियमाणसत्कर्मनाशकानि भवन्तीत्यर्थः ॥

॥ **पूर्वमन्त्रेणेति** ॥ 'ईशावास्यमिदम्' इति मन्त्रेणेत्यर्थः ॥ **ईशा ईशित्रेति** ॥ 'ईश ऐश्वर्ये' इत्यस्य कर्तरि क्विबन्तस्येदं रूपमिति भावः ॥ **वास्यमाच्छा-द्यमिति** ॥ 'वस आच्छादने' इत्यतः 'ऋहलोर्ण्यत्' इति ण्यत्प्रत्ययः । ईशमायावच्छिन्नमिति यावत् । तेन कर्मादिजगतो मिथ्यात्वेन त्यागार्हत्वात् सर्वकर्म त्यक्त्वा पृथिवीपालनं कुर्विति समुदायार्थः । 'भुज पालनाभ्यवहारयोः' इति भुज धातोः पालनार्थत्वमाश्रित्येदमुक्तम् ॥ **एवं त्यक्तेषण इति** ॥ ईषणात्रयसत्त्वे कर्मत्यागायोगात् कर्मत्यागे ईषणात्यागलाभादिति भावः ॥ **नरमात्रोऽल्पज्ञ इति** ॥ 'न कर्म लिप्यते नरे' इत्युक्तिबलेन अज्ञानी लभ्यत इति भावः । अनेन 'कुर्वन्नेवेह कर्माणि' इति मन्त्रेणेत्यर्थः ॥ **कृष्णोपास्तिमिति** ॥ कृष्णपूजामित्यर्थः ॥ **नियतमोक्षत्वेनेति** ॥ ज्ञानिन इत्युत्तरेणान्वयः ॥ **अकिञ्चित्करत्वादिति** ॥ मोक्षोपयोगाभावादित्यर्थः ॥ **कर्मलेप इति** ॥

कर्माकरणनिमित्तानन्दह्रास एव लेप इत्यर्थः ॥ **अद्वैतज्ञानमनेनेति** ॥ स्वस्य ब्रह्मत्वज्ञाने ब्रह्मणः कर्माभावादित्यर्थः । अनेन ईशावास्यमिति पदेनेत्यर्थः ॥ **सर्वार्थलाभादिति** ॥ सर्वस्य जगतः प्राकृतत्वादिति भावः ॥ **न च तत्पक्ष इति** ॥ जगदित्यनेनैव सर्वस्यापि लाभात् पृथिवीवाचकजगतीशब्दग्रहणे तु प्रत्युत विरोधादिति भावः ॥ **आत्मनेपदविरोध इति** ॥ 'भुजोऽनवने' इति पालनार्थ आत्मनेपदनिषेधादिति भावः ॥ २ ॥

**सत्य-** स्वोचितकर्मकरणं जीवनार्थमिति प्रतीतिनिरासायाह- **आमरणं भगवत्पूजात्मकानीति** ॥ 'अतोऽलेपेऽपि लेपः स्यात्' इत्येतद्विरुद्धमिति प्रतीतिनिरासाय व्याचष्टे- **मोक्षप्रच्युतिरूपलेपरहितेऽपीति** ॥ उपलक्षणमेतत् । अपाङ्क्तेयत्वादिरूपलेपरहितेत्यपि द्रष्टव्यम् । ननु मयापि जगत्यामिति पदस्य पृथिवीवाचकत्वमेवाङ्गीकृत्य 'इदं सर्वम्' इत्यस्य पृथिवीस्थितजगन्मात्र-परत्वमङ्गीक्रियते । तथा च भवत्पक्षे को विशेष इत्यत आह- **सर्वार्थलाभादिति** ॥ भावप्रधानो निर्देशः । सर्वशब्दस्येति शेषः । पूर्वेण सम्बन्धः। अस्मत्पक्षे सर्वशब्दस्यासङ्कुचितार्थत्वलाभ एव विशेष इति भावः ॥ **आत्मनेपदविरोध इति** ॥ 'भुजोऽनवने' (सि.कौ.२७६७) इति सूत्रेण भुजधातोः पालनातिरिक्त एवार्थे आत्मनेपदस्य विहितत्वात् । पालनार्थत्वे तद्विरोध इत्यर्थ इति भावः ॥ २ ॥

**नृसिंह-**'कुर्वन्नेव' इत्यत्र शतवर्षमात्रं कर्म कर्तव्यं इति प्रतीयते । 'कर्मणा बध्यते जन्तुः' इत्यादिना कर्मणां बन्धकत्वोक्तेः, कथञ्च मुमुक्षुं प्रति कर्म विधानमित्यतः श्रुतितात्पर्यमाह- **आमरणमिति** ॥ 'शतं समाः' इत्यत्र न आमरणं कर्तव्यतैवाभिप्रेता । प्रायेण शतवर्षाधिकजीवित्वाभावात्तथोक्तिः, कर्मणां बन्धकत्वं तु भगवत्पूजात्मककर्मणामन्यत्रैव, विष्णवाराधनात्मकनिवृत्तकर्मणां तु ज्ञानाङ्गत्वान्न बन्धकत्वम् । 'यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः' (गीता.३.९) 'यज्ञायाचरतः कर्म समग्रं प्रविलीयते' (गीता.४.२३) इत्यादेरिति भावः । ननु स्वोचितेन कर्मणा अनुष्ठितेन प्रागुत्तरपापश्लेषस्य कथनस्य कथं प्रकृतोपयोग इत्यत आह- **ततश्चेति** ॥ बाधन्त एवेत्यवधारणेन नञ्द्वयाभिप्राय उक्तः ॥ **भुञ्जीथाः पालयेथा इति** ॥ 'भुज पालनाभ्यवहारयोः' इति धातुव्याख्यानादिति भावः । ननु अज्ञस्येत्यादिवाक्ये भगवदुपास्त्यकरणे पापलेपः

कथ्यते । अतः कथं ज्ञान्यज्ञानिभ्यां कर्म कर्तव्यतापरमिदं वाक्यमित्यत आह- **सर्वकर्मणेति शेष इति** ॥ तथा च कृष्णोपास्तिं कृष्णसेवामित्यर्थः पर्यवस्यति । पूर्वपक्षे उपपत्तिविरोधमाह- **असङ्गतं चेत्यादिना** ॥ **तथा सतीति** ॥ सर्वस्य ईशाच्छाद्यत्वमज्ञं प्रत्यविशिष्टमिति अज्ञस्यापि कर्माकरणप्रसङ्गेन उत्तरमन्त्रे तं प्रति तद्विधानानुपपत्तिरिति भावः । ननु ज्ञानिप्रसङ्गे ईशाच्छाद्यत्वज्ञानस्य विवक्षितत्वात् अज्ञस्य च तदभावादित्यत आह- **ईशावास्येति** ॥ **अद्वैतेति** ॥ अद्वैतज्ञानिना प्रत्यवायपरिहारार्थं न कर्मानुष्ठेयम् । ज्ञानिनः अलेपत्वात् । नापि फलेच्छया मुमुक्षुत्वात् । नाप्यनादिवासनानुगृहीतपामरमतिदुरवगमैक्यं अन्तःकरणशुद्धिद्वारा तदनुष्ठेयं सिद्धफलत्वात् । नापि मुक्तावतिशयलाभार्थं तदिति वाच्यं निर्गुणतादात्म्यरूपमोक्षे तदभावादिति भावः ॥ **सर्वोपलक्षणत्वमिति** ॥ सर्वलोकोपलक्षणत्वमित्यर्थः । सर्वस्यापि पदार्थस्य पृथिवीनिष्ठत्वाभावादिति भावः ॥ **सर्वार्थेति** ॥ प्रकृतेः सर्वाश्रयत्वस्य श्रुतिसिद्धत्वादिति भावः । नन्वस्तु प्रकृतिवाचकत्वमेव किं नः क्षतमित्यत आह- **न चेति** ॥ समस्तं जगत्प्रकृत्याश्रितमित्यवगमस्य कर्माकरणहेतुत्वात् न च प्रकृतिनिष्ठता कथं न सर्वस्य ईशाच्छाद्यतोक्तावुपयुज्यते व्याप्तिविरहादिति भावः । नन्वीशस्यावास-योग्यमीशावास्यमिति एकपदत्वाश्रयणे प्रसिद्धपदपाठविरोधः । पदद्वयं हि पठन्ति वृद्धाः । तस्मात् पूर्वपक्ष्यभिहित एवार्थ इति चेन्न, तत्रानुपपत्तेरुक्तत्वात् 'सपक्षं महिषं मृगं', 'द्रवत्पाणी शुभस्पती', 'अरुणो मा सकृद् वृकः' 'यदिन्द्र चित्र मेहना' इत्यादविव प्रसिद्धव्यतिक्रमेणापि व्याख्यानसम्भवादिति । 'आत्मावास्यम्' इति (भाग.८.१.१०) भागवतसमाख्यया 'स्वतःप्रवृत्त्यशक्तत्वात्' इति ब्राह्मसमाख्यया च तथैव व्याख्येयत्वाच्च । पदद्वयेन पठनं तु अर्थान्तरोपयुक्तमिति बोध्यम् ॥ २ ॥

**कल्ला**- 'ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात्' (ब्र.सू.३.४.५०) इति तृतीयचतुर्थपाददशमनये 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ.उ.४.४.५) इति दर्शनार्थं श्रवणादि विधीयते । तच्च दर्शनमैहिकमेव । प्रारब्धप्रतिबन्धाभावे -

श्रुत्वात्मानं मतिपूर्वं ह्युपास्य इहैव दृष्टिं परमस्य विन्देत् ।
यद्यारब्धं कर्म निबन्धकं स्यात्प्रेत्यैव पश्येद्योगमेवान्ववेक्ष्य ॥ (सौ.श्रु)

इति भाष्ये टीकायाञ्च साधनपरिपाके प्रारब्धकर्मप्रतिबन्धकवशात्तज्जन्मनि अपरोक्षज्ञानं न भवति किन्तु जन्मान्तर इत्युक्तम् ॥

ईशावास्योपनिषद्भाष्यटीकायां -

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥

इत्यत्र अकुर्वतः कर्म न लिप्यत इति नास्ति -

अज्ञस्य कर्म लिप्येत कृष्णोपास्तिमकुर्वतः।
ज्ञनिनोऽपि यतो ह्रास आनन्दस्य भवेद्ध्रुवम् ॥
अतोऽलेपेऽपि लेपस्स्यादतः कार्यैव सा सदा' ॥ इति नारदीये ॥

इति भाष्यस्य व्याख्यानरूपायां तत्र 'नान्यथेतोऽस्ति' इत्येतद्दुर्गमार्थत्वाद्-व्याख्याति- अकुर्वत इति ॥ तथाचायं मन्त्रार्थः। शतं समाः शतं वर्षाणि । इह मानुषादिजन्मनि । यज्जिजीविषेत् तत्, कर्माणि स्वोचितानि कर्माणि । कुर्वन्नेव, आमरणं भगवत्पूजात्मकानि असङ्कल्पितफलानि स्वोचितानि कर्माणि सर्वथा कुर्यादिति यावत् । कुतः? एवं कर्माणि कुर्वति नरे मनुष्यमात्रेऽपि त्वयि पापं कर्म न लिप्यते । स्वोचितेनासङ्कल्पितफलेन कर्मणा भगवत्पूजां कुर्वन्तमल्पाधिकारिण-मपि न प्रागुत्तराणि पापानि बाधन्ते । ततश्च ज्ञानाधिकारी स भवतीति यावत् । अज्ञवज्ज्ञनिनोऽपि भगवत्पूजात्मककर्माकरणे पापलेपसद्भावेन द्वाभ्यामपि तस्य कर्तव्यतायाः स्मार्तत्वादिति भावेनाह- **अज्ञस्येति** ॥ कृष्णोपास्तिं 'स्वकर्मणा' इति शेषः । नियतमोक्षत्वेन कर्मणामकिञ्चित्करत्वादलेपस्य ज्ञानिनः कथं लेप इत्यत आह- **यत इति** ॥ ह्रासो भवेत् । 'कृष्णोपास्त्यकरणनिमित्तपापेन' इति शेषः । यतो ह्रासो भवेदतो मोक्षप्रच्युतिरूपलेपरहितेऽपि ज्ञनिनि कर्मलेपः स्यादेव । यत एवमुभयोर्लेपोऽतो द्वाभ्यामपि कृष्णोपास्तिः कर्तव्येत्यत्र शङ्क्यते । साधनपरिपाकादपरोक्षज्ञानोत्पत्तौ सञ्चितादेरपि प्रतिबन्धकत्वसम्भवेन प्रारब्धस्य प्रतिबन्धकतया सूत्रभाष्यादौ विशिष्य निर्देशायोगात् । नचेशावास्यभाष्यटीकोक्तरीत्या

स्ववर्णाश्रमोचितकर्मानुष्ठानादिरूपसाधनपरिपाके सति प्रागुत्तराणि कर्माणि न प्रतिबन्धकानीति विशिष्य प्रारब्धनिर्देशोऽयुक्त इति वाच्यम् । ज्ञानान्येनापि सञ्चितागामिनोर्नाशाश्लेषाङ्गीकारे 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' (ब्र.सू.४.१.१३) इति सूत्रभाष्यविरोधप्रसङ्गात् । ततः पूर्वमेव कर्मणां नाशाश्लेषप्राप्तेरिति ॥

अत्रोच्यते । सञ्चितादिभेदेन त्रिविधमपि कर्म द्विविधम् । मोक्षप्रतिबन्धकं दृष्टिप्रतिबन्धकञ्चेति । तत्र 'तदधिगम...' इति सूत्रभाष्यादिकमाद्यकर्मपरम् । उदाहृतेशावास्यसूत्रभाष्यादिकं द्वितीयकर्मपरम् । नचात्र मानाभावः । 'तदधिगम...' इति सूत्रोक्ताया तद्दर्शनादिति युक्तेरत्रापि साम्यात् । 'कुर्वन्नेव' इति श्रुतेः 'अज्ञ...' इति स्मृतेश्च श्रुत्यर्थापत्तिविधयाप्रमाणत्वात् । अनेन मुक्तावानन्दह्रासे यथा विकर्मकरणं 'ह्रासोऽपि मानुषादीनामानन्दस्य विकर्मणा' इत्युक्तेः । तथा विहिताकरणेनापि 'कृष्णोपास्तिमकुर्वतः । ज्ञानिनोऽपि यतो ह्रास आनन्दस्य भवेद्ध्रुवम्' इत्युक्तेरिति ॥

एवञ्च मोक्षप्रतिबन्धककर्मसु अपरोक्षज्ञानमवधीकृत्य पूर्वत्वोत्तरत्वव्यवस्था, ज्ञानप्रतिबन्धककर्मसु टीकोक्तप्रागुत्तरत्वव्यवस्था कृष्णोपास्तिशब्दितस्वोचिता-सङ्कल्पितफलभगवत्पूजात्मककर्मादिसाधनपरिपाकमवधीकृत्येति ज्ञेयम् । 'अज्ञस्य कर्म लिप्येत कृष्णोपास्तिमकुर्वतः' इति वचनं मनसि निधाय स्वोचितेना-सङ्कल्पितफलेन कर्मणा भगवत्पूजां कुर्वन्तमल्पाधिकारिणमपि न प्रागुत्तराणि कर्माणि बाधन्त इति टीकोक्तेरिति गुरुचरणाः प्राहुः ॥ २ ॥

**रघु-** प्रथममन्त्रे वैराग्यरूपाधिकारप्रतिपादनानन्तरं द्वितीयमन्त्रे तत्त्वं प्रतिपाद्यत इति भ्रमनिरासाय तत्प्रतिपाद्यं सोपपत्तिकं दर्शयति- **तृष्णाविच्छेदवदिति** ॥ उपदिष्टमपि तत्त्वं स्वोचितकर्मानुष्ठानेन शुद्ध एव हृदयेऽवतिष्ठते नान्यत्रेति पूर्ववदुपपादनमिति ज्ञेयम् । नन्वयं वतिः प्रथमान्ताद्व्याख्यातव्यः । न चासौ युक्तः । 'तत्र तस्येव' (सि.कौ.१७७९) इति सूत्रविरोधादिति चेत् । न । तत्र तस्येवेत्यस्य प्रायिकत्वात् । अन्यथा 'पूर्ववत्सन' (सि.कौ.२७३४) इत्यत्र पूर्वस्मादिवेति पञ्चम्यन्तात् वतिर्न स्यात् । कार्यत्वानुमाने घटवदित्यादिप्रयोगनिर्वाहाय कुसुमाञ्जलिकारादिभिः प्रायिकत्वेन व्याख्यातत्वाच्च ।

**उक्तश्च** टीकाकृता विष्णुतत्त्वनिर्णयटीकायां 'तत्र तस्येव' इति लक्षणस्य प्रायिकत्वेनाभियुक्तैर्व्याख्यातत्वात् घटवदिति युज्यत इति । विस्तृतं चैतदाकरे 'विद्धवदिति च्छान्दसो द्वितीयान्ताद्वतिः' इति । सुधावाक्याभिप्रायस्तु तत्रैवावगन्तव्यः । इतिशब्दो हेतौ **॥ एतदिति ॥** कर्मानुष्ठानं वा तदावश्यकत्वं वेत्यर्थः । ननु श्रुतौ कर्माणि कुर्वन्नेव जिजीविषेदित्ययुक्तम् । कर्मकरणमात्रस्य विधेयत्वेन जीवनेच्छाविधानस्य व्यर्थत्वात् । इच्छाया अविधेयत्वाच्चेत्यतो यत्तच्छब्दाध्याहारपूर्वकमुद्देश्यविधेयभावं व्यत्यासेन दर्शयति- **यज्जिजीविषेदिति ॥** यच्छब्दयोगात् जीवनेच्छाया अनुवाद्यत्वमेव न विधेयत्वमिति भावः । जीवनमिच्छेदिति यत् तत्कर्मकरणपूर्वकमेवेत्यर्थः । जीवनेच्छाकर्मकरणयोः समानकालत्वोक्तेरभिप्रायमाह- **आमरणमिति** ॥ यद्वा ननु कर्माणि कुर्यादित्येवालं किं जिजीविषेदित्यनुवादेनापीत्यतः कर्मकरणे नैरन्तर्यरूपेत्थम्भाव-ज्ञापकं तत् । तथाभूतस्यैव ज्ञानोपयोगित्वादित्याशयेन तात्पर्यार्थमाह- **आमरणमिति**॥ एवशब्दार्थः- **सर्वथेति** ॥

पूर्वार्धोक्तार्थे हेतुत्वेन उत्तरार्धमवतारयति- **कुत इति** ॥ ज्ञानार्थिना स्वोचितानि कर्माणि कुतः कार्याणि । तेषां साक्षाज्ज्ञानकारणत्वाभावात् इत्याक्षेपार्थः । एवमित्यनुवादेन कर्माणि कुर्वतीति व्याख्यानम् ॥ एवम्भूते त्वयीत्युक्तं भवति । कर्ममात्रस्य लेपकत्वाभावात् पापमित्युक्तम् । काम्यपुण्योपलक्षणमेतत् । एवमुत्तरत्रापि द्रष्टव्यम् । ननु कर्माणि कुर्वतीत्यत्र कर्मशब्देन पापरूपाणि विवक्षितानि उत स्वोचितानि । नाद्यः । पापानि कुर्वति पापं न लिप्यत इत्यस्य व्याहतत्वात्, असङ्गतत्वाच्च । न द्वितीयः । स्वोचितानि कर्माणि कुर्वति पापप्रसक्तेरेव अभावेन पापं न लिप्यत इति निषेधानुपपत्तिः । न च पापशब्देन श्रवणादिप्रागुत्तरपापानां विवक्षितत्वान्नाप्रसक्तिरिति वाच्यम् । तर्हि न लिप्यत इति लेपाभावोक्त्ययोगात् । लेपाभावो हि नरकाद्यनर्थाभावः । न चासौ ज्ञानार्थिकृतस्वोचितकर्मानुष्ठानमात्रेण शक्योऽङ्गीकर्तुम् । सिद्धान्तविरुद्धत्वात् प्रमाणविरुद्धत्वाच्च ॥

ज्ञानार्थिना स्वोचितानि कर्माणि कुतः कार्याणीति शङ्कायां ज्ञानसाधनत्वे वाच्ये कर्मणामलेपकत्वोक्तेः असङ्गतिश्चेत्याशङ्काः परिहरन् अक्षरार्थमुक्त्वा

तात्पर्यार्थमाह- **स्वोचितेनेत्यादिना यावदित्यन्तेन** ॥ अत्र पूजामित्यन्तेन कर्माणीत्यस्य, अल्पाधिकारिणमपि इत्यनेन मनुष्यमात्रेऽपि इत्यस्य, प्रागुत्तराणि पापानि इत्यनेन समुदायैकवचनान्तपापमित्यस्य, न बाधन्त इत्यनेन न लिप्यत इत्यस्य तात्पर्यमुक्तमित्यवगन्तव्यम् । अत्र न बाधन्त इत्यस्य ज्ञानविघ्नकराणि न भवन्तीति वा, अन्तःकरणस्य अशुद्धिसम्पादकानि न भवन्तीति वा अर्थस्य विवक्षितत्वान्नापसिद्धान्तादिदोषावकाशः । अत एव ततश्च ज्ञानाधिकारी स भवति इत्येतद् ग्रन्थोक्तः ततश्चासौ ज्ञाने न अधिक्रियत इति वक्ष्यमाणश्च हेतुहेतुमद्भावः श्लिष्टो भवतीति ज्ञातव्यम् । एवमन्वयेन स्वोचितकर्मणां ज्ञानसाधनत्वमुपपाद्य व्यतिरेकेणापि तदुपपादनाय प्रवृत्तं 'नान्यथेतोऽस्ति' इति श्रुतिशेषं व्याख्याति- **इत इति** ॥

अनेन अकुर्वत इति भाष्यमितोऽन्यथेत्यस्य तात्पर्यकथनरूपमित्युक्तं भवति । अक्षरार्थमुक्त्वा पूर्ववत्तात्पर्यार्थमाह- **भगवदिति** ॥ बाधन्त इत्यस्य पूर्व एवार्थो द्रष्टव्यः । 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः' इति न्यायं मनसि निधाय नञ्द्वयाभिप्रायमाह- **बाधन्त एवेति** ॥ एवमन्वयव्यतिरेकाभ्यां स्वोचितकर्मणां ज्ञानार्थिना अवश्यानुष्ठेयत्वमुपपाद्य उपसंहरति- **अत इति** ॥ 'ज्ञानार्थिना' इति शेषः । कर्माणि स्वोचितानि । एतच्च श्रुतौ शेषपूरणाभिप्रायेण उक्तमिति ज्ञातव्यम् । यद्यपि पुरुषार्थाधिकरणे 'नियमाच्च'(ब्र.सू.३.४.७) इति सूत्रभाष्ययोः अयं मन्त्रोऽपरोक्षज्ञानिपरत्वेन व्याख्यातः । तथापि अस्य व्याख्यानान्तरत्वान्न विरोध इति ज्ञातव्यम् । ज्ञानिनोऽपि कर्मानुष्ठानस्य आवश्यकताप्रतिपादकमज्ञस्येति प्रमाणं भाष्यकृद्व्याख्यानसमर्थनानुपयोगित्वात् अपव्याख्याननिरासे व्यापारयितुं मन्त्रद्वयापव्याख्यानमनुवदति- **अपर इत्यादि** ॥ ईशा इत्येतदीट्शब्दस्य तृतीयान्तमित्यभिप्रेत्य प्रतिपदमाह- **ईशित्रेति** ॥ **वास्यमाच्छाद्यमिति** ॥ 'वस आच्छादने' इति धातोरिति भावः । त्यक्तेन इत्येतद्भावे निष्ठान्तमित्याशयेनोक्तं- **त्यागेनेति**॥ 'भुज पालनाभ्यवहारयोः' इति धातुं मनसि निधायाह- **पालयेथा इति** ॥ इतिशब्दः प्रथममन्त्रार्थसमाप्तौ । द्वितीयमन्त्रार्थं तात्पर्यतो अनुवदति- **यस्त्विति** ॥ अत्र यस्तु अनात्मज्ञतया प्रथममन्त्रार्थग्रहणाशक्तः सोऽग्निहोत्रादिकर्माणि कुर्वन्नेव शतं समा जिजीविषेत् ।

एवं एवंप्रकारे । त्वयि जिजीविषति नरे इतः एतस्मात् कर्म कुर्वतो वर्तमानादन्यथा प्रकारान्तरं नास्ति । येन प्रकारेण अशुभं कर्म न लिप्यते । न कर्मणा लिप्यते इति द्वितीयमन्त्रस्यापि अक्षरार्थो द्रष्टव्यः । दूषणोपयोगित्वात् तात्पर्यार्थ एव अनूदित इति ज्ञातव्यम् । ननु ज्ञान्यज्ञानिनोः कर्मकरणस्य आवश्यकताप्रतिपादनाय प्रवृत्ते प्रमाणे उपास्तिशब्देन शास्त्राभ्यासरूपायाः, ध्यानरूपाया वा उपास्तेर्ग्रहणे असङ्गतिः स्यादित्यतोऽपेक्षिताध्याहारेण उपास्तिपदं व्याख्याति- **स्वकर्मणेति शेष इति** ॥ अनेन स्वकर्मणा कृष्णोपास्तिं कृष्णपूजामिति व्याख्यातं भवति । ततश्च स्वकर्मणा कृष्णोपास्तिमकुर्वतोऽज्ञस्य ज्ञानिनोऽपि कर्म उपास्त्यकरणजन्यं पापं लिप्येतेति योजनोक्ता भवति । अत्रोत्तरग्रन्थानुसारेण अज्ञस्य लेपो ज्ञानमोक्षप्रच्युतिरूपो द्रष्टव्यः ॥

ननु कृष्णोपास्तिमकुर्वतोऽज्ञस्येव ज्ञानिनोऽपि प्रसिद्धलेपसम्भवात् आनन्दह्रासपर्यन्तं धावनं भाष्ये अनुचितमित्यतोऽज्ञवैलक्षण्यं ज्ञानिनो दर्शयन् प्रसिद्धलेपानुपपत्तिमाह- **नियतेति** ॥ अलेपस्य लेपायोग्यस्य ज्ञनिनः कथं पापलेपः । न कथमपि । ननु अवश्यकरणीयकर्मत्यागे कथमलेप इत्यतः तदेव असिद्धमित्याशयेन उक्तं- **कर्मणामकिञ्चित्करत्वादिति** ॥ कर्मणामावश्यकत्वं वदता ज्ञानार्थत्वं वा, मोक्षार्थत्वं वा वाच्यम् । नाद्यः । ज्ञानस्य प्राप्तत्वादित्याशयेनोक्तम्- **ज्ञानिन इति** ॥ मोक्षस्यापि प्राप्तप्रायत्वान्न द्वितीयोऽपि इत्याशयेनोक्तम्- **नियतमोक्षत्वेनेति** ॥ ज्ञानिन इत्यत्रापि सम्बध्यते । यद्वा कर्मणामुपास्त्यकरणजन्यपापानां प्राप्तज्ञानत्वेन नियतमोक्षत्वेन च अकिञ्चित्करत्वात् व्यर्थत्वात् । अलेपस्य ज्ञानमोक्षप्रच्युतिरूपलेपरहितस्य ज्ञानिनः कथं कीदृशः पापलेप इति व्याख्येयम् । ननु ज्ञानिनोऽपि कृष्णोपास्तिमकुर्वतः आनन्दह्रासो भवतीत्यनुपपन्नम् । ह्रासस्य पापसाध्यत्वेन कर्माकरणसाध्यत्वासम्भवादित्यतो ह्रासो भवेदित्यनूद्य ततःपरमपेक्षितं पूरयति- **ह्रासो भवेदिति** ॥ ह्रासो नाम अनभिव्यक्तिः । न च आवरणानामपगतत्वात् कथमनभिव्यक्तिः इति वाच्यम् । आनन्दांशावरकत्वेन ईश्वरेच्छायाः सत्वात् । ननु अलेपेऽपि लेपः स्यादित्येतद्विरुद्धमित्यतो व्यवस्थया विरोधं परिहरन् वाक्यं योजयति- **यत इति** ॥ 'अतः कार्यैव' इत्येतदव्यवहितप्रकृतज्ञानिमात्रपरमिति भ्रमनिरासाय आह- **यत**

**एवमुभयोरिति** ॥ **कृष्णोपास्तिरिति** ॥ स्वकर्मणा कृष्णपूजेत्यर्थः । न च ज्ञानोत्तरविकर्मण एव आनन्दह्रासकारणतायाः तत्र तत्र उक्तत्वेन कथं भगवत्पूजात्मककर्माकरणस्यापि तत्कारणत्वमिति वाच्यम् । एतत्प्रमाणतट्टीकयोरपि निरवकाशत्वेन भगवत्पूजात्मककर्माकरणस्यापि तत्कारणत्वे बाधकाभावात् । उक्तञ्च पञ्चमे बृहदारण्यकभावबोधे 'यावत्स्वरूपानन्दाननुभवलक्षणह्रासं प्रति विकर्मवत् भगवत्पूजात्मककर्माकरणमपि निमित्तम् । यथोक्तं 'कृष्णोपास्तिमकुर्वतः ज्ञानिनोऽपि यतो ह्रास आनन्दस्य भवेद्ध्रुवमिति' इति । ननु -

अज्ञोऽर्चयेदेवार्चायामन्यथा दोषवान् भवेत् ।
ज्ञस्त्वर्चयन्सुगुणवानन्यथा दोषवान्नतु ॥

इति च तृतीयस्कन्धतात्पर्ये ज्ञानिनः स्वविहितकर्माननुष्ठाने दोषाभावस्य उक्तत्वात् अत्र आनन्दह्रासाभिधाने कथं तद्विरोधो न स्यादिति चेन्मैवम् । तत्र दोषशब्देन मुक्तिप्रतिबन्धकदोषस्य विवक्षितत्वेन आनन्दह्रासाविवक्षणात् । यद्वा तात्पर्यस्य आनन्दह्रासरहितोत्तमाधिकारिपरत्वेन अस्य च तद्युक्तमानुषोत्तमपरत्वेन विरोधवार्ताभावात् । अस्य मानुषोत्तमपरत्वं तु बृहदारण्यकभावबोधे स्पष्टमिति ॥

तात्पर्यार्थनिराकरणपरं भाष्यमुपलक्षणमित्यभिप्रेत्य अक्षरार्थमपि निराचिकीर्षुः ईशावास्यशब्दार्थं तावन्निराकरोति- **असङ्गतश्चेति** ॥ कथमसङ्गतमिति चेदित्थम् । ईशावास्यत्वं हि कर्माकरणे हेतुत्वेनोच्यते । तेनेति तृतीयया तस्य हेतुत्वेन परामर्शात् । तत्र पृच्छामो वाचनिकमीशावास्यत्वमेव कर्माकरणे हेतुरुत लाक्षणिकं ज्ञानमिति । आद्यं निराकरोति- **नहीति** ॥ तत् ईशाच्छाद्यत्वम् । कुत इत्यत आह- **तथा सतीति** ॥ **तत्प्रसङ्गेनेति** ॥ कर्माकरणप्रसङ्गेन इत्यर्थः । स्वरूपसदीशाच्छाद्यत्वस्य अज्ञं प्रत्यप्यविशिष्टत्वादिति भावः । द्वितीयेऽपि किमीशावास्यत्वज्ञाने लक्षणा, उत अद्वैतज्ञाने । आद्यमाशङ्क्य निराकरोति- **ईशावास्यत्वज्ञानोपलक्षणत्वपक्षेऽपीति** ॥ अनेन विषयविषयिभावलक्षणः शक्यसम्बन्धोऽपि सूचितो वेदितव्यः । तामेव उपपादयति- **न हीति** ॥ कर्मणो हि अकर्तव्यत्वं अपरमार्थत्वे, निषिद्धत्वे, निष्फलत्वे वा ज्ञाते भवितुमर्हति । न च जगदीशाच्छाद्यमिति ज्ञानेन कर्म तथा ज्ञातं भवति । किन्तु जगदन्तःपातितये-शाच्छाद्यत्वेन । न च ईशाच्छाद्यत्वज्ञानमकर्तव्यताहेतुः अप्रयोजकत्वादिति भावः ॥

द्वितीयमाशङ्कते- **अद्वैतज्ञानमिति** ॥ अयं भावः । जगतः ईशाच्छाद्यत्वं नाम न घटस्य पटेनेव प्रसिद्धम् । येन कर्माकर्तव्यतायां हेतुर्न स्यात् । किन्तु ईशे अध्यस्तत्वमेव । 'परमार्थसत्यरूपेण परमात्मना अनृतमिदं सर्वमाच्छादनीयम् । यथा चन्दनागर्वादेः उदकादिसम्बन्धजक्लेदादिजं दौर्गन्ध्यं तत्स्वरूपनिघर्षणेन आच्छाद्यते स्वेन पारमार्थिकेन गन्धेन । तद्वदेव हि स्वात्मनि अध्यस्तमस्वाभाविकं कर्तृत्वभोक्तृत्वादिलक्षणं जगत् द्वैतरूपम्' इति परेण उक्तत्वात् । न च अध्यस्तत्वं स्वरूपसत् कर्माकर्तव्यत्वे हेतूकर्तुं शक्यम् । अज्ञस्यापि तत्प्रसङ्गेन उत्तरमन्त्रविरोधात् । किन्तु ईशे अध्यस्तत्वेन ज्ञानम् । एतदेव च परमते अद्वैतज्ञानं नाम । तथा च विषयवाचकेन पदेन विषयिणोऽद्वैतज्ञानस्योपलक्षणोपपद्यते । शक्यसम्बन्धसद्भावात् । कर्माध्यस्तत्वज्ञानं च कर्माकर्तव्यतायां मुख्यो हेतुरिति न असङ्गतिरिति ॥ **अनेनेति** ॥ ईशावास्यपदेन इत्यर्थः । कुतो नेति चेदत्र वक्तव्यम् । ईशाध्यस्तत्वं नाम ईशाभेदो वा, ईशव्यतिरेकेण असत्त्वं वा । यज्ज्ञानं कर्माकरणे हेतुः स्यादिति । न द्वितीयः । ईशव्यतिरेकेण असत्त्वोक्तौ ईशाधीनत्वेन अस्तीत्युक्तं स्यात् । राजव्यतिरेकेण राष्ट्रं नास्तीत्यादौ तदनुभवात् । न च ईशाधीनत्वेन ज्ञानं कर्माकरणे हेतुरित्यसङ्गतितादवस्थ्यादिति भावेन आद्यं दूषयति- **विरोधादिति** ॥ तदुपपादयति- **नहीति** ॥ आच्छाद्याच्छादकयोः अध्यस्ताधिष्ठानयोरित्यर्थः । ततश्च अदृष्टकल्पनाप्रसङ्गादिति भावः । यद्यपि परेण सर्वमेव नामरूपकर्माख्यं विकारजातं परमार्थसत्यात्मभावनया त्यक्तं स्यादित्यादिना द्वैतज्ञानस्यैव कर्मत्यागे हेतुत्वेनोक्तत्वात्तदेव टीकाकृता निराकार्यं नान्यत् । अनुक्तोपालम्भप्रसङ्गात् तथापि शिष्याणां कथाक्रमशिक्षार्थं वा, सम्भावितत्वाद्वा पक्षान्तरनिराकरणमिति ज्ञातव्यम् ॥

एवमीशावास्यपदव्याख्यानं निराकृत्य जगत्यां पृथिव्यामित्येतदपि निराकरोति- **सर्वमपीति** ॥ आधारैकदेशपृथिवीवाचकजगतीशब्दस्य अन्तरिक्षादि-सर्वाधारोपलक्षणत्वमङ्गीकर्तव्यम् । कुत इत्यतो मुख्यार्थानुपपत्तिसद्भावादित्याशयेन उक्तम्- **सर्वमपीति** ॥ यद्यपि पृथिव्यां जगत्यामित्युपलक्षणार्थत्वादिति वदता परेण जगतीशब्दस्य उपलक्षणत्वमङ्गीकृतमेवेति अङ्गीकर्तव्यमित्युक्तिरनुपपन्नेति भाति । तथापि परः स्वोक्तापलापिनां प्रथमोदाहरणत्वात् न मयाङ्गीकृतमिति वक्तुमुत्सहेतापि । अतो न्यायेन उपपादयितुमङ्गीकर्तव्यमित्युक्तम् । यद्वा

अङ्गीकर्तव्यमित्यतः परं अङ्गीकृतं च परेणेति अध्याहारेण योज्यमिति न कश्चिद्दोषः । ननु जगतीशब्दस्य पृथिवीवाचकस्य सर्वोपलक्षणत्वे यावदाधारगताधेयलाभेन श्रौतसर्वशब्दस्वारस्यं सम्पद्यते । अत एव लक्षणापि सोढव्या । वाचकत्वलाभेन प्रकृतिपरत्वे तु प्रकृत्याश्रितमात्रस्य ईशावास्यत्वप्राप्तौ अपि तदनाश्रितस्य तदप्राप्त्या सर्वशब्दास्वारस्यप्रसङ्गादित्यत आह- **सर्वार्थलाभादिति** ॥ 'आकाश एव तदोतश्च प्रोतश्च'(बृ.उ.३.८.७) इत्यादिश्रुत्या प्रकृतेः ईशातिरिक्तसर्वाधारत्वस्य प्रमितत्वेन प्रकृतिपरत्वपक्षेऽपि तदाश्रितत्वेन सर्वार्थलाभसम्भवादित्यर्थः । न च पक्षद्वयेऽपि सर्वार्थलाभाविशेषेऽपि लक्षणापेक्षया शक्तेर्ज्यायस्त्वाज्जगतीशब्दस्य प्रकृतिपरत्वेन व्याख्यनमेवोचितं न पृथिवीपरत्वेन । तदेतदेव अभिप्रेत्योक्तम्- **वाचकत्वग्रहणमेवेति** ॥ एवं परपक्षे जगतीशब्दस्य उपयोगमङ्गीकृत्य तव्द्याख्यानमेव अनुपपन्नमित्युक्तमिदानीं स एव व्यर्थ इत्याह- **न चेति** ॥ नापीत्यर्थः, अस्य जगतीशब्दस्य तत्त्यागेऽपि अनेन वाक्येन सर्वस्य ईशाच्छाद्यत्वसिद्धेरिति भावः । अस्मत्पक्षे किञ्चेत्याद्युक्तप्रकारेण उपयोगोऽस्तीत्यभिप्रायेण तत्पक्ष इत्युक्तम्- **आत्मनेपदविरोध इति** ॥ 'भुजोऽनवने' इति सूत्रेण भुजधातोः पालनातिरिक्त एवार्थे आत्मनेपदस्य विहितत्वात् पालनार्थत्वे तद्विरोध इत्यर्थः । अथवेत्यादिनोक्तं धनमिथ्यात्वं निराकरोति- **प्रत्यक्षादीति** ॥ आदिशब्देन अर्थक्रियाकारित्वप्रमाणदृष्टत्वाद्यनुमानस्य 'विश्वं सत्यम्' (ऋ.सं.२.२४.१२) इत्याद्यगमस्य च सङ्ग्रहः । ननु वर्तमानकाले सत्त्वग्रहिणा प्रत्यक्षेण त्रैकालिकसत्त्वात्यन्ताभावस्याग्रहणात्कथं मिथ्यात्वस्य प्रत्यक्षविरुद्धत्वम् । ग्राह्याभावावगाहिन एव विरोधित्वात् । प्रत्यक्षस्य च अतथात्वादिति चेन्मैवम् । प्रतिपन्नोपाधौ वर्तमानकालीनसत्त्वग्राहिणा प्रत्यक्षेण तत्र त्रैकालिकसत्त्वात्यन्ताभावो विरुध्यत एव । तथाहि उक्तरूपमिथ्यात्वप्रतिषेधो हि तत्प्रतियोगिभूततत्सत्त्वरूप एव । सामान्याभावस्य यत्किञ्चित्प्रतियोगिसत्त्वाविरोधित्वेन तत्तद्विशेषाणामेव सामान्याभावं प्रति प्रतियोगित्वावश्यम्भावात् । सामान्याभावाभावस्य च रूपद्वयम् । सामान्याभावाभावत्वं तत्तद्विशेषत्वं च । तत्र प्रकृते प्रत्यक्षस्य वर्तमानमात्रग्राहित्वेन कालत्रयवर्तिसत्त्वनिषेधरूपासत्त्वाभावत्वेन तदभावविषयत्वासम्भवेऽपि वर्तमानकालीनबाधाभावत्वेन रूपेण तद्ग्राहकत्वमुपपन्नमेवेति तद्विरोधो दुष्परिहर इति ॥ २ ॥

[1]असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः ।
ताꣳस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥ ३ ॥

**भाष्यम्**- सुष्ठु रमणविरुद्धत्वादसुराणां प्राप्यत्वाच्चासुर्याः । 'न च रमन्त्यहो असदुपासनया आत्महनः' (भाग.१०.९४.२४) इत्युक्तत्वात् ।

'महादुःखैकहेतुत्वात् प्राप्यत्वादसुरैस्तथा ।
असुर्या नाम ते लोकास्तान्यान्ति विमुखा हरौ' ॥
इति वामने ॥

'ये के च' इत्यनेन नियम उक्तः। 'नियमेन तमो यान्ति सर्वेऽपि विमुखा हरौ' इति च ॥३॥

**टीका**- एवं प्राप्ताधिकारं प्रति परमात्मतत्त्वबुभुत्साजननाय 'असुर्याः' इति मन्त्रेण अपरमात्मविदां निन्दा क्रियते । तत्र 'असुर्याः' इत्यस्य [2]वर्णविपर्ययेण असूर्याः सूर्यप्रकाशहीना इति अन्यथाप्रतीतिनिरासाय अर्थमाह- **सुष्ठु रमणेति** ॥ सुष्ठु रमणं सुखं सुर्यं तद्विरुद्धं[3]महादुःखत्वादसुर्या इत्यर्थः । असुराणां प्राप्यत्वादित्यनेन सकलसुखराहित्यमुपलक्ष्यते । कुतोऽयमसुर्यपदार्थ इत्यत आह- **न चेति** ॥ एतमेव मन्त्रं मूलीकृत्य प्रवत्तेऽस्मिन् वाक्ये असुर्यपदार्थवर्णनं 'न च रमन्ति' इति क्रियते । तत्र चशब्देन महादुःखमनुभवन्तीत्येषोऽर्थः समुच्चीयते । महादुःखसुखाभावपरता अस्य पदस्योक्तव्याख्यान एव सम्भवति नान्यथेति भावः।

आत्मनो नित्यत्वेन हननासम्भवात् तत्र अनर्थकथनमयुक्तमित्येतदपि अनेन परिहृतम् । 'असदुपासनया आत्महनः' इत्युक्तत्वात् । विपरीतं भावयता

---

१. अनन्दा नाम ते लोका अन्धेन तमसावृताः । ताꣳस्ते प्रेत्याभिगच्छन्त्यविद्वांसोऽबुधा जनाः ॥ (बृ.भा.६.४.१) २. असूर्या इति पाठे न विद्यते सूर्यो येषु तेऽसूर्याः प्रकाशरहिताः इतिहि प्रकाशभाष्यकाराः । ३. दुःखवत्त्वात् ।

**हि तद्याथात्म्यं तिरस्कृतमिति तस्य गौण्या वृत्त्या आत्महन्तृत्वम् । स्पष्टश्चात्र प्रमाणमाह- महादुःखेति ॥ 'विमुखा हरौ' इति समाख्यया अत्र आत्मशब्दो हरिपर इति चोक्तं भवति तथाच नित्यशुद्धबुद्धमुक्तस्वरूपमात्मानं जीवं ये विपरीतं प्रतिपद्यन्ते ते आत्महन इत्यपव्याख्यानमेव । 'ते लोकाः' इति तच्छब्दः प्रसिद्धिद्योतकः । ये ते प्रसिद्धास्तान्यान्तीत्यर्थः । ये आत्महनस्ते केचन तांल्लोकानभिगच्छन्ति केचन नेत्यन्यथाप्रतीतिनिरासायाह- ये के चेति ॥ ये के चात्महनस्ते सर्वेऽपीत्येवं नियमपरमेवेदं न तूक्तप्रकारेण विभागपरमित्यर्थः । कुत इत्यत आह- नियमेनेति ॥ नियमेनेत्यस्यैव विवरणम्- सर्वेऽपीति ॥ अन्धयतीत्यन्धम् । अतिनिबिडान्धकारावृता इत्यर्थः । प्रेत्य मृत्वा । एवमुदाहृतवचनविरोधादेव देवादिशरीराण्यसुर्या लोका इति व्याख्यानमयुक्तमेवेति ॥ ३ ॥**

**वामन**- एवं सत्यविद्यया विद्यया वा तदुपासनं कार्यम् । उभयथाऽपीष्टसिद्धेरित्यत आह- **असुर्या इति** ॥ एतत् पदं निर्वक्ति- **सुष्ठु इति** ॥ तत्र प्रमाणमाह- **नचेति** ॥ ये स्वव्यतिरेकेण परमात्मानं नाङ्गीकुर्वन्ति, निर्गुणत्वाद्युपासनया च तं परित्यजन्ति त एव आत्महन उक्ताः । नहि परमात्मनः केनापि हन्यत्वं युक्तम् । प्रत्युताविद्यमानोपासकाः परेण स्वयमेव हन्यन्ते । 'हन्ति रक्षो हन्त्यासद्वदन्तम्' इत्यादेः । एवं स्वरूपदूषणाच्चाऽत्महनस्त उक्ताः- 'असत्यमप्रतिष्ठं ये जगदाहुरनीश्वरम् । त आसुराः स्वयं नष्टाः' इति व्यासस्मृतेः । ते 'नच रमन्ति' नैव रमन्ते । तमः प्राप्त्यनन्तरं दुःखैकस्वरूपत्वात् । इत्युक्तत्वात् श्रुतिगीतायाम् (भाग.१०.९४.२४) ॥

एतमर्थं 'महादुःख..' इत्यादिवामनवचनेनापि व्यक्तं कथयति । 'ये के चात्महनः' इति विभागश्रवणादात्महनोऽपि केचिदेवान्धंतमः गच्छन्तीत्याशङ्क्य परिहरति- **ये केचनेति** ॥ नानायोनिषु जीवेषु केचिदेव परमात्मानं द्विषन्ति । नहि सर्वे । तद्द्वेष्टारस्तु सर्वेऽप्यन्धंतमो गच्छन्तीत्यभिप्रेतत्वान्न कश्चिद् विरोधः । अत्रापि वामनवचनं प्रमाणमाह- **नियमेनेति** ॥ अतः सम्यग् ज्ञात्वैव भगवानुपास्य इति सुस्थितम् ॥ ३ ॥

**वादि-** श्रुतिगीता हि काश्चित् श्रुतिं मूलीकृत्य प्रवर्तते । 'न च रमन्ति' इति च श्रुतिगीतावाक्यम् । अत एव 'एतमेव मन्त्रं मूलीकृत्य' इत्युक्तम् । 'ये के च आत्महनस्ते सर्वेऽपि' इत्यत्र यः कोऽपि ब्राह्मणोऽस्मिन् ग्रामे नास्तीत्युक्ते नियमेन ब्राह्मणाभावस्य प्रसिद्धत्वादिति भावः । देवादिशरीराणीत्यस्य स्थाने अदेवादिशरीराणीति न्याय्यम् । तथा च अदेवादिशरीराणीत्यस्य सुरयोग्या लोकाः देहाः सुर्याः । ते न भवन्तीत्यसुर्या अदेवादिदेहाः भूतप्रेतपिशाचादिशरीराणीति यावत् । आदिपदेन तामसयोन्यन्तरं गृह्यते असुर्यपदशक्तिलभ्योऽप्ययमेवार्थः । सति चैवं सुराणामप्यसुरत्वमभिप्रेत्य 'परमात्मभावमद्वयमपेक्ष्य देवादयोऽप्यसुरा' इति परभाष्यं स्वस्वरूपप्रदर्शनपरमेवेति अवगन्तव्यम् ॥ ३ ॥

**श्रीनि- वर्णविपर्ययेणेति** ॥ ऊकारस्य उकाररूपो विपर्ययः । असुर्यपदार्थवर्णनपरे 'न च' इति भागवते सुखराहित्यमहादुःखवत्वयोरेव तदर्थतया उक्तत्वेन असुरप्राप्यत्वस्य असुर्यपदार्थत्वेन अनुक्तत्वात् कथमेतदित्यत आह- **असुराणां प्राप्यत्वादित्यनेनेति** ॥ ननु तत्र सुखाभावस्यैव असुर्यपदार्थत्वेन उक्तत्वात् महादुःखवत्वस्य तदर्थतया अनुक्तेः कथमत्रार्थद्वयप्रतीतिरित्यत आह- **तत्रेति** ॥ महादुःखसुखाभावपरता 'न च' इति भागवतवाक्येन या सिद्धा अस्ति सेत्यर्थः । अस्य असुर्यपदार्थस्य ॥ **उक्तेति** ॥ सुष्ठु इत्यादिनेति शेषः । अन्यथा 'असुर्याः प्रकाशहीनाः' इति व्याख्याने ॥ **अनेनेति** ॥ 'न च' इति भागवत-वाक्येनैव इत्यर्थः ॥ **गौण्येति** ॥ यो यस्य हन्ता स तन्महिमातिरस्कर्ता। यो विपरीतभावनाकर्ता सोऽपि तथेति विपरीतोपासकहन्त्रोः याथात्म्यपदोदितमहिमा-तिरस्कारित्वरूपगुणयोगादित्यर्थः । आत्मशब्दः श्रौत इत्यर्थः ॥ **तथा चेति** ॥ प्रमाणबाधादित्यर्थः । विपरीतं दुःखादिविशिष्टम् । बद्धत्वादिनेति यावत् । तच्छब्दस्य यच्छब्दसापेक्षत्वादाह- **ये ते इति** ॥ **उदाहृतवचनेति** ॥ महादुःखैकहेतुत्वादिति उदाहृतवचनेत्यर्थः ॥ ३ ॥

**छलारी- अपरमात्मविदामिति** ॥ भावप्रधानो निर्देशः । परमात्मत्वं सर्वोत्कृष्टचेतनत्वम्, तद्विरुद्धं जीवाभिन्नत्वादिकम्, तद्विदामित्यर्थः ॥ **सुर्यमिति** ॥ सुपूर्वकरमेः औणादिको भावे ड्यप्रत्ययः । असुराणां प्राप्यत्वादित्यस्य कथमनिष्टत्वमित्यत आह- **सकलेति** ॥ **एतमेव मन्त्रमिति** ॥ 'न च रमन्ति'

इति दशमस्कन्धस्थश्रुतिगीतावाक्यं 'असुर्या नाम ते लोकाः' इति वाक्यं मूलीकृत्य तद्व्याख्यानाय प्रवृत्तम् । अतः असुर्या इत्यस्य व्याख्यानम्- **नच रमन्तीति** ॥ 'आत्महनः' इत्यस्य 'असदुपासनयाऽऽत्महनः' इति व्याख्यानम् । आत्महननं विष्णुहननम् । विष्णोरसदुपासनमेव मिथ्योपासनमेवेत्यर्थप्रतीतेः । ननु मिथ्योपासनस्य सुखाभावमात्रफलकत्वं कथम्? अल्पफलत्वादित्यतो महादुःखैकहेतुत्वादित्येतत्प्रमाणं मनसि निधाय आह- **तत्र चशब्देनेति** । 'अन्धेन तमसाऽऽवृताः' इत्यत्र चक्षुषोऽभावेन तमसोऽन्धत्वासम्भवात् अन्धत्वं सङ्गमयति । अन्धशब्दात् तत्करोतीति णिजन्तात् कर्तरि क्विप् । 'तांस्ते प्रेत्याभिगच्छन्ति' इत्यत्र प्रपूर्वकइणः ल्यबन्तस्य प्रेत्येत्यस्य गत्यर्थत्वात् गच्छन्तीति पुनरुक्तिरित्यत आह- **प्रेत्य मृत्वेति** ॥ प्रपूर्वकइणः क्त्वान्तस्य अमरसिंहेन मरणे 'परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः' इति प्रयोगादिति भावः ॥ ३ ॥

**सत्य**- असुरप्राप्यत्वस्य स्वर्गादिसाधारण्यात्तमसः को विशेष इत्यतो 'न च रमन्ति' इत्युत्तरप्रमाणानुसारेणाह- **असुराणां प्राप्यत्वादिति** ॥ ननु अनेन असदुपासनया रमणाभावसिद्धावपि महादुःखानुभवस्य कथं सिद्धिरित्यतोऽनुभवन्ति च नित्यदुःखमिति च शब्देनोक्तमिति भागवततात्पर्यं मनसि निधायाह- **तत्र चशब्देनेति** ॥ चशब्दार्थमेवाह- **असदुपासनयेति** ॥ **समाख्यया इति** ॥ न केवलम्-

आत्मब्रह्मादयः शब्दास्तमृते विष्णुमव्ययम् ।
न सम्भवन्ति यस्मात्तैर्नैवाप्ता गुणपूर्णता' (अनु.४.१.५.)

इत्यन्यत्रोक्तरीत्या आत्मशब्दस्य हरावेव मुख्यत्वादित्यपेरर्थः ॥ **इति चोक्तं भवतीति** ॥ न केवलमसुर्यपदार्थ उक्त इति चार्थः ॥ ३ ॥

**नृसिंह**- तद्विरुद्धमहादुःखवत्वादित्यनेन 'महादुःखैकहेतुत्वात्' इति प्रमाणैकवाक्यतोक्ता । ननु उक्तनिर्वचने प्रमाणत्वेनोदाहृते 'न च रमन्ति' (भाग.१०.८७.२२) इति वाक्ये सुखराहित्यादिकमसुर्यपदार्थतयोच्यत इत्यतः तद्विसंवादपरिहारायाह- **असुराणामिति** ॥ ननु अत्र आत्महन्तॄणां सुखराहित्यादिकं फलतयोच्यते । नत्वसुर्यपदार्थतयाऽतः कथमुक्तार्थे प्रामाण्यं तस्येत्यत आह- **एतमेवेति** ॥ अधिकांशोदाहरणाभिप्रायमाह- **आत्मन इति** ॥ 'ये के

चात्महनः' इति के च शब्दस्य ये आत्महनः ते के च इति तच्छब्दसम्बन्धे हि **विभागपरत्वं स्यात्** । न च तथा किं नाम, ये के च ते सर्वेऽपि इति यच्छब्दान्वयेन नियमपरत्वमेवेति भावः । अन्धत्वं नाम चाक्षुषज्ञानहीनत्वमित्ययुक्तम् । अप्राप्तप्रतिषेधप्रसक्त्या जडे तमसि तादृशोक्त्ययोगादित्यत आह- **अन्धयतीति** ॥ **देवादिशरीराणीति** ॥ सुरसम्बन्धिनः देहाः सुर्याः, तद्विरुद्धाः राक्षसादिदेहाः उपलक्षणत्वेन मानुषादिविरोधस्यापि ग्राह्यत्वात् । अत एव देवादीत्यादिपदम् । तान् प्राप्नुवन्तीति पराभिप्रायः ॥ ३ ॥

**कल्ला**- तमस्सद्भावे प्रमाणम् ।

'असुर्या नाम ते लोका अन्धेन तमसा वृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः'॥ इति ॥

'अन्धःतमः प्रविशन्ति येऽविद्यामुपासते'
'अन्धःतमः प्रविशन्ति येऽसम्भूतिमुपासते' ॥ इति श्रुतिः ।

'महादुःखैकहेतुत्वात्प्राप्यत्वादसुरैस्तथा ।
असुर्या नाम ते लोकास्तान्यान्ति विमुखा हरौ' इति ।
'नियमेन तमो यान्ति सर्वेऽपि विमुखा हरौ' इतिच ॥

अत्र टीका- अन्धयतीत्यन्धम् । अतिनिबिडान्धकारावृता इत्यर्थ इति ॥ अनेन महातमसः यत्र पतन्त्युग्रा मिथ्याज्ञानपरायणाः' इति भारततात्पर्य-निर्णयोक्तस्य 'महातमस्त्रिधा प्रोक्तम्' इत्युक्तं त्रैविध्यं तमसि विद्यमानान्धकार-निबिडत्वतारतम्यनिबन्धनम् । एवञ्च महातमसि ऊर्ध्वभागे विद्यमानान्धकारस्य न निबिडत्वम्, मध्यभागे विद्यमानस्य निबिडत्वम् , अधोभागे विद्यमानस्याति-निबिडत्वमित्येवमुपपन्नमिति सूचितम् । यच्च महातमसो लोकत्वञ्चोक्तं तच्चायोग्यजनाश्रयस्थानत्वादुपपन्नम् । बहुत्वमूर्ध्वमध्याधररूपस्थानापेक्षया । 'तामिस्रश्चान्धतामिस्रौ' इति द्वित्वञ्च ऊर्ध्वभागस्य रात्रिमुखस्येवाल्पान्धकार-युक्तत्वेन तामिस्रत्वान्मध्यमाधोभागयोश्च निबिडातिनिबिडान्धकारयुक्तत्वेन महानिशातदतिरिक्तनिशावदन्धतामिस्रत्वाज्ज्ञेयमिति भाति उक्तञ्चैतदन्यत्र॥ ३ ॥

**रघु-** 'असुर्याः' इति तृतीयमन्त्रस्य अधिकारान्तरप्रतिपादकत्वभ्रान्तिं परमात्मतत्त्वप्रतिपादकत्वभ्रान्तिं च परिहर्तुं प्रतिपाद्यमाह- **एवमिति** ॥ एवं उक्तमन्त्रद्वयोक्तप्रकारेण प्राप्ताधिकारं प्रति अपरमात्मविदां निन्दा क्रियत इति सम्बन्धः । ननु परमात्मतत्त्वप्रतिपादिकेऽत्र ग्रन्थे न अतत्त्वविदां निन्दा कार्या । निन्दायाः तत्त्वप्रतिपादनरूपत्वाभावात्तदुपयोगाभावाच्चेत्यतः तदुपयोगोऽस्तीत्याशयेनोक्तम्- **परमात्मतत्त्वबुभुत्साजननायेति** ॥ उपदेशस्य परार्थत्वात्, बुभुत्सावत एव च परस्य उपदेश्यत्वात् तस्याश्च विरोधिनिन्दासाध्यत्वात्, अस्त्येव निन्दाया उपयोग इति भावः ॥ **तत्रेति** ॥ मन्त्र इत्यर्थः । असुर्यपदेन कथं सूर्यप्रकाशहीनत्वं लभ्यत इत्यत उक्तम्- **वर्णविपर्ययेणेति** ॥ ह्रस्वस्य उकारस्य दीर्घतया विपर्ययेणेत्यर्थः । ननु एवमपि असूर्याः सूर्यहीना इत्यर्थः सम्पद्यते । न चासौ दोष इत्यतः सूर्यशब्दस्य सूर्यप्रकाशे लक्षणामभिप्रेत्योक्तम्- **सूर्यप्रकाशहीना इति** ॥ **अन्यथाप्रतीतीति** ॥ एतन्मन्त्रव्याख्यानरूपप्रमाणविरुद्धत्वात् अन्धेन तमसेत्यनेन पुनरुक्तत्वाच्च इति भावः । भाष्ये सुष्ठु रमणेत्येतत्सूर्यशब्दार्थकथनमतो नासङ्गतिरित्याशयेनाह- **सुष्ठु रमणं सुर्यमिति** ॥ अनेनैव सुपूर्वात् रमेः 'अमन्ताड्' इति डप्रत्यये टिलोपे सुष्ठु रमणं सुरं तद्विरुद्धत्वादसुरा इत्येव स्यान्नतु असुर्या इति चोद्यं परिहृतं भवति । बाहुलकड्यप्रत्ययान्तत्वेन डान्तत्वाभावात् ॥ **तद्विरुद्धमहादुःखत्वादिति** ॥ बहुव्रीहिरयम् । दुःखवत्त्वादित्यपि पाठः । अनेन असुर्यशब्दात् मत्वर्थे 'अर्श आद्यच्' प्रत्यय इत्युक्तं भवति । यद्यपि अत्र यथाश्रुतभाष्यानुसारेण सुष्ठु रमणं सुर्यं तद्विरुद्धत्वादसुर्या इत्येव वक्तव्यम् । तथापि दुःखस्यैव सुष्ठु रमणविरुद्धत्वं साक्षात् । न तु लोकानामित्यशाङ्कापरिहाराय महादुःखैकहेतुत्वादिति वक्ष्यमाणप्रमाणानुसारेण 'असुर्यान्नाम लोकान् नित्यनिरतिशयदुःखान्' (भाग.ता.१०.९४.२४) इति दशमभागवततात्पर्यानुसारेण च तद्विरुद्धमहादुःखवत्त्वादिति व्याख्यातमिति ज्ञातव्यम् । ननु असुरप्राप्यत्वस्य स्वर्गादिसाधारण्यात् को विशेषस्तमस इत्यतो 'न च रमन्ति' (भाग.१०.९४.२४) इत्युदाहरिष्यमाणप्रमाणं असुर्यान्नामलोकान् निरस्तसमस्तसुखानिति भागवततात्पर्यं च मनसि निधाय विवक्षितमर्थमाह- **असुराणां प्राप्यत्वादित्यनेनेति** ॥ भाष्यं तु असुरशब्दोपपदात् 'या प्रापणे' इत्यस्मात् घञर्थे कविधानमिति कर्मणि कप्रत्यये 'आतो लोप इटि च'

(सि.कौ.२३७२) इत्यकारलोपे निर्वचनत्वात् पूर्वपदान्त्यलोपे च निष्पन्नासुर्य-**शब्दार्थकथनमात्रपरमिति द्रष्टव्यम्** ॥

ननु प्रमाणे रमणाभावोक्तावपि असुर्यपदार्थत्वेन अनुक्तत्वात् कथमुक्तशङ्का-परिहार इत्यत आह- **असुर्यपदार्थवर्णनमिति** ॥ भागवतवाक्ये 'न च रमन्ति' इत्यनेन असुर्यपदार्थवर्णनं क्रियते यतोऽतोऽयमसुर्यपदार्थ इत्यर्थः । तत्र असुर्यपदार्थवर्णनस्य का सङ्गतिरित्यत उक्तम्- **एतमेव मन्त्रमिति** ॥ श्रुतिगीतिकायां 'न च रमन्ति' इत्येतद्भागवतवाक्यमूलत्वेन तात्पर्ये भगवत्पादैः 'असुर्या नाम' इति श्रुतेः पठितत्वादेतमेव मन्त्रं मूलीकृत्य इत्युक्तम् । भागवतस्य मन्त्रमूलत्वं नाम मन्त्रसंवादित्वमेव । न तु मन्त्रतोऽर्थमुपलभ्य रचितत्वम् । स्वतः सर्वज्ञत्वाद्भागवतकृत इति ज्ञेयम् । ननु एवमपि असुर्यपदार्थत्वेनोक्तयोर्द्वयोः मध्ये असुरप्राप्यत्वादित्युक्तार्थस्य प्रामाणिकत्वलाभेऽपि सुष्ठु रमणविरुद्धत्वादित्यस्य न तल्लाभ इत्यतो 'अनुभवन्ति च नित्यदुःखम्' इति चशब्देनोक्तमिति भागवततात्पर्यं मनसि निधाय प्रमाणे चशब्दार्थमाह- **तत्रेति** ॥ 'न च रमन्ति' इति भागवतवाक्य इत्यर्थः ॥

ननु भागवतोक्तरीत्या असुर्यशब्दस्य महादुःखसुखाभावपरत्वेऽपि सुष्ठु रमणेत्याद्युक्तासुर्यपदाक्षरयोजनायां न किमपि नियामकं पश्यामः । योजनान्तरेणापि उक्तार्थद्वयलाभसम्भवादित्यतोऽसिद्धं तदित्याह- **महादुःखेति** ॥ महादुःखपरता सुखाभावपरता चेत्यर्थः ॥ **उक्तव्याख्यान एवेति** ॥ सुष्ठु रमणेत्याद्युक्तव्याख्यान एवेत्यर्थः । ननु असुर्यपदार्थवर्णनस्य अप्रामाणिकत्वशङ्कायाः 'न च रमन्ति' इत्येतावतैव निरासादवशिष्टप्रमाणोदाहरणं व्यर्थमित्यतः श्रुतौ शङ्कान्तरनिरासार्थत्वान्न तदिति भावेनाह- **आत्मन इति** ॥ उक्तत्वमात्रस्य उक्तशङ्कानिरास-कत्वाभावादाह- **व्याख्याततत्वादिति** ॥ 'असदुपासनया' इत्यनेन आत्महन्तृत्वस्य व्याख्याततत्वादित्यर्थः । घटादीनामिव आत्मनः स्वरूपेण हननाङ्गीकारान्नोक्त-शङ्कावकाश इति भावः । नन्वेवं तर्हि असदुपासकेषु आत्महन्तृशब्दप्रयोगानुपपत्तिः । तन्निमित्तात्मविनाशकत्वाभावादित्यतो गौण्या वृत्त्या प्रयोग इत्याशयेन गुणयोगं दर्शयति- **विपरीतमिति** ॥ आत्महन्तृत्वं आत्महन्तृशब्दप्रतिपाद्यत्वम् । स्वरूपतिरस्कार्ता हि मुख्यहन्तोच्यते । असदुपासकस्तु आत्मयाथात्म्यस्य तिरस्कर्ता तिरस्काररूपगुणयोगात् हन्तृशब्देन उपचर्यत इति भावः ॥

॥ **स्पष्टमिति** ॥ अतो न पूर्वेण गतार्थतेति भावः । पूर्वप्रमाणस्य असुर्य-पदार्थकथनरूपताया एतमेव मन्त्रं मूलीकृत्येत्याद्युपपादनसापेक्षात्वादस्पष्टत्वम् । अत्र च 'असुर्या नाम' इति कण्ठत उक्तत्वात् स्पष्टत्वमिति भावः । असुरैः प्राप्यत्वादित्येतत्स्ववचनभाष्यवद्व्याख्येयम् ॥ **अत्रेति** ॥ भाष्यकृदुक्तासुर्यपदार्थ इत्यर्थः ॥ **अत्रेति** ॥ 'आत्महनः' इति मन्त्र इत्यर्थः ॥ **इति चेति** ॥ न केवलमसुर्यपदार्थ उक्त इति चशब्दार्थः । आत्मशब्दस्य हरिपरत्वे विवादाभावात् किं व्याख्यानेन इत्यत आह- **तथा चेति** ॥ नित्यशुद्धबुद्धमुक्तस्वरूपं तदात्मकब्रह्मस्वरूपम् । यद्यपि न एवंप्रकारेण कण्ठतो व्याख्यातम् । किन्तु आत्मानं घ्नन्तीत्यात्महनः । कथमात्मानं नित्यं हिंसन्ति । अविद्यादोषेण विद्यमानस्य आत्मनस्तिरस्करणात् इत्याद्येवोक्तम् । तथापि तत्तात्पर्यानुवादो वा । अपव्याख्यातॄणामनेकत्वादन्येनैवं व्याख्याततत्वाद्वा एवमनुवाद इति ज्ञेयम् ॥

ननु 'तान्यान्ति' इत्येतावता समञ्जसत्वादाद्यः तच्छब्दो व्यर्थ इत्यत आह- **तच्छब्द इति** ॥ द्वितीयतच्छब्दभ्रान्तिं परिहर्तुं ते लोका इति इत्यनुवादः । तर्हि ते प्रसिद्धाः तान्यान्तीत्यनन्वयदोष इत्यतो यच्छब्दाध्याहारेण तं दर्शयन्नर्थमाह- **ये ते प्रसिद्धा इति** ॥ त इत्यनुवादेन प्रसिद्धा इति व्याख्यातम् । ततश्च यच्छब्देन तेषां प्रसिद्धिं विधाय तानित्यनेन प्रसिद्धाननूद्य यान्तीति विधीयते । ये लोकास्ते प्रसिद्धाः । तान् प्रसिद्धान् यान्तीत्युक्तं भवति । ननु तमसोऽन्धत्वहेतुत्वेऽपि न स्वयमन्धत्वमचेतनत्वात् । तत्कथमन्धेनेति तमसो विशेषणं श्रुतौ इत्यतोऽन्तर्णीतणिच्त्वेन अन्धत्वहेतुत्वस्यैव विवक्षितत्वान्न दोष इत्याह- **अन्धयतीत्यन्धमिति** ॥ ननु तमसोऽनन्धस्य अप्रसिद्ध्या व्यर्थं विशेषणमित्यतः 'सिद्धे सत्यारम्भो नियमार्थः' इति न्यायं मनसि निधाय तदभिप्रायं वदन् तमसावृता इत्येतद्व्याचष्टे- **अतिनिबिडेति** ॥ अनेन अन्धेन अदर्शनात्मकेन तमसा अज्ञानेन आवृता इति परव्याख्यानमपहस्तितं भवति । लोकशब्दस्य शरीरपरत्वे हि कथञ्चित् तदुपपद्येत । न च तदस्ति । उत्तरवाक्येनैव तस्य निराकरिष्यमाणत्वात् । प्रसिद्धलोकानाञ्च आज्ञानावृतत्वस्य बाधितत्वादिति ।

'लक्ष्मणः प्रेत्य सुग्रीवं बभाषे रामचोदितम्' (ऐ.भा.२.३.७) इत्यादौ प्रेत्येत्यस्य प्राप्तौ अपि प्रयोगात् श्रुतौ तदर्थत्वभ्रान्तिपरिहाराय तदनूद्य व्याचष्टे-

**प्रेत्य मृत्वेति** ॥ भाष्यकृतोऽपव्याख्यानिराकरणाभावप्रयुक्तां न्यूनतां परिहरति- **एवमुदाहृतेति** ॥ **देवादिशरीराणीति** ॥ इयमत्र परव्याख्या 'अथ इदानीम- विद्वन्निन्दार्थोऽयं मन्त्र आरभ्यते । असुर्याः परमात्मभावमद्वयमपेक्ष्य देवादयोऽपि असुराः । तेषां सम्भूता असुर्याः ते लोकाः । कर्मफलानि लोक्यन्ते दृश्यन्ते भुज्यन्ते इति जन्मानि ब्रह्मादिदेहाः अन्धेन अदर्शनात्मकेन अज्ञानेन तमसा आवृताः आच्छादिताः तान् स्थावरान् प्रेत्य इमं देहं त्यक्त्वा अभिगच्छन्ति यथा कर्म यथाश्रुतम्' इति ॥ ३ ॥

## उपनिषत्

**अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन् पूर्वमर्षत् ।**
**तद्धावतोऽन्यान् अत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥४॥**

## भाष्यम्

'अनेजन्निर्भयत्वात्तदेकं प्राधान्यतस्तथा ।
सम्यग्ज्ञातुमशक्यत्वादगम्यं तत्सुरैरपि ॥

स्वयं तु सर्वानगमत्पूर्वमेव स्वभावतः ।
अचिन्त्यशक्तितश्चैव सर्वगत्वाच्च तत्परम् ॥

[१]द्रवतोऽत्येति सन्तिष्ठत्तस्मिन् कर्माण्यधान्मरुत् ।
मारुत्येव यतश्चेष्टा [२]सर्वा तां हरयेऽ[३]र्पयेत् ॥
इति ब्रह्माण्डे ॥ 'ऋष ज्ञाने' ॥ ४ ॥

**टीका-** एवं [४]निवृत्तकर्मणः विशुद्धाशयस्यैहिकामुष्मिकाशेषविषयेभ्यो व्यावृत्तस्य ईश्वरतत्त्वबुभुत्सावतः कोऽसावात्मा यद्विपरीतोपासनमसुर्यलोक- प्राप्तिसाधनं स्यादित्यपेक्षायां परमात्मतत्त्वोपदेशः क्रियते अनेजदित्यादिना । तत्राद्यं मन्त्रमन्यथाप्रतीतिनिरासाय स्मृत्यैव व्याचष्टे- **अनेजदिति** ॥ तत्परमात्मस्वरूपं निर्भयत्वादेव अनेजत् अकम्पमानम् । न तु निष्क्रियत्वात् । प्राधान्यत एव चैकं न तु द्वितीयवस्तुरहितत्वात् । तथाशब्दो विशेषणसमुच्चये ।

---

१.धावतः । २.सर्वां । ३. अर्पयत् । ४. निवृत्तकर्मणा ।

**मनसोऽपि जवीयो वेगवत्तरम् । मनो हि वेगवत्प्रसिद्धम् । सम्यज्ज्ञातुमशक्यत्वादेव ' नैनद्देवा आप्नुवन्' इति तत्सुरैरपि अगम्यमुच्यते । न तु सर्वथा अगोचरत्वात् । 'पूर्वमर्षत्' इत्यस्य व्याख्यानं 'स्वयं तु सर्वान्' इति । अगमत् व्यजानात् । पूर्वमेवेत्यनुवादेन स्वभावत इति विवरणम् । अचिन्त्यशक्तितश्च सर्वगतत्वाच्च तत्परं ब्रह्म सन्तिष्ठत् द्रवतो अन्यान् अत्येति इत्युच्यते । न तु अन्यस्य कल्पितत्वात् । अप इत्यस्य व्याख्यानं कर्माणीति । आ समन्तात् पालयन्तीति कर्माण्यापः । सर्वैः क्रियमाणानि कर्माणि तस्मिन्नर्पितवानित्यर्थः । अन्यकर्माणि कथं मातरिश्वा अर्पयेदित्यत आह- मारुतीति ॥ यतः सर्वा चेष्टा मरुत्प्रेरणयोत्पन्नत्वात् मारुती अतस्तां हरये हरावर्पयेदित्युक्तमित्यर्थः । 'अर्षत्' इत्येतत् 'अगमत्' इति व्याख्यातम् । तन्मूलभूतं धातुसूत्रमपि पठति 'ऋष ज्ञाने' इति । अनेजदित्यादेः निष्क्रियत्वाद्यर्थकल्पने 'मनसो जवीयः' इत्यादिविरोधश्च । न च सोपाधिक-निरुपाधिकत्वेन व्यवस्था । मुख्यार्थसम्भवे अमुख्यार्थायोगात् । स्वप्रधाने ब्रह्मणि वेदान्तानां तात्पर्यादत्र स्वरूपकथनमात्रेण वाक्यपरिसमाप्तिः ॥ ४ ॥**

**वामन**- अथो तस्य स्वरूपं कीदृशमित्याकाङ्क्षायामाह- **अनेजदिति** ॥ इह तावन्मन्त्रग्रहणे मनुर्मन्त्रमाहेति भाष्यकर्तुरभिप्रायं सूचयित्वा भाष्याभिप्रायमेव वयं किञ्चिद् ब्रूमः । भाष्यग्रहणे भाष्यकारस्तदाहेत्येष एव विशेषः ॥

इमं मन्त्रं 'अनेजन्निर्भयत्वात् तत्' इत्यादिब्रह्माण्डवचनेन व्याख्याति । अनेजत् भयकम्परहितम् । 'एजृ कम्पने' इति धातोः । देवा एनत् नाऽप्नुवन् सम्यज्ज्ञातुं नाशक्नुवन् । 'न यस्येन्द्रो वरुणो न मित्रो व्रतमर्यमा न मिनन्ति रुद्रः' इत्यादेः । सर्वस्मात् पूर्वतनं चेदम् । सर्वस्रष्टृत्वात् । नचैतदौपाधिकम् । 'स्वभावतः' इति वचनात् । अर्षत् सर्वं व्यजानात् । 'ऋष ज्ञाने' इति धातोः । तिष्ठत एव धावज्जनात्ययः सर्वैश्वर्यात् । तस्मिन् उक्तलक्षणे विष्ण्वाख्यब्रह्मणि अपः स्वमनोवाक्कायकर्माणि मुख्यप्राणः समर्पयेत् । या पुनः सर्वप्राणिषु दृश्यमाना सर्वचेष्टा सापि मारुती मरुता एव कारिता । 'वायुना हि सर्वे लोका नेनीयन्ते' इत्यादिश्रुतेः । अतस्तामपि सर्वां स्वस्वामिनि विष्णौ समर्पयेत् तत्पूजाऽस्त्विति ॥४॥

**वादि-** 'अगमत् व्यजानात्' इत्यत्र गत्यर्थानां ज्ञानार्थत्वादिति भावः । 'अचिन्त्यशक्तितः' इति वदता भाष्यकारेण अत्रैव स्थितस्य अनन्तरूपग्रहण-शक्तिसद्भावाच्च एकेन रूपेण तिष्ठतः रूपान्तरेण द्रवतोऽत्येतीति गत्यन्तरं सूचितम् । अप इत्यस्य व्याख्यानं कर्माणीति । कर्माणीत्यत्र सर्वकर्मणामन्ते कृष्णार्पणबुद्ध्या अपां दीयमानत्वात् शिखाग्रहणेन शिखिनामाकर्षवदप्पदेन सर्वकर्मणामुपलक्षणमिति भावः । एतादृशं ब्रह्म उपासीत इत्यादिज्ञात्रपेक्षितक्रियानभिधानात् स्वप्रधाने ब्रह्मणीत्युक्तम् । सास्नादिमती गौः, पृथुबुध्नोदराकारो घट इत्यादौ लौकिकवाक्ये, 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रौतवाक्ये च स्वरूपमात्रनिरूपणेनापि वाक्यपर्यवसानदर्शनादिति भावः ॥ ४ ॥

**श्रीनि- तथेति** ॥ विशेषणसमुच्चये विशेषणस्य व्याख्यानस्य समुच्चये । तदेव दर्शयति- **मनसोऽपीति** ॥ स्यादिदं यदि मनो वेगवत् स्यात् तदेव कुत इत्यत आह- **मनो हीति** ॥ पालयन्ति फलदानेनेति भावः । कथं अर्पयदित्यन्वयः । निष्क्रियत्वाद्यर्थेत्यत्रादिपदेन द्वितीयवस्तुराहित्यसर्वथावाङ्-मनसागोचरत्वजगन्मिथ्यात्वरूपार्थानां परिग्रहः ॥ **मनसो जवीय इति** ॥ तत्र चलनादिक्रियोक्तेरिति भावः । आदिपदेन एकशब्दस्य द्वितीयवस्तुराहित्यार्थकत्वे 'यस्तु सर्वाणि भूतानि' इति द्वितीयवस्तुप्रतिपादकवाक्येन विरोधः । 'नैनत्' इत्यस्य सर्वथा वाङ्मनसागोचरत्वार्थकत्वे 'विजानत एकत्वमनुपश्यतः' इति ज्ञानकर्मताप्रतिपादकवाक्यविरोधः। तद्धावत इत्यस्यान्यस्य कल्पितत्वाभिप्रायकत्वे 'याथातथ्यतोऽर्थान्' इति वाक्यविरोध इति द्रष्टव्यम् ॥ **न चेति** ॥ क्रियावाङ्मनसगोचरत्वप्रतिपादकेषु 'मनसो जवीयः' इत्यादिषु सोपाधिकस्य ब्रह्मणः प्रतिपाद्यत्वं निष्क्रियत्वप्रतिपादकेषु निरुपाधिकस्येति न च वाच्यमित्यर्थः ॥ **मुख्यार्थेति** ॥ सर्ववाक्येष्वपि अस्मदुक्तरीत्या एकस्य भगवत एव प्रतिपाद्यत्वसम्भवे ब्रह्मणः द्वैविध्यं प्रकल्प्य व्यवस्थया तदुभयप्रतिपादकत्वं वाक्यानामित्येवंरूपामुख्यार्थकथनं न युक्तमित्यर्थः । ननु कार्यताबोधकपदोपेतेष्वेव वाक्येषु अन्वयपरिसमाप्तेः 'गामानय' इत्यादिषु दर्शनात् केवलबोधकेषु वाक्येषु घटपटस्तम्भादिषु तददर्शनादस्य च 'अनेजत्' इति वाक्यस्य केवलपरब्रह्मरूप-कार्यान्वितसिद्धार्थबोधकत्वात् वाक्ये अन्वयापरिसमाप्तिर्दोष इत्यत आह- **स्वप्रधान**

**इति** ॥ कार्यानन्विते कार्यातिरिक्तरूपे सिद्धार्थे इत्यर्थः । 'इयं माता'इत्यादौ केवलसिद्धार्थबोधनेनैव वाक्यपरिसमाप्तिदर्शनादिति भावः ॥ ४ ॥

**छलारी- अशेषविषयेभ्यो विरक्तस्येति** ॥ 'ईशावास्यम्' इति प्रथममन्त्रोक्तमिदं प्रमेयं 'पाठक्रमादर्थक्रमो बलीयान्' इति न्यायेन 'कुर्वन्नेवेह कर्माणि' इति द्वितीयमन्त्रोक्तप्रमेयस्योपयोगकथनानन्तरमिदमुक्तम् । कर्मणा शुद्धान्तःकरणस्यैव वैराग्यजननात् ॥ **अनेजत् अकम्पमानमिति** ॥ 'एजृ कम्पने' इति धातोः लटः शत्रादेशे पश्चात् नञ्समासः । 'अचिन्त्यशक्तितश्चैव' इत्यत्र एवकारस्य सर्वत्रान्वयमभिप्रेत्य तद्व्यावर्त्यान्याह- **नतु निष्क्रियत्वा-दित्यादिना** ॥ **मनसोऽपि जवीय इति** ॥ जवशब्दात् वेगवाचकात् 'द्विवचन विभज्योपपदे...' (सि.कौ.२००५) इति ईयसुन् प्रत्ययः । उभयोर्वेगवत्वे हि एकस्यातिशयेन वेगवत्वं स्यात् । तत्कथं मनसो वेगवत्वमित्यत आह- **मनो हीति** । ब्रह्मणः मनोऽपेक्षया कथमतिशयेन वेगवत्वमित्यतस्तदभिप्रायमाह- **सम्यग्ज्ञातुमशक्यत्वादिति** ॥ 'मनसा' इति शेषः ॥ **नैनद्देवा आप्नुवन्नितीति** ॥ देवा एनत् इदं परं ब्रह्म न प्राप्नुवन्ति साकल्येन न जानन्ति । प्राप्त्यर्थानां धातूनां ज्ञानार्थत्वादिति भावेन भाष्यं संयोजयति- **सुरैरप्यगम्यमुच्यत इति** ॥ **अचिन्त्यशक्तित इति** ॥ अयं हेतुः तिष्ठतः अणोः ब्रह्मण एव सदातिक्रमणे । **अप इत्यस्येति** ॥ 'आपः अपः अद्भिः अद्भ्यः' इति वैदिकनिघण्टौ कर्मनामसु पाठादिति भावः । केषाञ्चित् पदानां सोपाधिकत्वार्थकल्पने बाधकान्तरमाह- **स्वप्रधान इति** ॥ वाक्यपरिसमाप्तिरित्यतःपरं ततश्च मनसो जवीय इत्यादीनां सोपाधिकत्वाद्यर्थकल्पनानुपपत्तेः नेत्यध्याहार्यम् ॥ ४ ॥

**सत्य- निवृत्तकर्मण इति** ॥ निष्कामज्ञानपूर्वककर्मवत इत्यर्थः । तदुक्तम् । 'निष्कामं ज्ञानपूर्वं तु निवृत्तमिति चोच्यते' इति ॥ **असावर्पयेदिति** ॥ क्वचिद्भाष्यटीकयोरर्पयदिति पाठः । तत्राडभावः छान्दसः, टीकायां तु तस्यैवानुवाद इति द्रष्टव्यम् । ननु निरुपाधिकस्य निष्क्रियत्वं, सक्रियत्वं तु सोपाधिकस्येति न विरोध इत्याशङ्क्य निषेधति- **न च सोपाधिकेति** ॥ **मुख्यार्थसम्भव इति** ॥ सोपाधिकस्य मिथ्यात्वेनामुख्यत्वं स्यादिति भावः । ननु कार्यबोधकमेव वाक्यं पर्यवसितमनुभूयते । प्रकृते च सिद्धस्वरूपब्रह्म-

बोधकत्वात् वेदान्तवाक्यानां पर्यवसानं न स्यादित्यत आह- **स्वप्रधाने ब्रह्मणीति** ॥ कार्यानन्वित इत्यर्थः । इष्टेष्टसाधनातिरिक्तकार्यस्यैवाभावात् विष्णोश्च उत्तमाधिकारिणः प्रति इष्टत्वात् मध्यमाधिकारिणः प्रतीष्टसाधनत्वात् तद्बोधकनां वेदान्तवाक्यानां परिसमाप्तिर्युक्तैवेति भावः ॥ ४ ॥

**नृसिंह- निवृत्तकर्मण इति** ॥ द्वितीयमन्त्रार्थानुवादः। ये के इति प्रथममन्त्रस्य विरागं प्रति निवृत्तकर्मणां हेतुतोपपादनाय क्रमोल्लङ्घनम् । 'कर्मणा शुद्धसत्त्वस्य वैराग्यं जायते हृदि' इत्युक्तं प्राधान्यतः, तथा प्राधान्याच्चेति समुच्चयः प्रतीयते । तदयुक्तम् । निमित्तान्तरानुक्तेरित्यत आह- **तथा शब्द इति** ॥ 'अनेजत्' इत्येकं विशेषणमुक्त्वा एकत्वरूपविशेषणान्तरं समुच्चिनोतीत्यर्थः । वेगवत्तरत्वे मनस एव प्रतियोगिता किमिति निरूप्यत इत्यत आह- **मनो हीति** ॥ कर्मणामपशब्दवाच्यत्वं कथमित्यत आह- **आ समन्तादिति** ॥ नन्वेवं सत्कर्मणामेव अप्छब्दवाच्यता स्यात् । इतरेषां पालकत्वाभावादिति चेत् सत्यम् । भगवत्पूजात्मकत्वेन मरुत्प्रवरेणार्पणस्य क्रियमाणत्वात् मुख्यवृत्त्या सत्कर्मणा-मेवापशब्देनोक्तौ इतराण्यपि क्रियात्वादिसादृश्यात् गौण्या वृत्त्या उच्यन्ते । तत्रार्पणं नाम तत्कर्तृकत्वानुसन्धानमेवेति द्रष्टव्यमिति भावः ॥

ननु 'अनेजत्' इत्यादेः निष्क्रियत्वाद्यर्थतैव किं न स्यादिति चेन्न, प्रमाणेन व्याख्याततत्वात् । किञ्च यद्यनेजत् निष्क्रियमित्यर्थः स्यात्, तर्हि मनसो जवीय इति विरुद्ध्येत । क्रियाभावे वेगवत्तरत्वाभावात् । एकमित्यस्य द्वितीयवस्तुराहित्य-मर्थश्चेत्, 'नैनद्देवा आप्नुवन्' इति वचनविरोधः । तत्र देवानामेव द्वितीयतया अभिहितत्वात् । न खलु सुराणां नरशृङ्गायमानत्वे तदज्ञेयता वक्तुं रमणीया स्यात् अप्राप्तप्रतिषेधप्रसङ्गात् । यदि च 'नैनद्देवा आप्नुवन्' इत्यत्र सर्वथा अगम्यत्वमभिमतं चेत्, तदा 'तस्मिन्नपो मातरिश्वा दधाति' इत्ययुक्तं प्रसज्येत । न हि अनवद्यागण्यकल्याणगुणैरतिपूर्णतया साकल्येनागोचरं नारायणाभिधं ब्रह्म सर्वथाप्यविदित्वा भगवतो वासुदेवस्य परमाप्ततमेन निजतेजसैव अनादितोऽप्यवगत-परावरेण हरिचरणारविन्दपरागसंसक्तमानसेन भगवता वायुदेवेन तत्र सर्वकर्माणि अर्पयितुं युक्ततामर्हन्ति । 'तद्धावतोऽन्यानत्येति' इत्यत्र अत्ययनस्य कल्पितत्वाभिप्राये 'तद्दूरे तद्वन्तिके' इत्यादिविरोधः । तत्रापि स्वार्थे तात्पर्यं नास्तीति चेन्न, 'यस्तु

सर्वाणि' इत्यादिना फलकथनेन तात्पर्यावगमात्, तत्रापव्याख्यानं तु निराकरिष्यते । ननु स्वाभाविकेन रूपेण निष्क्रियत्वादिकं ब्रह्मणः, औपाधिकेन तु मनसो जवीयस्त्वादि । अतो न विरोध इति चेत्, भवेदेवं कल्पना, यदि मुख्यार्थाङ्गीकृतौ न विरोधशान्तिर्भवेत् । नैतदस्ति । सकलश्रुतिस्मृतियुक्त्यनुभवसिद्धस्य मुख्यस्यैवार्थस्य भगवता भाष्यकारेण अविरोधेनैवोक्तत्वात् । मुख्यसम्भवे चामुख्यायोगात् । अतो नैवं व्यवस्था युज्यत इति तदेवाह- **अनेजदित्यादेरिति** ॥ ४ ॥

**कल्ला- मनसो वेगवत्तरमिति** ॥ यद्यपि मनसो न बाह्यविषयं प्रति गमनम् । मायिमत इवानङ्गीकारात् । बाह्यदूरस्थार्थस्मृतिकारणत्वमेव वेगवत्त्वम् । भगवतस्ततोऽपि वेगवत्त्वम् । यावता कालेन मनसा बाह्यार्थस्मृतिः ततोऽप्यल्पकालेन दूरस्थपदार्थं प्रति गन्तृत्वमिति भाति ॥ **अचिन्त्यशक्तित्वा-त्सर्वगतत्वाच्चेति** ॥ आद्यं परिच्छिन्नरूपापेक्षया, द्वितीयं सर्वगतरूपापेक्षया । सन्तिष्ठत् आसीनमित्यर्थः ॥ ४ ॥

**रघु-** उत्तरमन्त्रस्यापि उपोद्घातत्वभ्रान्तिं परिहरन् अनुष्ठानोपयोगितया-वृत्तमन्त्रत्रयार्थानुवादेन अवसरसङ्गतिप्रदर्शनपूर्वकं वर्तिष्यमाणमन्त्रसन्दर्भमवतारयति- **एवमित्यादिना** ॥ आशयस्य इत्यन्तेन द्वितीयमन्त्रस्यार्थोऽनूदितः । व्यावृत्तस्येत्यन्तेन प्रथमस्य वैराग्यं प्रति निवृत्तकर्मणामन्तःकरणशुद्धिद्वारा हेतुत्वज्ञापनाय क्रमोल्लङ्घनम् । बुभुत्सावत इत्यन्तेन तृतीयस्य अपेक्षायामित्यन्तेन अवसरसङ्गतिरुक्ता । अवशिष्टेन उत्तरमन्त्रसन्दर्भप्रतिपाद्यमुक्तमिति ज्ञातव्यम् ॥ **तत्रेति** ॥ उत्तरमन्त्रसन्दर्भ इत्यर्थः ॥ **अन्यथाप्रतीतिनिरासायेति** ॥ एतदुभयमुत्तरटीकायां स्पष्टम् । स्मृत्यैव इत्यवधारयता लाघवं सूचितम् । प्रथमं स्ववचनेन व्याख्याय तत्र प्रमाणोपन्यासे गौरवं स्यादिति भावः । तच्छब्दत्रयं विशेष्यसमर्पकं सर्वत्र अन्वेतीति भावेन आद्यमनूद्य व्याचष्टे- **तदिति** ॥ उत्तरं द्वयमप्येवमेव व्याख्यातव्यमिति भावः ॥

निर्भयत्वादित्यादिहेतूनामेकमित्यादिना अन्वयभ्रान्तिं परिहरन् हेत्वनुवादेन साध्यसम्बन्धं दर्शयति- **निर्भयत्वादेवेति** ॥ अपव्याख्याननिराकरणस्य भाष्यारूढत्वार्थं 'अचिन्त्यशक्तितश्चैव' इत्येवशब्दस्य सर्वैः पञ्चम्यन्तैः

सम्बन्धमभिप्रेत्य अत्र सम्बन्धो दर्शितः । एवमुत्तरत्रापि द्रष्टव्यम् ॥ **अनेजदिति** ॥ अनेजदित्युच्यत इत्यर्थः । एकमित्यप्येवं व्याख्येयम् । निर्भयत्वादीनां शब्दवाच्यत्व एव हेतुत्वात् । अत एवोत्तरत्र अगम्यमुच्यत इत्याद्युक्तम् । 'एजृ कम्पने' इति धातुं मनसि निधाय आह- **अकम्पमानमिति** ॥ अवधारण-व्यावर्त्यतया अपव्याख्यानं दर्शयति- **नतु निष्क्रियत्वादिति** ॥ एवमुत्तरत्रापि ज्ञातव्यम् । उपमार्थत्वासम्भवादाह- **तथाशब्दो विशेषणसमुच्चय इति** ॥ समुच्चय इत्येवोक्ते न केवलं निर्भयत्वादनेजत् तथा एकमिति विशिष्टसमुच्चयः प्रतीयेत । स चायुक्तः । निर्भयत्वस्य एकशब्दवाच्यत्वे निमित्तत्वासम्भवात् । अतो विशेषणसमुच्चय इत्युक्तम् । न केवलमनेजत् तथा एकमिति विशेषणसमुच्चय इत्यर्थः । 'मनसो जवीयः' इत्येतत्प्रमाणे अव्याख्यातत्वात् स्वयं व्याचष्टे- **मनसोऽपीति** ॥ श्रौतकर्मानुसारेणात्र व्याख्यातमित्यवगन्तव्यम् । मनोग्रहणस्य अभिप्रायमाह- **मनो हीति** ॥ **सम्यगिति** ॥ साकल्येनेत्यर्थः ॥

ननु प्रमाणे 'तत्सुरैरगम्यमुच्यते' इति साध्यकथनमयुक्तम् । श्रुतौ 'नैनद्देवा आप्नुवन्' इत्युक्तत्वेन तद्विसंवादप्रसङ्गादित्यतः तदर्थानुवादरूपत्वान्न दोष इति भावेन 'नैनद्देवा आप्नुवन्निति' इत्युक्तम् । 'नैनद्देवा आप्नुवन्' इत्यनेन तत्सुरैरगम्य-मुच्यत इत्यर्थः । अत्र देवा एनत् परमात्मस्वरूपं मनआदिभिः न आप्नुवन्निति योजनया श्रुतौ गमेरवगमार्थत्वेन भाष्ये च देवाज्ञेयत्वमुच्यते, न तु देवाप्राप्यत्वम् । सम्यज्ज्ञातुमशक्यत्वादिति हेतुकथनेन । न तु सर्वथाऽगोचरत्वादित्यपव्याख्यान-निराकरणेन च विरोधप्रसङ्गादिति ज्ञातव्यम् । एवशब्दव्यावर्त्यतयापव्याख्यानं दर्शयति- **न तु सर्वथा अगोचरत्वादिति** ॥ एवं हि परेषां व्याख्या 'द्योतनाद्देवाः चक्षुरादीन्द्रियाणि एनत् प्रकृतपरमात्मतत्त्वम् । नाप्नुवन् ज्ञापनाय नाप्नुवन्ति' इति । टीकायां सर्वथा अगोचरत्वादित्युक्तिरर्थानुवाद इति ज्ञातव्यम् । गमेर्गत्यर्थतायां 'ऋष ज्ञाने' इत्युत्तरभाष्यविरोधप्रसङ्गादवगत्यर्थमाह- **व्यजानादिति** ॥ ननु प्रमाणे स्वभावत इति व्यर्थं श्रुत्यननुगुणश्च। न च पूर्वमेवेति श्रौतपदव्याख्यान-रूपत्वान्न दोष इति वाच्यम् । तथा सति पूर्वमेवेत्यस्य वैयर्थ्यप्रसङ्गादित्यतो व्याख्येयपदानुवादरूपत्वान्न तदित्याशयेनाह- **पूर्वमेवेत्यनुवादेनेति** ॥ न च श्रुतावेवशब्दाभावात् प्रमाणे कथं पूर्वमेवेति अनुवाद इति वाच्यम् । स्वाभावत

इत्यर्थलाभाय 'सर्वं वाक्यं सावधारणम्' इति न्यायेन अध्याहृतावधारणस्य अनुवादोपपत्तेः । सावधारणत्वे हि पूर्वमेव न तु आगन्तुकस्य इत्युक्त्या स्वभाव इत्यर्थलाभसम्भवादिति भावः। एतदर्थमेव च अनुवाद इति ज्ञातव्यम् ॥ **अचिन्त्यशक्तितश्चेति** ॥ इयमत्र योजना । तत्परं ब्रह्म द्रवतोऽन्यानत्येतीत्युच्यत इत्यत्र सर्वगतत्वमेव हेतुः, न तु अचिन्त्यशक्तिरपि । गगनादीनामिव सर्वगतत्वमात्र-निर्वाह्येऽचिन्त्यशक्त्यनपेक्षणात् । 'सर्वगत्वात् स दूरे च' इति वक्ष्यमाण-प्रमाणानुरोधाच्च । 'सन्तिष्ठत् द्रवतोऽन्यानत्येति' इत्युच्यत इत्यत्र अचिन्त्यशक्तित इति हेतुः । तिष्ठतो द्रवदतिक्रमणस्य लोकविरुद्धत्वेन सर्वगतत्वानिर्वाह्यस्य अचिन्त्यशक्त्यपेक्षणात् । 'ऐश्वर्यादेव आसीनो दूरं व्रजति' इत्यादि,

आसीनो दूरं व्रजति शयानो याति सर्वतः ।
ऐश्वर्याद्भगवान् विष्णुः विरुद्धं घटयत्यसौ ॥ (का.भा.१.२.२२)

इति काठकभाष्योक्तेश्च । न च एवं हेतुद्वयस्य भिन्नसाध्यकत्वे चशब्दानुपपत्तिः । हेतुसमुच्चयमात्रे चशब्दाङ्गीकारात् । अत्र अचिन्त्यशक्तितः सर्वगतत्वादित्युभयं न तु इत्यपव्याख्याननिरासलाभाय सावधारणं व्याख्येयम् । पूर्वन्यायेन सिद्धत्वादचिन्त्यशक्तितश्चैव इत्यवधारणसद्भावाच्च टीकायां नोक्तमिति ज्ञातव्यम् ॥

श्रुतिभाष्ययोः विसंवादं परिहारति- **अप इत्यस्येति** ॥ यद्यपि अत्र अप इति न अपूशब्दस्य द्वितीयाबहुवचनान्तम् । तस्य कर्मवाचकत्वासम्भवात् । तद्धि रूढ्या योगेन वा । नाद्यः । वेदनिघण्टौ पकारान्तस्यापूशब्दस्य कर्मनामसु अपठितत्वात् । अपः अप्नः दंसः वेप इत्यादीनि कर्मनामानीति सकारान्तस्यै-वापःशब्दस्य कर्मनामसु पठितत्वाच्च । टीकाकृतापि 'दक्षं दधाते अपसम्' (ऋ.सं.१.२.९) इत्यस्यामृचि 'कर्मापसं च कर्तारम्' इति भाष्यव्याख्यानावसरे अपसं कर्मेति ऋक्पदभाष्यपदयोः सम्बन्धं प्रदर्श्य तदुपपादनायापःशब्दः कर्मनामेत्युक्तत्वाच्च । न द्वितीयः । उणादिवृत्तौ 'आप्नोतेः ह्रस्वश्च' आप्लृव्याप्ता-वित्यस्मात् क्विप् प्रत्यये ह्रस्वे च कृते निष्पन्नस्यापूशब्दस्य अम्भोवाचित्व-मित्युक्तत्वेन अम्भसि योगेऽपि कर्मणि तदभावात् । तथापि 'विश्वे देवासो अप्तुरः' (ऋ.सं१.३.८) इत्यस्यामृचि 'अप्तुरः कर्मवेगिनः' इति भाष्यव्याख्यानावसरे टीकायामपूशब्दः कर्मवाचीत्युक्तत्वेन अत्रापि पकारान्तस्यैवापूशब्दस्य ग्रहणोपपत्तेः ।

न च योगरूढ्योरभावः । उणाद्यनुसारेण योगोपपत्तेः। न च तत्र अम्भोवाचित्वमित्युक्तत्वेन कर्मणि योगासम्भवः इति वाच्यम् । प्रयोगानुसारेण अम्भोवाचित्वमिति उणादिवृत्तेः कर्मवाचित्वोपलक्षणत्वोपपत्तेः । कर्मणामपि प्रतिपुरुषं व्याप्तत्वात् । अथवा आङ्पूर्वात् 'पा रक्षणे' इत्यस्मात् क्विपि निर्वचनत्वात् आङो ह्रस्वत्वे च निष्पन्नस्यापूशब्दस्य कर्मवाचित्वे बाधकाभावात् । न हि उणादिवृत्त्यनुसारेणैव योगोऽङ्गीकार्य इति निर्बन्धे कारणमस्ति । अत एव अनुव्याख्याने 'आप आपालनाच्च' इत्युक्तम् । एतदेवाभिप्रेत्य टीकायां 'आ समन्तात् पालयन्ति' इति योगप्रदर्शनं कृतमिति ज्ञातव्यम् । ननु कर्मणां भगवत्याधानं नाम भगवति समर्पणमेव नान्यत् । 'सर्वा तां हरयेऽर्पयेत्' इत्युत्तरप्रमाणानुरोधात् तत्र किं मातरिश्वा स्वकृतानि कर्माण्यर्पितवानुत सर्वैः क्रियमाणानि । नाद्यः । तस्य भगवद्भक्तमात्रसाधारणत्वेन विशिष्य मातरिश्वनस्तत्कथनानुपपत्तेः । न द्वितीयः । अन्यदीयस्य कर्मणोऽन्येन समर्पणानुपपत्तेरित्यतो द्वितीयपक्षाङ्गीकारपरत्वेन भाष्यं व्याचष्टे- **सर्वैः क्रियमाणानीति** ॥ अत्र समर्पणं नाम सर्वकर्मणां भगवत्कर्तृत्वेन तत्पूजात्वेन तद्भक्तिप्रसादफलकत्वेन अनुसन्धीयमानत्वम् । यथोक्तं गीतातात्पर्यनिर्णये-

नाहं कर्ता हरिः कर्ता तत्पूजा कर्म चाखिलम् ।
तथापि मत्कृता पूजा तत्प्रसादेन नान्यथा ॥

तद्भक्तिस्तत्फलं मह्यं तत्प्रसादः पुनः पुनः ।
कर्मन्यासो हरावेवं विष्णोस्तुष्टिकरः सदा ॥ इति गीता.३.२७ ॥

अनेन 'मातरिश्वा अपः कर्माणि अग्न्यादीनां ज्वलनदहनप्रकाशनाभिवर्षणादीनि दधाति विभजति धारयति च' इत्यपव्याख्यानं निरस्तं भवति । इदानीं द्वितीयपक्षोक्तदोषपरिहाराय उत्तरं भाष्यं व्याख्यातुं तमेव दोषमाशङ्कते- **अन्यकर्माणीति** ॥ अन्यकृतकर्माणीत्यर्थः । अन्यथा सर्वेषामपि तत्स्यादविशेषादिति भावः ॥

सर्वैः क्रियमाणा चेष्टा कथं मारुती स्यात् बाधादित्याशङ्कां परिहरन्नपेक्षिताध्याहारपूर्वकं भाष्यं योजयति- **यत इति** ॥ अन्येषाममुख्यकर्तृत्वेऽपि

प्रेरकत्वाद्वायोरेव मुख्यकर्तृत्वमतो न बाधो नाप्यविशेष इति भावः । यद्यपि आ समन्तात् पालयन्तीति पूर्वोक्तव्युत्पत्त्या सत्कर्मणामेव पालकत्वादपूशब्दार्थत्वं प्रतीयते । तथापि सर्वैः क्रियमाणानि कर्माणि तस्मिन्नर्पितवान् यतः सर्वा चेष्टा मरुत्प्रेरणयोत्पन्नेत्यादिटीकानुसारेण 'मारुत्येव यतश्चेष्टा सर्वा' इत्यादिभाष्यानुसारेण च उपलक्षणत्वेन असत्कर्मणामप्यपूशब्दार्थत्वं ज्ञातव्यम् । तेषां भगवदर्पणं नाम तत्कर्तृकत्वेनानुसन्धानमिति ज्ञातव्यम् ॥ **तन्मूलभूतमिति** ॥ व्याख्यानमूल-भूतमित्यर्थः ॥ **धातुसूत्रमपीति** ॥ आगमस्य स्वयं प्रमाणत्वादपि शब्दः । धातुसूत्रापठने गमेर्ज्ञानार्थत्वं न ज्ञायेत । सम्यग्ज्ञातुमशक्यत्वादिति पूर्ववाक्यार्थ-पर्यालोचनया तज्ज्ञानसम्भवेऽपि प्रतिपत्तिगौरवप्रसङ्गादिति भाष्यकृतो भावः स्फुटत्वान्न वर्णित इति बोध्यम् । यद्यपि काशिकायां 'ऋषी गतौ' इति धातुं पठित्वा ईदित्वादेव हि ऋष्ट इत्यादौ 'श्वीदितो निष्ठायाम्' (सि.कौ.३०३९) इति निष्ठाया अनिट्त्वमुक्तम् । धातुपाठेऽपि 'ऋषी गतौ' इति ईदित्त्वेन गत्यर्थक एव धातुः पठ्यते न तु 'ऋष ज्ञाने' इति । तथापि गत्यर्थस्य ऋषतेर्ज्ञानार्थत्व-मुक्तानुबन्धत्वं च अभिप्रेत्य भाष्ये 'ऋष ज्ञाने' इति धातुः पठित इति द्रष्टव्यम् । यद्वा सर्वज्ञभाष्यकृत्प्रयोगानुसारेण 'ऋष ज्ञाने' इत्यपि धातुरस्तीति ज्ञातव्यम् । अपव्याख्याने प्रमाणविरोधपरं भाष्यमुपलक्षणमित्याशयेन अन्तरङ्गानुपपत्तिमप्याह- **अनेजदित्यादेरिति** ॥ अत्र आद्येन आदिशब्देन एकमित्यादेः, द्वितीयेन अद्वितीयत्वादेः, तृतीयेन तद्धावतोऽन्यान् इत्यादेः ग्रहणम् । ततश्चायमर्थः । अनेजदित्यस्य निष्क्रियार्थत्वे सक्रियत्वप्रतिपादकेन 'मनसो जवीयः' इत्यनेन विरोधः । एकमित्यस्य द्वितीयराहित्यार्थत्वे 'तद्धावतोऽन्यान्' इत्याद्यन्यसद्भाव-प्रतिपादकविरोधः । 'नैनद्देवा आप्नुवन्' इत्यस्य सर्वथा इन्द्रियागोचरत्वार्थत्वे 'यत्ते रूपं कल्याणतमं तत्ते पश्यामि' इति दर्शनप्रार्थनविरोधः । एवमन्यत्रापि विरोधो द्रष्टव्य इति ॥

ननु निरुपाधिकचैतन्यस्य निष्क्रियत्वं सर्वेन्द्रियागोचरत्वं चोच्यते । सक्रियत्वमिन्द्रियगोचरत्वञ्च सोपाधिकस्य । 'मनसो जवीयः' इत्यस्य अन्तः-करणावच्छिन्नचैतन्यपरत्वेन 'यत्ते रूपम्' इत्यादेरादित्यपरत्वेन परेण व्यख्यातत्वादेवं परमार्थापेक्षया अद्वितीयत्वं व्यावहारिकापेक्षयाऽन्यप्रतिपादन-

मित्यतो न कोऽपि विरोध इत्यशङ्क्य परिहरति- **न चेति** ॥ सोपाधिकेत्याद्युपलक्षणं पारमार्थिकत्वव्यावहारिकत्वेनेत्यपि द्रष्टव्यम् । कुतो नेत्यत आह- **मुख्यार्थेति** ॥ निरुपाधिकचैतन्यस्य अकल्पितत्वेन मुख्यत्वात् सोपाधिकस्य कल्पितत्वेन अमुख्यत्वादस्मदुक्तन्यायेन सर्वस्य मुख्यब्रह्मपरत्वसम्भवेन 'मनसो जवीयः' इत्यादेः कल्पितामुख्यचैतन्यार्थत्वायोगात् । व्यावहारिकस्यापि कल्पितत्वेनामुख्यतया 'तद्धावतोऽन्यान्' इत्यादेरस्मदुक्तन्यायेन अकल्पितमुख्यार्थत्वसम्भवेऽमुख्यार्थत्वायोगादित्यर्थः । उपलक्षणमेतत् । एवशब्दस्य परमार्थद्वितीयराहित्यार्थत्वे 'याथातथ्यतोऽर्थान्' इत्यादिविरोधः । तत्र महदादीनां याथातथ्यत इत्यनेन परमार्थत्वस्य उक्तत्वादित्यपि द्रष्टव्यम् । यद्वा अमुख्यार्थायोगादित्यस्य लक्षणार्थायोगादित्यर्थः । 'अनेजदेकम्' इत्यादेर्निरुपाधिकचैतन्यपरत्वं वदता परेण लक्षणाया अङ्गीकर्तव्यत्वात् अङ्गीकृतत्वाच्चेति व्याख्यातव्यम् । ननु न लक्षणाङ्गीकार एव दोषः । तथा सति कुत्रापि सा न स्यादित्यत उक्तम्- **मुख्यार्थसम्भव इति**॥ अस्मदुक्तरीत्या वाच्यार्थसम्भवे इत्यर्थः । ननु अपव्याख्यान इव भाष्यकृद्व्याख्यानेऽपि अस्ति अनुपपत्तिः। यथा हि अनेकपदात्मकवाक्यश्रवणात् अनेकार्थप्रतीतावपि वाक्यस्य तावदेकत्र तात्पर्यं कल्प्यम् । अन्यथा एकवाक्यत्वासम्भवात् । 'यत्परः शब्दः स शब्दार्थः' इति च शाब्दाः । वाक्यतात्पर्यविषयश्च स एव । यत्प्रतिपादनेन वाक्यपर्यवसानं, यत्प्रतिपादनाय च पदान्तरोपादानं तथाभूतश्च कार्यात्मैव । 'न हि गौरश्वः पुरुषो हस्ती' इति वा 'देवदत्तः पचति' इति वा वाक्यं पर्यवसितमनुभूयते । किन्तु देवदत्त गामानयेत्यादिकार्यनिष्ठमेव । अतः कार्यमेव सर्वत्र वाक्यार्थः । कार्यत्वं च कृतिसाध्यत्वे सति कृत्युद्देश्यत्वम् । तत्र लिङ्लोट्तव्यप्रत्ययः साक्षात्कार्याभिधायी । पदन्तराणि तु तत्प्रतीतये तदन्वितस्वार्थाभिधायीनि तत्पराण्येव । न च 'अनेजदेकम्' इत्यादौ तद्बोधकं लिङादि श्रूयते । ततः केवलसिद्धस्वरूपब्रह्मप्रतिपादकस्य अस्य अपर्यवसितत्वेन अप्रामाण्यप्रसङ्गः । न च 'विष्णुरुपांशु यष्टव्यः' इत्यादिकर्मविधिशेषत्वेन वा 'आत्मा द्रष्टव्यः श्रोतव्यः' इत्यादिज्ञानविधिशेषत्वेन वा अत्र ब्रह्मप्रतिपादनेन कार्यपरत्वात् न पर्यवसितत्वमिति वाच्यम् । तथात्वे ब्रह्मणः कार्यशेषत्वापत्त्या स्वप्रधाने ब्रह्मणि वेदान्तानां महातात्पर्यमिति सिद्धान्तव्याकोपप्रसङ्गादित्यत आह- **स्वप्रधान इति** ॥ कार्याननिवत इत्यर्थः ।

सत्यम् । पर्यवसितमेव वाक्यं प्रमाणं, कार्यपरमेव च पर्यवसितमिति । तथापि कृतिसाध्यत्वे सति कृत्युद्देश्यत्वं न कार्यत्वम् । तथा सति मात्रादीन् जिज्ञासमानं प्रति 'इयं ते माता' 'अयं तव पिता' इत्यादिसिद्धबोधकवाक्यस्य अप्रमाण्य-प्रसङ्गात् । किन्तु इष्टेष्टसाधनतान्यतररूपमेव । तच्च क्वचित्सिद्धं क्वचित्कृतिसाध्य-मित्यन्यदेतत् । तदिहापि ब्रह्मणः उत्तमानां इष्टत्वात् मध्यमादीनां इष्टसाधनत्वात् तद्बोधकवाक्यस्य युक्ता परिसमाप्तिरिति भावः ॥ ४ ॥

## उपनिषत्

**तदेजति तन्नेजति तद्दूरे तद्वन्तिके।**
**तदन्तरस्य सर्वस्य तदु सर्वस्य बाह्यतः ॥ ५ ॥**

**भाष्यम्-** तदेजति [१]तत एव एजत्यन्यत् । तत्स्वयं नेजति ।

ततो बिभेति सर्वोऽपि न बिभेति हरिः स्वयम् ।
सर्वगत्वात् स दूरे च बाह्योऽन्तश्च समीपगः ॥

इति तत्त्वसंहितायाम् ॥ ५ ॥

टीका - उत्तरमन्त्रे 'तदेजति' इत्यस्य 'तद्ब्रह्म चेष्टते' इति तु व्याख्यानं [२]प्रायपाठविरुद्धम् । अतः तद्बिभेतीत्यन्यथाप्रतीतिः स्यात्तन्निरासाय आह - **तदिति**॥ तदित्यव्ययम् । पञ्चम्यर्थे चेदमङ्गीक्रियते । तर्ह्येजनस्य किं कर्तृ तत्राह- **अन्यदिति** ॥ ननु किमध्याहारेण ? तद्ब्रह्म बिभेतीत्येवार्थः किं न स्यादित्यतः तन्नेजतीत्युत्तरवाक्यविरोधात् । शाब्द्या हि अनुपपत्तेरार्थी बलवतीति भावेन तद्व्याख्याति- **तत्स्वयमिति** ॥ तन्नेजतीत्येत-न्निष्क्रियत्वार्थमपि व्याख्यातुं शक्यमित्यतो मन्त्रार्थे समाख्यामाह- **तत इति** ॥ दूरे समीपतश्च बाह्योऽन्तश्चेति योज्यम् ॥ ५ ॥

**वामन-** तदेजति इति वाक्यमनूद्य तत एजत्यन्यत् इति व्याख्याति । 'सप्तसु प्रथमा' इति सूत्रात् । तत् स्वयमेजतीत्यर्थाङ्गीकारे अनेजदिति पूर्वोक्तविरोधः । स्वयमनेजदपि कारणान्तरवशादेजतीति शङ्कानिरासार्थं 'ततो बिभेति सर्वोऽपि' इत्यादिना तत्त्वसंहितावचनेन दृढयति ॥ ५ ॥

---

१. तत एजत्यन्यत् । २. प्रायपाठविरुद्धार्थम् ।

मित्यतो न कोऽपि विरोध इत्यशङ्क्य परिहरति- **न चेति** ॥ सोपाधिकेत्याद्युपलक्षणं पारमार्थिकत्वव्यावहारिकत्वेनेत्यपि द्रष्टव्यम् । कुतो नेत्यत आह- **मुख्यार्थेति** ॥ निरुपाधिकचैतन्यस्य अकल्पितत्वेन मुख्यत्वात् सोपाधिकस्य कल्पितत्वेन अमुख्यत्वादस्मदुक्तन्यायेन सर्वस्य मुख्यब्रह्मपरत्वसम्भवेन 'मनसो जवीयः' इत्यादेः कल्पितामुख्यचैतन्यार्थत्वायोगात् । व्यावहारिकस्यापि कल्पितत्वेनामुख्यतया 'तद्धावतोऽन्यान्' इत्यादेरस्मदुक्तन्यायेन अकल्पितमुख्यार्थत्वसम्भवेऽमुख्यार्थत्वायोगादित्यर्थः । उपलक्षणमेतत् । एवशब्दस्य परमार्थद्वितीयराहित्यार्थत्वे 'याथातथ्यतोऽर्थान्' इत्यादिविरोधः । तत्र महदादीनां याथातथ्यत इत्यनेन परमार्थत्वस्य उक्तत्वादित्यपि द्रष्टव्यम् । यद्वा अमुख्यार्थायोगादित्यस्य लक्षणार्थायोगादित्यर्थः । 'अनेजदेकम्' इत्यादेर्निरुपाधिकचैतन्यपरत्वं वदता परेण लक्षणाया अङ्गीकर्तव्यत्वात् अङ्गीकृतत्वाच्चेति व्याख्यातव्यम् । ननु न लक्षणाङ्गीकार एव दोषः । तथा सति कुत्रापि सा न स्यादित्यत उक्तम्- **मुख्यार्थसम्भव इति**॥ अस्मदुक्तरीत्या वाच्यार्थसम्भवे इत्यर्थः । ननु अपव्याख्यान इव भाष्यकृद्व्याख्यानेऽपि अस्ति अनुपपत्तिः। यथा हि अनेकपदात्मकवाक्यश्रवणात् अनेकार्थप्रतीतावपि वाक्यस्य तावदेकत्र तात्पर्यं कल्प्यम् । अन्यथा एकवाक्यत्वासम्भवात् । 'यत्परः शब्दः स शब्दार्थः' इति च शाब्दाः । वाक्यतात्पर्यविषयश्च स एव । यत्प्रतिपादनेन वाक्यपर्यवसानं, यत्प्रतिपादनाय च पदान्तरोपादानं तथाभूतश्च कार्यात्मैव । 'न हि गौरश्वः पुरुषो हस्ती' इति वा 'देवदत्तः पचति' इति वा वाक्यं पर्यवसितमनुभूयते । किन्तु देवदत्त गामानयेत्यादिकार्यनिष्ठमेव । अतः कार्यमेव सर्वत्र वाक्यार्थः । कार्यत्वं च कृतिसाध्यत्वे सति कृत्युद्देश्यत्वम् । तत्र लिङ्लोट्तव्यप्रत्ययः साक्षात्कार्याभिधायी । पदन्तराणि तु तत्प्रतीतये तदन्वितस्वार्थाभिधायीनि तत्पराण्येव । न च 'अनेजदेकम्' इत्यादौ तद्बोधकं लिङादि श्रूयते । ततः केवलसिद्धस्वरूपब्रह्मप्रतिपादकस्य अस्य अपर्यवसितत्वेन अप्रामाण्यप्रसङ्गः । न च 'विष्णुरुपांशु यष्टव्यः' इत्यादिकर्मविधिशेषत्वेन वा 'आत्मा द्रष्टव्यः श्रोतव्यः' इत्यादिज्ञानविधिशेषत्वेन वा अत्र ब्रह्मप्रतिपादनेन कार्यपरत्वात् न पर्यवसितत्वमिति वाच्यम् । तथात्वे ब्रह्मणः कार्यशेषत्वापत्त्या स्वप्रधाने ब्रह्मणि वेदान्तानां महातात्पर्यमिति सिद्धान्तव्याकोपप्रसङ्गादित्यत आह- **स्वप्रधान इति** ॥ कार्यानन्वित इत्यर्थः ।

सत्यम् । पर्यवसितमेव वाक्यं प्रमाणं, कार्यपरमेव च पर्यवसितमिति । तथापि कृतिसाध्यत्वे सति कृत्युद्देश्यत्वं न कार्यत्वम् । तथा सति मात्रादीन् जिज्ञासमानं प्रति 'इयं ते माता' 'अयं तव पिता' इत्यादिसिद्धबोधकवाक्यस्य अप्रमाण्य-प्रसङ्गात् । किन्तु इष्टेष्टसाधनतान्यतररूपमेव । तच्च क्वचित्सिद्धं क्वचित्कृतिसाध्य-मित्यन्यदेतत् । तदिहापि ब्रह्मणः उत्तमानां इष्टत्वात् मध्यमादीनां इष्टसाधनत्वात् तद्बोधकवाक्यस्य युक्ता परिसमाप्तिरिति भावः ॥ ४ ॥

उपनिषत्

**तदेजति तन्नेजति तद्दूरे तद्वन्तिके।**

**तदन्तरस्य सर्वस्य तदु सर्वस्य बाह्यतः ॥ ५ ॥**

**भाष्यम्**- तदेजति [१]तत एव एजत्यन्यत् । तत्स्वयं नेजति ।

ततो बिभेति सर्वोऽपि न बिभेति हरिः स्वयम् ।
सर्वगत्वात् स दूरे च बाह्योऽन्तश्च समीपगः ॥
इति तत्त्वसंहितायाम् ॥ ५ ॥

टीका - उत्तरमन्त्रे 'तदेजति' इत्यस्य 'तद्ब्रह्म चेष्टते' इति तु व्याख्यानं [२]प्रायपाठविरुद्धम् । अतः तद्बिभेतीत्यन्यथाप्रतीतिः स्यात्तन्निरासाय आह - **तदिति**॥ तदित्यव्ययम् । पञ्चम्यर्थे चेदमङ्गीक्रियते । तर्ह्येजनस्य किं कर्तृ तत्राह- **अन्यदिति** ॥ ननु किमध्याहारेण ? तद्ब्रह्म बिभेतीत्येवार्थः किं न स्यादित्यतः तन्नेजतीत्युत्तरवाक्यविरोधात् । शाब्द्या हि अनुपपत्तेरार्थी बलवतीति भावेन तद्व्याख्याति- **तत्स्वयमिति** ॥ तन्नेजतीत्येत-न्निष्क्रियत्वार्थमपि व्याख्यातुं शक्यमित्यतो मन्त्रार्थे समाख्यामाह- **तत इति** ॥ दूरे समीपतश्च बाह्योऽन्तश्चेति योज्यम् ॥ ५ ॥

**वामन**- तदेजति इति वाक्यमनूद्य तत एजत्यन्यत् इति व्याख्याति । 'सप्तसु प्रथमा' इति सूत्रात् । तत् स्वयमेजतीत्यर्थाङ्गीकारे अनेजदिति पूर्वोक्तविरोधः । स्वयमनेजदपि कारणान्तरवशादेजतीति शङ्कानिरासार्थं 'ततो बिभेति सर्वोऽपि' इत्यादिना तत्त्वसंहितावचनेन दृढयति ॥ ५ ॥

१. तत एजत्यन्यत् । २. प्रायपाठविरुद्धार्थम् ।

**वादि**-'प्रायपाठविरुद्धम्' इत्यस्य 'तदेजति तन्नेजति' इत्यादिप्रायपाठ-विरुद्धमित्यर्थः । 'शाब्द्या हि अनुपपत्तेः' इत्यत्र तद्ब्रह्म एजति चलतीति यथाश्रुतवाक्यार्थकथने तन्नेजतीत्युत्तरवाक्यविरोधः स्यात् । कम्पनरूपैजनस्य निर्भये ब्रह्मण्यसम्भवात् यथास्थितवाक्ययोजनायामर्थ एवानुपपन्नः । भिन्नवाक्यतायां तु तस्मादेजतीति ब्रह्मनिमित्तकैजनरूपार्थस्य अनुपपत्त्यभावात् न अर्थानुपपत्तिः । किन्तु किमेजतीत्याकाङ्क्षायां अन्यदिति पदाध्याहाराभावे वाक्ययोजनानुपपत्तिरूपा शाब्द्येवानुपपत्तिरिति भावः । दूरे बाह्ये अन्तः समीपग इति यथास्थितवाक्ययोजनायाः पौनरुक्त्येनासम्भवात् दूरे समीपतश्च बाह्योऽन्तश्चेति भिन्नक्रमेण योजना कार्येति भावेनोक्तं 'दूरे समीपतश्च' इति ॥ ५ ॥

**श्रीनि- विरुद्धमिति** ॥ अनेजदित्यनेन निष्क्रियत्वोक्तेरिति भावः । ननु भवत्पक्षेऽपि अन्यकर्त्रध्याहारो दोषः । मत्पक्षे तु 'बिभेति न बिभेति' इति व्याघातरूपो दोषः । एवं साम्ये मदुक्त एवार्थः किं न स्यादित्यत आह- **शाब्द्या हीति** ॥ एजदित्युक्तेः किमित्याकाङ्क्षायां, शाब्दी ह्याकाङ्क्षा शब्देनैव शाम्यतीति न्यायेन अन्यदिति कर्तृवाचकपदाध्याहाररूपशाब्दानुपपत्त्यपेक्षया परस्परव्याघात-रूपार्थिक्यनुपपत्तिः प्रबलेत्यर्थः ॥ **शक्यमिति** ॥ तथा च आर्थिकानुपपत्तेर-भावादेजतीत्यस्य बिभेति इत्येवार्थोऽस्त्विति भावः । सामीप्यस्यैव दूरत्वप्रति-पादकत्वादाह- **दूरे समीपतश्चेति** ॥ ५ ॥

**छलारी- प्रायपाठविरुद्धमिति** ॥ 'तदेजति तन्नेजति' इति सहपठितोत्तर-वाक्यविरुद्धमित्यर्थः ॥ **शाब्द्या ह्यनुपपत्तेरिति** ॥ तदित्यस्य अव्ययत्वमाश्रित्य पञ्चम्याश्रयणाच्छाब्द्यनुपपत्तिः । ब्रह्मणः निर्दोषत्वेन भयरहितत्वात्तदेजतीत्यत्र कम्पनार्थकएजतेः तत्कारणभयार्थत्वाङ्गीकारेऽर्थानुपपत्तिः ॥ **निष्क्रियत्वार्थ-मपीति** ॥ सर्वक्रियोपलक्षणादिति भावः ॥ **बाह्येऽन्तश्चेति योज्यमिति** ॥ 'सर्वगतत्वादिति हेतुना' इति शेषः ॥ ५ ॥

**सत्य- प्रायपाठविरुद्धार्थमिति** ॥ 'अनेजत्' इत्यत्र एजतेः भयार्थत्वेन व्याख्यातत्वादिति भावः ॥ **तदित्यव्ययं पञ्चम्यर्थ इति** ॥ यद्यपि तदित्यस्य तच्छब्दरूपस्य प्रथमान्तत्वेऽपि 'सप्तसु प्रथमा' इति चिरन्तनसूत्रात् 'सुपां सुलुक्' (सि.कौ.३५६१) इति प्रसिद्धसूत्राद्वा पञ्चम्यर्थत्वं सम्भवति । तथापि

मार्गान्तरमेतदित्यदोषः । ननु भवत्पक्षेऽन्यदित्यस्य अध्याहारः, अस्मत्पक्षे तु उत्तरवाक्यविरोध इति साम्यात् को विशेषः सिद्धान्त इत्यत आह- **शाब्द्या ह्यनुपपत्तेरिति** ॥ **निष्क्रियत्वार्थमपि व्याख्यतुं शक्यमिति** । न चैवं 'मनसो जवीयः' इत्यनेन विरोधः । सोपाधिकनिरुपाधिकविषयत्वेन कथञ्चिद् विरोधस्य परिहर्तुं शक्यत्वात् । अन्यथा भवतां 'अनेजत्' इत्यनेन पुनरुक्तता स्यादिति भावः ॥ ५ ॥

**नृसिंह- प्रायपाठेति** ॥ अनेजदित्यत्र 'एजृ' धातोः भयार्थकत्वं गृहीत्वा तदभावस्योक्तत्वादित्यर्थः । **निष्क्रियार्थमपीति** ॥ तथा च एजति बिभेतीत्यर्थाङ्गीकारेऽपि न विरोध इति भावः । यद्यपि 'मनसो जवीयः' इत्यनुरोधेन अनेजदित्यत्र निर्भयत्वमेवार्थतया निर्णीतम्, तथापि तदाच्छादनेनेयमाशङ्केति द्रष्टव्यम् ॥ ५ ॥

**रघु-** ननु तदेजतीत्याद्युत्तरभाष्यं व्यर्थम् । न च श्रौतपदानुवादेन व्याख्यानार्थमिति वाच्यम् । अप्रतीत्यन्यथाप्रतीतिरूपव्याख्यानबीजाभावेन तदयोगात् । न च तद्ब्रह्म बिभेतीति अन्यथाप्रतीतिरेव बीजमिति वाच्यम् । तच्चेष्टत इति यथाप्रतीतेरपि सम्भवेन अन्यथाप्रतीत्यैव भाव्यमिति निर्बन्धे कारणाभावादित्यतः परिशेष एव तत्कारणमित्याशयेनाह- **उत्तरमन्त्र इति** ॥ **प्रायपाठविरुद्धमिति** ॥ अनेजदित्यत्र एजतेः भयार्थत्वेन व्याख्याततत्वात् तत्प्रायपठितत्वविरुद्धमित्यर्थः ॥ **अत इति** ॥ अर्थान्तरप्रतीत्यसम्भवादित्यर्थः । ननु तदित्यस्य तत इति व्याख्यानमलाक्षणिकत्वादयुक्तमित्यतः तद्घटयन्नुत्तरभाष्यमवतारयति- **तदित्यव्ययं पञ्चम्यर्थे चेदमङ्गीक्रियत इति** ॥ ननु तच्छब्दरूपस्य तदित्यस्य प्रथमात्वेऽपि 'सप्तसु प्रथमा' इति महाव्याकरणसूत्रात् 'सुपां सुलुक्' इति प्रसिद्धव्याकरणसूत्राद्वा पञ्चम्यर्थत्वसम्भवे अव्ययत्वाङ्गीकरोऽयुक्तः । 'नाम ब्रह्म' इत्यादौ प्रथमादेः सप्तम्याद्यर्थत्वस्य उदाहृतव्याकरणद्वयानुसारेण भाष्यटीकाकृद्भ्यां बहुशो अङ्गीकृतत्वाच्चेति चेन्मैवम् । महाव्याकरणसूत्रेण प्रथमायाः पञ्चम्यर्थत्वेऽपि, प्रसिद्धव्याकरणसूत्रेण च प्रथमायाः पञ्चम्यादेशत्वेन पञ्चम्यर्थत्वेऽपि न साक्षात् पञ्चम्या एव पञ्चम्यर्थत्वम् । अव्ययत्वाङ्गीकारे तु-

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥

इत्युक्तन्यायेन तदित्यस्यैव पञ्चमीत्वेन तदर्थत्वोपपत्तेः प्रतिपत्तिलाघवात् अव्ययत्वाङ्गीकारो युक्तः । यद्वा एतद्ग्रन्थस्य उपायान्तरत्वान्न कश्चिद्दोषः । तदित्यस्य अव्ययत्वं तु स्वरादित्वेनेति मन्तव्यम् । ननु अध्याहाराभावे कथं कर्त्राकाङ्क्षाशान्तिरित्यत उक्तम्- **तद्ब्रह्मेति** ॥

ननु तत एजति बिभेतीति व्याख्याने कर्तृवाचकशब्दाभावो दोषः । तद्बिभेतीति व्याख्याने उत्तरवाक्यविरोधो दोष इति पक्षद्वयस्यापि दुष्टत्वसाम्यात् कथं निर्णय इत्यत आह- **शाब्द्या ह्यनुपपत्तेरिति** ॥ अर्थानुपपत्तेरन्यतर-वाक्याप्रामाण्यहेतुत्वेन बलवत्त्वम् । शाब्द्यनुपपत्तेस्तु अध्याहारेण परिहार्यत्वान्न तद्धेतुत्वमिति ततो दुर्बलत्वमिति भावः । ननु उपपत्तिसिद्धेऽर्थे प्रमाणान्तरान-पेक्षणादुत्तरं भाष्यमनर्थकमित्यत उपपत्तेः सावकाशत्वशङ्कापूर्वकं भाष्यमवतार-यति- **तन्नेजतीत्येतन्निष्क्रियत्वार्थमपीति** ॥ तथा च उत्तरवाक्यस्य अवि-रोधकत्वात् तदेजतीत्यस्य तद्ब्रह्म बिभेतीत्येवार्थो युक्तः । अध्याहाराभावादिति भावः । न च तन्नेजतीत्यस्य निष्क्रियत्वार्थत्वे 'मनसो जवीयः' इत्यनेन विरोधः शङ्क्यः । निर्भयत्वार्थत्वेऽपि अनेजदित्यनेन पौनरुक्त्यदोषसाम्यात् । यदि च तात्पर्यज्ञापकत्वेन पौनरुक्त्यं परिह्रियते तदा सोपाधिकनिरुपाधिकविषयत्वेन विरोधोऽपि परिह्रियताम् । न चैवं पक्षद्वयेऽपि साम्यादेवमेव व्याख्याने किं बीजमिति वाच्यम् । तदेजतीत्यस्य तत एजति अन्यदिति व्याख्यानस्य अतिक्लिष्टत्वेन साम्याभावात् । साम्येऽप्यर्थानिर्णयेन सिद्धान्तिन एवानिष्टत्वात् । अत एव निष्क्रियत्वार्थमपीत्युक्तमिति शङ्कितुरभिप्रायः । यद्यपि मुख्यार्थसम्भवे अमुख्यार्थायोगादिति उक्तरीत्या सोपाधिकनिरुपाधिकविषयत्वेन विरोधस्य परिहर्तुमशक्यत्वेन 'मनसो जवीयः' इत्येतद्विरोधस्य अपरिहार्यत्वात् नैतच्चोद्यावकाशः । तथापि तदाच्छादनेनैव एतच्चोद्यमिति मन्तव्यम् ॥ **मन्त्रार्थ इति**॥ अतो नोत्तरार्धस्य वैयर्थ्यमिति भावः । ननु सर्वगतत्वस्य दूर इत्यादौ एकैकत्र तावन्न हेतुत्वम् । असर्वगतानामपि घटादीनां दूरादिस्थत्वात् । नापि द्वयोर्द्वयोः । सर्वगतत्वाद्दूरे बाह्ये च । सर्वगतत्वादन्तः समीपगश्चेत्यत्रापि पूर्वदोषानुवृत्तेरित्यतो

द्वितीयपक्षमङ्गीकृत्य तत्रोक्तदोषपरिहाराय श्रुत्यनुसारेण प्रतियोग्यनुयोगिक्रमानुसारेण च पदानि योजयति- **दूर इति** ॥

ततश्च अनेजदेकमित्यादिमन्त्रद्वयस्यायमर्थः । तद्धावत इत्यत्र श्रूयमाणं तदित्येतत् सर्वत्र अन्वेति । तद्ब्रह्म निर्भयत्वादेव अनेजदित्युच्यते । न तु निष्क्रियत्वात् । प्रधानत्वादेवैकमित्युच्यते । न तु द्वितीयशून्यत्वात् । मनसो जवीयः मनो हि वेगवत्त्वेन प्रसिद्धम् । ततोऽप्यतिशयेन वेगवत् । एनत् एतद्ब्रह्म देवाः ब्रह्माद्याः । नाप्नुवन् सम्यक् न ज्ञातवन्तः । स्वयं तु पूर्वं पूर्वमेव अनादित एव सर्वान् अर्षत् व्यजानात् 'ऋष ज्ञाने' । तद्ब्रह्म स्वयमेकत्र तिष्ठदेव धावतः द्रवतः अन्यान् अत्येति अतिक्रम्य वर्तते । एवं माहात्म्योपेते तस्मिन् ब्रह्मणि मातरिश्वा मुख्यवायुः अपः सर्वैः क्रियमाणानि कर्माणि दधाति तत्पूजात्वेन समर्पितवान् ॥४ ॥

वायोः सर्वप्रेरकत्वेन सर्वकृतकर्मणां मुख्यतो वायुकर्तृत्वेन युक्तं वायोः सर्वकर्मसमर्पणम् । ब्रह्मणो अन्यस्माद्भयाभाववदन्यस्यापि ब्रह्मणः सकाशात् भयाभावे साम्यं स्यादित्यत आह- **तदेजतीति** ॥ तदित्यव्ययं पञ्चम्यर्थे । अन्यदिति कर्त्रध्याहारः । तत् ततो ब्रह्मणः सकाशात् अन्यत् ब्रह्मादिजगत् एजति बिभेति 'भीषास्माद्वातः पवते' (तै.उ.२.८.१) इत्यादेः । तत् ब्रह्म स्वयं नेजति न बिभेति । तद्दूरे तदु तदेवान्तिके समीपे च वर्तते । सर्वगतमिति यावत् । न च 'अनेजत्' इत्यनेन निर्भयत्वस्य 'तद्धावत्' इत्यादिना सर्वगतत्वस्य च उक्तत्वात् पुनरुक्तिरिति वाच्यम् । श्रुतिः स्वस्य परमात्मनिर्भयत्वसर्वगतत्वप्रतिपादने तात्पर्यमस्तीति ज्ञापनाय तदभ्यस्यतीत्यङ्गीकारे दोषाभावात् । तद्ब्रह्म अस्य सर्वस्य अन्तः नियामकत्वेन वर्तते । तदु तदेव अस्य सर्वस्य बाह्यतो बहिराश्रयत्वेन वर्तत इति ॥ ५ ॥

### उपनिषत्

**यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति ।**
**सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥ ६ ॥**

**भाष्यम्**

**सर्वगं परमात्मानं सर्वं च परमात्मनि ।**
**यः पश्येत् स भयाभावान्नात्मानं गोप्तुमिच्छति ॥**
**इति सौकरायणश्रुतिः ॥ ६ ॥**

**टीका- 'तद्दूरे तद्वन्तिके' इत्यादौ परमेश्वरस्य सर्वभूताश्रयतया सर्वभूतगतत्वमुक्तम् । तज्ज्ञानफलं 'यस्तु सर्वाणि' इति मन्त्रेणोच्यते । तत्र जीवस्य सर्वभूतात्मकत्वमुच्यत इत्यपव्याख्याननिरासाय मन्त्रं श्रुत्या व्याचष्टे- सर्वगमिति ॥ 'सर्वगं परमात्मानम्' इति 'सर्वभूतेषु चात्मानम्' इत्यस्यार्थः । 'सर्वं च परमात्मनि' इति पूर्वार्धस्य । 'भयाभावात्' इति 'ततो न विजुगुप्सते' इत्येतद्व्याख्यानस्य 'नात्मानं गोप्तुमिच्छति' इत्यस्य उपपादनम् । अभेदार्थतायां सप्तम्यनुपपत्तिश्च ॥ ६ ॥**

**वामन-** 'यस्तु-' इत्यादिमन्त्रार्थं 'सर्वगम्' इत्यादिकया सौकरायणश्रुत्या व्यक्तं वक्ति । परमात्मा सर्वभूतान्यन्तर्बहिश्च व्याप्य स्थित्वा तानि बिभर्ति । न पुनस्तान्यमुं बिभ्रति ॥ ६ ॥

**वादि**-सर्वभूतानि आत्मनि आत्मत्वेन अभिपश्यतीति अपव्याख्यानकर्तुरभिप्राय इति भावेनाह- **जीवस्य सर्वभूतात्मकत्वमिति** ॥ इदञ्चोपलक्षणम् । सर्वभूतानि आत्मनि स्वस्मिन् जीव इति यथाश्रुतार्थकथनाशा अपि एकस्मिन् जीवे सर्वजीवानामभावेन परस्यानुपपन्नैव । अस्माकं तु विश्वरूपे भगवति सर्वजीवानामाश्रितत्वान्न काप्यनुपपत्तिः ।

पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसङ्घान् ।
ब्रह्माणमीशं कमलासनस्थं ऋषींश्च सर्वानुरगांश्च दिव्यान् ॥
(गीता.११.१५) इति हि स्मृतिः ॥ ६ ॥

**श्रीनि- सर्वभूतेति** ॥ प्रमाणे सर्वगतत्वादित्युक्तेरिति भावः ॥ **उपपादनमिति** ॥ चोरादिभूयिष्ठोऽयं मार्गस्ततः स्वात्मगोपनेन गन्तव्यमिति केनचिदुक्तौ तदा ज्ञानी स्वात्मानं गोप्तुं नेच्छति । कुतः भये प्राप्ते सत्येव गोपनस्य कर्तव्यत्वेन भगवज्ज्ञानिनो भयाभावादिति भावः ॥ **सप्तमीति** ॥ आधाराधेयभावोक्त्या भेदस्यैव प्राप्तेरित्यर्थः ॥ ६ ॥

**छलारी- तत्र जीवस्येति** ॥ आत्मशब्दस्य न जीवार्थकत्वं स्वरूपार्थकत्वादिति भावः ॥ **इत्यस्यार्थ इति** ॥ आत्मशब्दस्य परमात्मशब्देन विशेषणादिति भावः ॥ ६ ॥

**सत्य- सप्तम्यनुपपत्तिश्चेति** ॥ न केवलं समाख्याविरोध इति चार्थः ॥६॥

**नृसिंह- सर्वभूताश्रयतयेति** ॥ फलवाक्यैकवाक्यतासिद्ध्यर्थं तात्पर्यानुवादः ॥ **अभेदार्थतायामिति** ॥ 'सर्वभूतानि चात्मनि' इत्यनेनैव अभेदसिद्धेः पुनः सर्वभूतेषु चात्मानम्' इत्यस्य वैयर्थ्यम् । न च तैः सर्वपदार्थाभेदो ब्रह्मणोऽङ्गीक्रियते ॥ ६ ॥

**रघु-** प्रकरणवशादुत्तरमन्त्रस्यापि भगवन्महात्म्यप्रतिपादकत्वमिति भ्रमनिरासाय प्रतिपाद्यं कथयन् भाष्यं सङ्गमयति- **तद्दूर इत्यादि** ॥ यद्यपि अत्र सर्वभूताश्रयत्वं सर्वभूतगतत्वं च उक्तमित्येव वक्तव्यम् । 'तदु सर्वस्य बाह्यतः' इत्यनेन सर्वभूताश्रयत्वस्य 'तदन्तरस्य' इत्यनेन सर्वभूतगतत्वस्य च पृथगुक्तत्वात् । अत एव इत्यादौ इत्युक्तम् । यस्त्विति उत्तरमन्त्रे तद्व्याख्यानश्रुतौ च उभयोः समकक्ष्यतयोक्तत्वाच्च । तथापि श्रुत्युक्तं सर्वभूताश्रयत्वं सर्वभूतगतत्वे प्रकारसमर्पकमेव । न तु स्वातन्त्र्येण ज्ञेयमिति ज्ञापनाय तथोक्तिसम्भवात् । पृथगुभयोर्ज्ञेयत्वसम्भवे किं प्रकारसमर्पकताज्ञापनेनेति चेन्नैवं शङ्क्यम् । सर्वभूतगतत्वस्य गगनादिसाधारणस्य स्वावस्थानाय सर्वभूतोपजीवनरूपस्य वा भगवन्माहात्म्यरूपत्वाभावेन मुमुक्षुज्ञेयत्वासम्भाववदिति शङ्कावकाशात् । सर्वभूतगतत्वोक्तौ तु नैतच्चोद्यावकाशः । भगवतः सर्वभूतगतत्वं सर्वभूतस्थितिहेतुव्यापारप्रेरकत्वेन । एतदेव सर्वभूताश्रयतया सर्वभूतगतत्वं नाम । न चैतत् गगनादिसाधारणं, न वा स्वावस्थानाय सर्वभूतोपजीवनम् । येनोक्तदोषः स्यात् । सर्वाधारतया सर्वभूतेषु परमात्मानं विजानतः । पूर्वमन्त्रोक्तस्य सर्वाधारतया सर्वभूतगतत्वस्य अत्रानुवादः । प्राक् सर्वाधारत्वेन सर्वगतत्वदर्शनफलमुक्तमित्याद्युत्तरटीकाग्रन्थादपि अयमेवार्थः टीकाकृदभिप्रेतो ज्ञायते । अन्यथा टीकायां क्वचिदपि सर्वभूताश्रयत्वस्य सर्वभूतगतत्वसमकक्ष्यतया उक्तिप्रसङ्गेन नियमेन प्रकारतयोक्तिर्न स्यात् । उक्तञ्च प्रमेयदीपिकायां 'न हि सर्वभूतप्रेरकत्वेन सर्वभूतगतत्वं गगनादिसाधारणम् । येन मुमुक्षूपास्यत्वाभावः' इति । उक्तञ्च तत्त्वप्रकाशिकायां 'न सर्वभूतेषु स्थितिमात्रं सर्वभूतान्तर्यामी च' इति ॥

॥ **तज्ज्ञानफलमिति** ॥ अत्र ज्ञानसामान्यग्रहणेन यस्त्विति मन्त्रे सर्वगमिति भाष्योदाहृतश्रुतौ च दृशेः ज्ञानसामान्यार्थत्वम् । 'पश्यार्थैश्चानालोचने' (सि.कौ.४०९) इत्यादौ दृशेर्ज्ञानमात्रार्थताया दृष्टत्वादित्युक्तं भवति । कुतो विशेषशब्दस्य सामान्यपरत्वमिति चेत् । यस्त्विति मन्त्रस्य यस्मिन्निति मन्त्रस्य च पौनरुक्त्यमाशङ्क्य आद्यस्य ज्ञानसामान्यवाचकत्वं, द्वितीयस्य विशेषज्ञानपरत्वं च आश्रित्य विजानतश्च अत्रोच्यत इत्युत्तरभाष्येण परिहारादिदं ज्ञायते । एतच्च तद्वाक्यव्याख्यानटीकायां स्पष्टम् । प्राप्ताधिकारस्य परमेश्वरतत्त्वबुभुत्सावतः परमात्मतत्त्वोपदेशः क्रियते । अनेजदित्यादिनेत्यादिपूर्वटीकापर्यालोचनया च अस्य ज्ञानसामान्यपरत्वं विज्ञायते । न च यस्त्विति मन्त्रस्य ज्ञानसामान्यपरत्वे तत्साक्षात्कारो मोक्षसाधनमिति अतीतग्रन्थेनोक्तमिति अग्रिमटीकाविरोध इति वाच्यम् । अत्रोक्तपरोक्षज्ञानस्य अपरोक्षज्ञानद्वारा मोक्षसाधनत्वेन साक्षात्कारस्यापि मोक्षसाधनत्वमुक्तप्रायमित्यभिप्रायेण वा, यस्मिन्निति मन्त्रे विजानत इत्यनेन साक्षात्कारस्य उक्तत्वाभिप्रायेण वा अग्रिमग्रन्थप्रवृत्त्युपपत्तेरिति ॥ **सर्वभूतात्मकत्वमुच्यत इति** ॥ इयमत्र अपव्याख्या । 'यस्तु परिव्राट् मुमुक्षुः सर्वाणि भूतानि अव्यक्तादीनि स्थावरान्तानि आत्मन्येवानुपश्यति। आत्मव्यतिरिक्तानि न पश्यतीत्यर्थः । सर्वभूतेषु च आत्मानं तेषामपि भूतानामहमेव आत्मेति । सर्वभूतेषु च आत्मानं यस्तु पश्यति स ततः तस्मादेव दर्शनात् । न विजुगुप्सते विजुगुप्सां घृणां न करोति । सर्वा हि घृणा आत्मनोऽन्यं निकृष्टं पश्यतो भवति आत्मानमेवात्यन्तविशुद्धं निरन्तरं पश्यतो न घृणा निमित्तमस्ति' इति । मन्त्रसमाख्याश्रुत्योः क्रमेण व्याख्यानव्याख्येयभावभ्रमं निवारयति- **सर्वगमिति** ॥ पूर्वार्धस्यार्थ इति सम्बन्धः । ननु व्यख्यानश्रुतौ 'भयाभावात्' इति व्यर्थम् । व्याख्येयमन्त्रे तद्व्याख्येयपदाभावादित्यत आह- **भयाभावादितीति** ॥ भयाभावादित्येतन्नात्मानं गोप्तुमिच्छतीति अस्योपपादनमित्यन्वयः ॥

ततश्च भयाभावादित्येतदुपपत्तिसमर्पकतया मन्त्रे अध्याहाररूपमेव न व्याख्यानरूपमित्युक्तं भवति । ननु मन्त्रे नात्मानं गोप्तुमिच्छतीति साध्यमेव न श्रूयते । कस्योपपादनाय अध्याहार इत्यत उक्तम् ॥ **ततो न विजुगुप्सत इत्येतद्व्याख्यानस्येति** ॥ यद्यप्यत्र न विजुगुप्सत इत्येतद्व्याख्यानस्य इत्येव वक्तव्यं न तु

तत इति । तद्व्याख्यानाभावात् । तथापि भयाभावादिति अध्याहारे निमित्तसूचनाय यथाश्रुतानुवादः कृतः । 'ततो न विजुगुप्सते' इति विशिष्टानुवादे हि ततः परमेश्वरस्य सर्वभूताश्रयत्वादिज्ञानात् नात्मानं गोप्तुमिच्छतीति अर्थप्रतीत्या अप्रयोजकत्वशङ्कायां तन्निरसनोचितस्य भयाभावादित्यस्य अध्याहारो विज्ञायेत । ततश्च परमेश्वरस्य सर्वभूताश्रयत्वादिज्ञानात् भयाभावः । भयाभावात् नात्मगोपनेच्छेति सुगमः साध्यसाधनभावः । न च तत इत्यस्य व्याख्यानं भयाभावादिति इत्येव किं नोक्तमिति वाच्यम् । ज्ञानस्येव भयाभावस्याप्रकृतत्वेन परामर्शानुपपत्तेरित्याशयात् । यद्वा टीकायां तत इत्यतः परमित्यस्यार्थ इत्यनुवर्तते । तत इत्यस्यार्थो भयाभावादितीति योजना । बुद्ध्या प्रकृतत्वात् परामर्शोपपत्तिरिति भावः । ननु किं बुद्ध्या प्रकृतत्वमङ्गीकृत्य भयाभावपरामर्शेन इत्यत आह- **नात्मानं गोप्तुमिच्छतीत्यस्योपपादनमिति** ॥ भयाभावादितीति अनुवर्तते । भयाभावादित्येतन्नात्मानं गोप्तुमिच्छतीत्यस्योपपादनमुपपादकम् । न तु सर्वभूताश्रयत्वेन सर्वभूतगतत्वज्ञानं साक्षात्तदुपपादकम् । अप्रयोजकत्वात् । अतो बौद्धपरामर्शो युक्त इति भाव इति व्याख्येयम् । अथवा तत इत्येतत् भयाभावदितीत्यतः पूर्वं सम्बद्ध्यते । तथा च तत इत्यनूद्य भयाभावादिति व्याख्याय न विजुगुत्सत इत्यादिना तस्योपयोगः कथितो भवतीति व्याख्येयम् । भाष्यमुपलक्षणमित्याशयेन अन्तरङ्गानुपपत्तिमप्याह- **अभेदार्थतायामिति** ॥

यस्त्विति मन्त्रस्य जीवस्य सर्वभूताभेदार्थतायामात्मनीति सर्वभूतेषु इति च सप्तम्यनुपपत्तिः। तया आधाराधेयभावप्रतीत्या भूतलघटयोरिव भेदस्यैव प्रतीतेरित्यर्थः । चशब्देन समाख्याश्रुतिविरोधं समुच्चिनोति ॥

ततश्चायं मन्त्रार्थः । यस्तु अधिकारी । सर्वाणि भूतानि चेतनाचेतनात्मकानि । आत्मन्येव आत्माधारतयैव । अनुपश्यति जानाति । सर्वभूतेषु च आत्मानं नियामकत्वेन अनुपश्यति । सः आत्मानं न विजुगुप्सते गोप्तुं नेच्छति । कुतः ? ततः सर्वाश्रयतया सर्वभूतगतत्वज्ञानात् । तथा ज्ञानेऽपि कुतो न गोपनेच्छेत्यतोऽपि तत इत्युक्तम् । भयाभावादित्यर्थः । भयकारणेषु सत्ताप्रदत्वेन परमेश्वरं जानतः तेषामकिञ्चित्करत्वेन ज्ञानावश्यम्भावात् भयाभावः । ततश्च नात्मनो गोपनेच्छेति ॥

॥ ६ ॥

उपनिषत्

यस्मिन् सर्वाणि भूतानि आत्मैवाभूद्विजानतः ।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥७॥

**भाष्यम्**- यस्मिन् परमात्मनि सर्वभूतानि स परमात्मैव तत्र सर्वभूतेषु अभूत् । एवं सर्वभूतेषु एकत्वेन परमात्मानं विजानतः को मोहः ॥

यस्मिन् सर्वाणि भूतानि स आत्मा सर्वभूतगः ।
एवं सर्वत्र यो विष्णुं पश्येत्तस्य विजानतः ।
को मोहः कोऽथवा शोकः स विष्णुं [1]पर्यगाद्यतः ॥

इति पिप्पलादशाखायाम् ।

पूर्वोक्तानुवादेन शोकमोहाभावोऽपि विजानतश्च अत्रोच्यते । अभ्यासश्च सर्वगतत्वस्य द्योतनार्थः ॥७॥

**टीका**-एतन्मन्त्रार्थविवरणार्थो 'यस्मिन् सर्वाणि' इत्ययं मन्त्र इति वक्ष्यति । तत्र यस्मिन्नात्मनि जीवे सर्वभूतानि स आत्मैव यस्य विजानतः तानि संवृत्त इत्याद्यन्यथाप्रतीतिनिरासाय मन्त्रं व्याख्याति- **यस्मिन्निति** ॥ 'सर्वभूतानि तिष्ठन्ति' इति शेषः । तत्रेत्यनुवादेन सर्वभूतेष्विति व्याख्यानम् । अभूत् अनादितो वर्तते । विजानत इत्यस्यान्वयसिद्ध्यर्थमेवमित्यध्याहारः कृतः । एवं सर्वाधारतया सर्वभूतेषु परमात्मानं तं च एकत्वेन विजानत इति योज्यम् । विजानतो अनुपश्यत इति द्वयोरपि व्याख्यानं विजानत इति । अर्थान्तरे सम्भवति कुतोऽयं मन्त्रार्थ इत्यतः श्रुत्यन्तरेण व्याख्यानादिति भावेनाह- **यस्मिन्निति** ॥ विजानतः 'एकत्वञ्च' इति शेषः । ननु परमेश्वरज्ञानेऽपि कुतः शोकाद्यभाव इत्यत आह- **स विष्णुमिति** ॥ यतो ज्ञानी विष्णुं पर्यगात् सम्यक् प्राप्नोत्येव । अतः शोकाद्यभावः तस्य युक्त इत्यर्थः । अनेन 'स पर्यगात्' इत्युत्तरमन्त्रार्थतात्पर्यमप्युक्तं भवति । एकत्वमित्यस्य पौनरुक्त्यं च । अन्यथा अनुवादस्य वैयर्थ्यात् ॥

---

१. पर्यगादतः ।

नन्वेवं मन्त्रव्याख्यानेऽपि पुनरुक्तिः स्यात् । 'यस्तु सर्वाणि भूतानि आत्मन्येव' इत्यस्य 'यस्मिन्सर्वाणि भूतानि' इत्यनेनोक्तत्वात् । 'सर्वभूतेषु चात्मानम्' इत्यस्य च 'आत्मैवाभूत्' इत्यनेनोक्तत्वात् । अतो नायं मन्त्रार्थ इत्यत आह- **पूर्वेति** ॥ पूर्वमन्त्रोक्तस्य सर्वाधारतया सर्वगत्वस्य अत्र अनुवादोऽतो न पुनरुक्तिः इत्यर्थः । न च वाच्यमधिकविधानाय अनुवादो भवति । न च अत्र अधिकं किञ्चिदिति । पूर्वमेवंविदो भयाभावः फलत्वेनोक्तः । अत्र पुनः शोकमोहाभावोऽपि । प्राक् सर्वाधारत्वेन सर्वगतत्वदर्शनफलमुक्तम् । अत्र तु विशेषतो जानत इत्येवं फले ज्ञाने च आधिक्यसद्भावादित्यर्थः । उपलक्षणं चैतत् । 'एकत्वमनुपश्यतः' इत्याधिक्यं च द्रष्टव्यम् । 'तद्भावतः' इत्यस्य सर्वगतत्वस्य 'तद्दूरे' इत्यादिना पुनरुच्यमानत्वात् पुनरुक्तिदोष इत्याशङ्कां पुनरुक्तिदोषपरिहारप्रसङ्गात् परिहरति- **अभ्यासश्चेति** ॥ श्रुतिः स्वस्य परमात्मसर्वगतत्वे तात्पर्यं द्योतयितुं तदभ्यस्यतीति न दोष इत्यर्थः । सर्वगतत्वस्य इत्युपलक्षणम् । 'अनेजत्' 'तन्नेजति' इत्यभयत्वस्यापि द्रष्टव्यम् ॥ ७ ॥

**वामन**- अन्योन्यभिन्नेषु भूतेषु स्थितानामपि पररूपाणां न कश्चिद् भेद इत्याह- **यस्मिन्निति** ॥ यस्मिन् परमात्मनि प्रतिष्ठितान्युक्तानि स परमात्मा एक एव तत्राभूत् सर्वभूतेषु स्थितोऽभूत् । नचैतदज्ञमतम् । विजानतः इति विशेषणात् । तत्र भूतबाह्यान्तरेषु भगवद्रूपेषु तस्य रूपिण एकत्वं विशेषेण ज्ञात्वा यथावत् पश्यतः कश्चन मोहः शोको वा न भवेत् ॥

ननु नायं जीवेशभेदः साधीयान् । अभेदस्याप्यत्र प्रतीयमानत्वात् । तथाहि यस्मिन् सर्वाणि भूतानि एकीभावेनावस्थितानि स परमात्मा एक एव तत्त्वतोऽभूत् । ततोऽन्यन्मिथ्यैव । तत्र परमात्मनि । तेषामेकत्वमनुपश्यतः शोकमोहप्रहाणं स्यादिति । एतत्परिहारार्थं 'यस्मिन्' इत्यादिना शाखान्तरवाक्येनाप्येतन्मन्त्रार्थं सुव्यक्तं वक्ति । 'स विष्णुं पर्यगादतः' इत्यनेन वाक्येन 'स पर्यगात्' इति मन्त्रावयवं व्याचख्यौ । स उपासकः । स्वशक्त्यनुसारेण विष्णुं पर्यपश्यदिति यतः अतः तं पर्यगात् । तत्परिवारतया तल्लोकं जगामेत्यर्थः ॥

सर्वगतत्वस्य पुनरुक्तेर्विशेषकृत्यमाह- **पूर्वोक्तेति** ॥ 'यस्तु-' इत्यादि पूर्ववाक्योक्तं सर्वगतत्वं 'यस्मिन्' इत्याद्युत्तरवाक्येनानूद्यते, न पुनर्विधीयते ।

किमर्थमनुवाद इति चेत्, ज्ञानस्य फलविशेषविधानार्थम् । पूर्वत्र तु जुगुप्सा न स्यादिति सामान्यत एव हि तत्फलमुक्तम् । उत्तरत्र पुनः शोकादिराहित्यं विशेष उच्यते । अथाप्यसकृदुक्तिस्तात्पर्यार्था युक्तेत्याह- **अभ्यासश्चेति** ॥ अस्ति हि विष्णोः सर्वगतत्वादौ तात्पर्याधिक्यमिति भावः ॥ ७ ॥

**वादि**- ब्रह्मगमनस्य निश्चितत्वात् 'अगात्' इत्यतीतत्वोक्तिरिति भावेनाह- **सम्यक्प्राप्नोत्येवेति** ॥ 'एष्यत्तु निश्चितं यत्स्यादतीतत्वेन भण्यते' इति स्मृतिः । 'आत्मैवाभूत्' इति पूर्वार्धेऽपि परेणैक्यस्य कथितत्वात्पुनरुत्तरार्धे 'एकत्वमनुपश्यतः' इत्येकत्वस्यैव कथनात्पौनरुक्त्यम् । न च भाष्ये वक्ष्यमाणरीत्या परेणापीदं पौनरुक्त्यमभ्यासार्थमिति परिहर्तुं शक्यम् । सर्वभूतानामन्ते ब्रह्मण्येकीभावं वदतापि परेणैकस्मिञ्जीवे सर्वभूतैक्यं नाङ्गीक्रियते । उभयोरपि भिन्नदेहाद्युपाध्यवच्छिन्नत्वेन बाधितश्च । एवञ्च बाधितेऽर्थे रज्जुस्सर्प इति बहुवारमभ्यासेऽपि यथा नार्थसिद्धिः, तात्पर्यं तु दूरापास्तं तथात्राप्युक्तरीत्या बाधिते परस्यानभिमतेऽर्थे अभ्यासोऽपि स्वस्य शास्त्राभ्यासराहित्यसूचक एव । न तु परस्यार्थसाधकः । टीकाकृतोक्त-पौनरुक्त्यन्तु अभ्युपगमवादेनेति ज्ञेयम् । अस्माकं तु 'यस्मिन्सर्वाणि भूतानि स आत्मैव सर्वभूतेष्वभूत्' इत्यर्थाश्रयणात् स्थानभेदेन परमात्मनि प्राप्तभेदनिवारणाय 'एकत्वमनुपश्यतः' इति सार्थकमिति भावः ॥ ७ ॥

**श्रीनि**- आत्मैव जीव एव । तानि भूतानि संवृत्तो जातः । स अत्मैव तानि संवृत्त इति ज्ञानं यस्य विजानतोऽस्तीति वाक्यं योज्यम् । अभूदित्युक्त्या इदानीमुत्तरत्र च अभावः प्राप्त इत्यत आह- **अनादित इति** ॥ क्रियाप्रबन्धे लुङिति भावः । व्याख्यानमित्यनन्तरं एवमिति भाष्येणेति शेषः ॥ **एकत्वश्चेति** ॥ तथा च समग्रमन्त्रार्थे इयं समाख्या जातेति ज्ञेयम् । अपव्याख्यानस्य 'यस्मिन् सर्वाणि' इति विरोध उक्तः । दूषणान्तरञ्चाह- **एकत्वमिति** ॥ अन्यथा इत्थमव्याख्याने । यस्मिन्नित्यर्धेनोक्तमेवैकत्वमेकत्वमित्यनेन अनूद्यत इति चेन्न । अधिकविधानाय निषेधाय वा उक्तस्यानुवादो दृष्टः । न हि अत्र किञ्चिदधिकं विधीयते निषिध्यते वा अतोऽनुवादो व्यर्थ एवेत्याह- **अनुवादस्येति** ॥ एवं यस्मिन् परमात्मनि । इति उक्तप्रकारेणेत्यर्थः । शोकमोहाद्यभाव उच्यत इत्येतन्निवर्त्याशङ्कां प्रदर्शयन् व्याख्याति- **न च वाच्यमित्यादिना** ॥ 'विजानतश्च' इत्यस्य भावमाह-

**प्रागिति** ॥ दर्शने सामान्यतो ज्ञाने । विशेषतो जानत इति विजानतश्चेत्यस्य व्याख्यानम् । सद्भावादिति पञ्चम्याः न पुनरुक्तिदोष इत्यनेनान्वयः ॥ **आधिक्यश्चेति** ॥ तथा च न केवलं फले ज्ञाने च आधिक्यसद्भावः । 'एकत्वमनुपश्यतः' इत्यपि आधिक्यमुच्यत इति न पुनरुक्तिदोष इति भावः । नन्वेषा पुनरुक्तिशङ्का तत्त्वसंहितायामित्यनन्तरं परिहरणीया । नात्रेत्यत उक्तम्- **पुनरुक्तिदोषपरिहारप्रसङ्गादिति** ॥ **अभयत्वस्यापीति** ॥ अभ्यासः तात्पर्यार्थ इति द्रष्टव्यमित्यर्थः ॥ ७ ॥

**छलारी- एकत्वमिति** ॥ 'सर्वाणि भूतानि' इत्यनेनैक्यसिद्धौ ॥ **एकत्वमित्यस्य पौनरुक्त्यश्चान्यथेति** ॥ ऐक्यार्थे ॥ ७ ॥

**सत्य- वक्ष्यतीति** ॥ 'पूर्वोक्तानुवादेनेत्यादिना' इति शेषः ॥ **यस्य विजानतः तानि संवृत्त इति** ॥ स आत्मैव सर्वभूतात्मक इति यस्य पुरुषस्य ज्ञानमुत्पन्नमिति यावत् । 'एकत्वमनुपश्यतः' इत्यस्य सर्वभूतानामैक्यं जानत इत्यन्यथाप्रतीतिसङ्गहायादिपदम् ॥ **इति योज्यमिति** ॥ विजानत इत्यस्यावृत्त्या योज्यमित्यर्थः ॥ **पौनरुक्त्यं चान्यथेति** ॥ विजानतः तानि संवृत्त इत्यादिनेति शेषः। न केवलं समाख्याविरोध इति चार्थः ॥ ७ ॥

**नृसिंह**- भूतशब्देन चेतनमात्रग्रहणमिति चेन्न, निष्प्रमाणं सर्वशब्दार्थ-सङ्कोचापत्तेः । ननु मास्तु सङ्कोचः । चेतनाभेदो नाम मुख्यमैक्यमेव । जडविषये तु तद्व्यतिरेकेण मिथ्यात्वमिति न विरोध इति चेन्न । निर्मूलमेवं कल्पने उन्मत्तभाषित्वप्रसङ्गात् इति चानुपपत्तिरादिशब्देन गृह्यते । ननु विष्णोर्भूतेषु सर्वदा विद्यमानत्वात् कथमभूदित्यतीतकालसम्बन्ध एवोच्यत इत्यत आह- **अभूदिति** ॥ 'अस्ति ब्रह्मेति चेद्वेद' (तै.उ.२.६.१) इत्यत्र यथा अस्तिशब्दस्य सर्वकाल-साधारण्यम् । न च तत्र वर्तमानकालसम्बन्धमात्रमर्थः । एवं प्रकृतेऽपि । यथोक्तं-

प्रयोग एककालीनः सर्वकालेऽनुषज्जते ।
ददर्श विष्णुरित्यादौ नित्यचिद्रूपतो हरेः ॥

इति सर्वकालसाधारण्यं यथा लभ्यते तथैव प्रयुज्यतामिति चेन्न, कालत्रयावमर्शिनो लकारस्याभावेन आसीदिति अस्तीत्यादेः एकदेशकालसम्बन्धं

विना वक्तुमशक्यत्वादिति भावः । इति योज्यमिति कुत इत्यत आह- **विजानत इति** ॥ एकत्वेनेत्यनुवादादेकत्वमनुपश्यत इत्यस्यैव व्याख्यानमिति चेन्न, एवमित्यध्याहारानुपयोगादिति भावः '॥ **तदभ्यस्यतीति न दोष इति** ॥ ननु परपक्षेऽप्यधिकविधानाभावेन अनुवादवैयर्थ्येऽपि तात्पर्यद्योतनार्थं अभ्यासोऽस्त्विति चेन्न । तर्हि ऐक्यमेव अभ्यस्यताम् । विजानतोऽनुपश्यत इति द्विवारं ज्ञानानुवादः स्तुत्यर्थः । एकस्मिन्नेव वाक्ये अभ्यासश्च न दृष्टपूर्वः ॥ ७ ॥

**रघु- एतन्मन्त्रार्थेति** ॥ अतो न मन्त्रप्रतिपाद्यं पृथग्वक्तव्यम् । नापि पुनरुक्तिरिति भावः ॥ **वक्ष्यतीति** ॥ पूर्वोक्तानुवादेनेत्यादिनेति शेषः॥ **तत्रेति** ॥ उत्तरमन्त्र इत्यर्थः । एतस्य अन्यथाप्रतीतिनिरासाय इत्यनेनान्वयः । यस्मिन् काले यथोक्त आत्मनि वा तान्येव सर्वाणि भूतानि परमार्थदर्शनात् आत्मैवाभूदात्मैव संवृत्तः । परमार्थवस्तु विजानतः । तत्र तस्मिन् काले तत्रात्मनि वा को मोहः कः शोकः । शोकश्च मोहश्च कामबीजमजानतो भवति । न तु आत्मैकत्वं शुद्धं गगनोपमं पश्यत इत्यपव्याख्यां किञ्चिद्विवरणपूर्वकं सङ्ग्रहेण अनुवदति- **यस्मिन्नित्यादिना** ॥ **विजानतस्तानि संवृत्त इति** ॥ परमार्थवस्तुविजानतस्तानि भूतानि संवृत्तो भूतानि जातः भूताभिन्न इति यावत् । परेणात्मैवाभूत् आत्मैव संवृत्त इत्यत्राभूदित्येतत्प्रतिपदत्वेन संवृत्त इति प्रयोगात् सङ्ग्रहानुवादेऽत्र संवृत्त इत्येवानूदितम् । तस्य च अयमेवार्थ इति ज्ञातव्यम् । 'तानि संवृत्तः' इति क्वचित्पाठः । स तु स्वपरमूलकोशादर्शनात् कल्पितो ज्ञातव्यः । इत्याद्यन्यथाप्रतीतीत्यत्रादिशब्देन तत्र को मोह इत्याद्यन्यथाप्रतीतिसङ्ग्रहः । सर्वभूतानि इत्यस्य अभूदित्यनेन अन्वयासम्भवात् तदनुवदन्नपेक्षितं पूरयति- **सर्वभूतानीति** ॥ **तत्रेत्यनुवादेनेति** ॥ तत्र को मोह इत्यत्र विद्यमानस्य तत्रेत्यस्य अनुवादेनेत्यर्थः । ननु इदानीमपि परमेश्वरस्य सर्वभूतगतत्वात् अभूदित्यतीतत्वोक्तिः अयुक्तेत्यतो न अतीतत्वाभिप्रायेण अभूदित्युक्तम् । किन्तु आगन्तुकत्वशङ्कानिरासाय अनादितो वर्तमानत्वाभिप्रायेणेत्याशयेन-

प्रयोग एककालीनः सर्वकालेऽनुषज्जते ।
ददर्श विष्णुरित्यादौ नित्यचिद्रूपतो हरेः॥

इति प्रमाणं मनसि निधायानूद्य व्याचष्टे- **अभूत् अनादितो वर्तत इति** ॥ ननु भाष्ये एवमिति न तावत् श्रौतपदानुवादः । श्रुतौ तदभावात् । नाप्यध्याहारः, तस्य व्यर्थत्वादित्यतो द्वितीयं पक्षमङ्गीकृत्य अध्याहारस्य प्रयोजनमाह- **विजानत इत्यस्यान्वयसिद्ध्यर्थमिति** ॥ अभूदित्यन्तेन पूर्वेणान्वयसिद्ध्यर्थमित्यर्थः । एवं विजानत इत्युक्ते हि पूर्वोक्तस्य ज्ञाने प्रकारत्वप्रतीत्या विजानत इत्यस्य पूर्वेणान्वयो घटते । विजानत इत्येवोक्तौ येन केनापि प्रकारेणेति प्रतीत्या न पूर्वोक्तेन अन्वयसिद्धिः । अत एवोदाहरिष्यमाणसमाख्याश्रुतौ 'एवं सर्वत्र यो विष्णुं पश्येत्' इत्युक्तमिति भावः । ननु मन्त्रे परमात्मानः सर्वभूतगतत्वेन ज्ञानं तेष्वेकत्वेन ज्ञानञ्च पृथगेव अनूद्य फलमुक्तम् । तत्र विजानत इति एकत्वमनुपश्यत इति च पृथक् श्रवणात् । भाष्ये तु सर्वभूतेषु एकत्वेन परमात्मानं विजानत इत्युभयविषयकैक-ज्ञानानुवादेन फलमुक्तम् । अतो मन्त्रभाष्ययोः विरोध इत्यतो मन्त्रानुसारेण भिन्नवाक्यतया भष्यं योजयति- **एवं सर्वाधारतयेति** ॥

सर्वभूतेषु परमात्मानमिति सम्बन्धप्रदर्शनम् । तं चेति शेषकथनमिति ज्ञातव्यम् । यद्यपि अत्र टीकायां सर्वाधारतया सर्वभूतेष्वित्यादिकमेव वक्तव्यम् । न तु एवमिति । तस्य योजनानुपयोगात् । तथापि सर्वभूतेषु इत्यादिभाष्यमध्याहृतैवं शब्दव्याख्यानरूपमिति ज्ञापनाय तदुक्त्युपपत्तेः । न चैवमपि टीकायां सर्वाधारतयेत्यधिकं भाष्ये तदभावादनावश्यकत्वाच्चेति वाच्यम् । मन्त्रे यस्मिन् सर्वाणि भूतानीत्युक्तं सर्वभूताश्रयत्वं सर्वभूतगतत्वे प्रकारप्रदर्शकतया उपयुज्यते । न तु सर्वभूतगतत्वादिकमिव पृथक् ज्ञातव्यतया । तथात्वे तद्वत् पृथग्विजानत इति वक्तव्यत्वापातात् । सर्वभूतगतत्वे प्रकारप्रदर्शनं तु आवश्यकमिति प्रागुपपादितमेव । भाष्ये तदनुक्तिरपि स्वातन्त्र्येण अज्ञेयत्वसूचनाय इत्येतावतोऽर्थस्य ज्ञापनाय सर्वाधारतयेत्युक्तेरावश्यकत्वात् ॥

यद्वा भाष्ये एवमित्यस्य वैयर्थ्यशङ्कायां 'यस्मिन्सर्वाणि भूतानि' इत्युक्त-सर्वाधारत्वस्य प्रकारतया अनुवादार्थत्वान्न तदिति भावेनैवमित्यनूद्य सर्वाधारतयेति व्याख्यातम् । अस्मिन्पक्षे भाष्ये सर्वभूतगतत्वमिव सर्वभूताधारस्यापि वक्तव्यत्वान्न्यूनतेति शङ्का निरस्ता भवति। एवंशब्देनोक्तिस्तु प्रकारत्वज्ञापनायेति बोध्यम् । ननु तं च एकत्वेन विजानत इति योज्यमित्युक्तमयुक्तम् । मन्त्रानुसारेण

तं च एकत्वेन अनुपश्यत इति वक्तव्यत्वात् । न च यथाभाष्यमुक्तत्वान्न दोषः । तथा सति भाष्यस्य मन्त्रविरोधप्रसङ्गः । मन्त्रे विजानत इत्यस्य उभयत्र सम्बन्धाभिप्रायेण भाष्यप्रवृत्त्यङ्गीकारे मंन्त्रे अनुपश्यत इत्यस्य वैयर्थ्यप्रसङ्ग इत्यत आह- **विजानत इति** ॥ अत्र यद्यपि विजानत इत्येतन्न विजानत इत्यस्य व्याख्यानम् । यथाश्रुतानुवादत्वेन आधिक्योक्त्यभावात् । नाप्यनुपश्यत इत्यस्य, उभयोः समानार्थत्वेन विशेषाभावात् । तथापि विजानत इत्यनुवादेन को मोह इति सम्बन्धस्य प्रदर्शितत्वात् तद्व्याख्यानत्वोक्तिर्घटते । न ह्यर्थकथनमेव व्याख्यानम् । अनुपश्यत इत्यस्य तु न पूर्वमन्त्र इव अत्र दृशेर्ज्ञानसामान्यार्थत्वम् । किन्तु साक्षात्कारार्थमिति ज्ञापनाय विजानत इति व्याख्यानं कृतम् । विशेषतो जानतः अपरोक्षज्ञानिन इति । ततश्चेत्थं मन्त्रयोजना । यस्मिन् परमात्मनि । सर्वाणि भूतानि तिष्ठन्ति स परमात्मैव तत्र तेषु भूतेषु अभूत् । सर्वभूताधारतया सर्वभूतेषु अनादितो वर्तते । इत्येवं परमात्मानं विजानतः विशेषतः अपरोक्षतो जानतः । तथा सर्वेषु भूतेषु स्थितस्य परमात्मनः एकत्वं अधिष्ठानभेदप्रयुक्तभेदाभावम् । ततश्च अनुग्राह्यानुग्राहकभावाभावं च अनुपश्यतः आपरोक्ष्येण जानतः । को मोहः? न कोऽपि । तदभावे च कः शोकः? न कोऽपीति । एकत्वमनुपश्यत इति मन्त्रानुसारेण अपेक्षितं पूरयति- **एकत्वेनेति** ॥ एकत्वं चेति शेष इत्यपि पाठः । अध्याहृतस्य अन्वयप्रदर्शनाय विजानत इत्यनुवाद इति ज्ञेयम् ॥

विमतः शोकाद्यभाववान् परमेश्वरज्ञानित्वात् इति मन्त्राभिप्रेतानुमाने अप्रयोजकत्वमाशङ्कते- **ननु परमेश्वरज्ञानेऽपीति** ॥ परमेश्वरज्ञानेन तत्प्राप्ति-मनुमाय तया शोकाद्यभावसाधनान्न दोष इत्याशयेन व्याचष्टे- **यत इति** ॥ स इत्यस्य व्याख्यानं- **ज्ञानीति** ॥ सुप्तौ विष्णुप्राप्तावपि आत्यन्तिकशोकाद्य-भावाभावात् व्यभिचारनिरासाय श्रुत्युक्तस्य परीत्यस्य व्याख्यानं- **सम्यगिति** ॥ गमेर्ज्ञानार्थत्वभ्रमनिरासाय प्राप्नोतीत्युक्तम् ।'अनियमः सर्वेषामविरोधात्' (ब्र.सू.३.३.३२) इत्युक्तन्यायेन ज्ञानिनो विष्णुप्राप्तिनियमात् न असिद्धिराशङ्क-नीयेत्याशयेन अवधारणप्रयोग इति ज्ञातव्यम् ॥ **अनेनेति** ॥ विष्णुप्राप्तेः हेतुत्वकथनेनेत्यर्थः ॥ **तात्पर्यमिति** ॥ ज्ञानिनः शोकाद्यभावे युक्तिकथने तात्पर्यमित्यर्थः । अन्यथा उत्तरार्धस्य पूर्वमन्त्रेण सङ्गत्यभावप्रसङ्ग इति भावः । न

केवलं शोकाद्यभावे हेतुरुक्तो भवति । किन्तु तात्पर्यमपीत्यपिशब्दः । भाष्यमुपलक्षणमित्याशयेन अपव्याख्याने आन्तरानुपपत्तिमप्याह- **एकत्वमिति** ॥ **पौनरुक्त्यमिति** ॥ सर्वाणि भूतानि आत्मैवेति विजानत इत्यनेन ऐक्यज्ञानस्य उक्तत्वात् पौनरुक्त्यमित्यर्थः । अन्यथा परोक्तव्याख्याने ॥ **वैयर्थ्यादिति** ॥ अधिकविधाननिषेधयोरन्यतरस्य अभावादिति भावः ॥ **एवमिति** ॥ भाष्यकारोक्तरीत्या इत्यर्थः । अपिशब्देन व्याख्यानद्वयस्यापि समबाधकत्वात् भाष्यकृदुक्तमेव युक्तमिति निर्णयो नोपपद्यत इति सूचयति । ननु भाष्ये साध्यानुक्तेः न्यूनता न पुनरुक्तिरिति तदध्याहारेऽपि अनन्वयप्रसङ्गः । तदर्थमत इत्यध्याहारेऽपि समग्रस्य पुनरुक्त्यभावहेतुत्वमुत पूर्वोक्तानुवादेनेत्येता-वन्मात्रस्य नोभावपि । पूर्वोक्तानुवादेन न पुनरुक्तिरित्येतावतैव समञ्जसत्वेन शोकमोहेत्यादेः व्यर्थत्वादित्यतः आकाङ्क्षाक्रमेण भाष्यं योजयति- **पूर्वमन्त्रोक्तस्येति** ॥ पूर्वमन्त्रोक्तस्य 'ततो न विजुगुप्सते' इत्यन्तस्य अनुवादेनेत्यर्थभ्रमनिरासाय 'सर्वाधारतया' इत्यादिना पूर्वोक्तशब्दार्थकथनमिति ज्ञातव्यम् । मन्त्रे 'यस्तु' इत्यादिना सर्वाधारतायाः पृथगुक्तत्वेऽपि नात्र स्वातन्त्र्येण ज्ञेयता विवक्षिता । किन्तु 'सर्वभूतेषु चात्मानम्' इत्युक्तसर्वभूतगतत्वे प्रकारतयेति ज्ञापयितुं सर्वाधारतयेत्युक्तम् । एवमेव प्रागित्युत्तरवाक्यमपि व्याख्यातव्यम् । एतच्च प्रागुपपादिमनुसन्धेयम् । ननु तर्हि अवशिष्टं भाष्यं व्यर्थं स्यादित्यतः तन्निवर्त्याशङ्कामुत्थापयति- **न चेति** ॥

कुतो न वाच्यमित्यतो भाष्ये शोकमोहाभावश्च अत्रोच्यते विजानतश्चात्रोच्यत इति वाक्यद्वयमाश्रित्य तत्राप्याद्यस्य फलाधिक्यप्रदर्शकत्वं द्वितीयस्य साधनाधिक्यप्रदर्शकत्वं च आश्रित्य पूर्वमन्त्रोक्तफलानुवादपूर्वकं फलान्तर-प्रदर्शकत्वेनाद्यं वाक्यं योजयति- **पूर्वमेवंविद इति** ॥ 'यस्तु' इति मन्त्रे सर्वाधारतया सर्वगतत्वविद इत्यर्थः । अधुना पूर्वमन्त्रोक्तसाधनानुवादपूर्वकमधिक-साधनप्रदर्शकत्वेन द्वितीयं वाक्यं योजयति- **प्रागिति** ॥ 'यस्तु' इति मन्त्रे इत्यर्थः ॥ **दर्शनफलमिति** ॥ ज्ञानफलमित्यर्थः ॥ **अत्रेति** ॥ 'यस्मिन्' इति मन्त्रे इत्यर्थः । ज्ञानाधिक्यलाभाय विशब्दो विशेषत इति व्याख्यातः । यद्यपि विजानतः शोकमोहाभावश्च अत्रोच्यत इत्येकवाक्यत्वेनापि भाष्ययोजना घटते न

चैवं चशब्दो व्यर्थः । पूर्वमन्त्रोक्तभयाभावसमुच्चायक इत्युपपत्तेः । तथापि उक्तन्यायेन अधिकार्थलाभसम्भवे किमेकवाक्यत्वश्रद्धाजाड्येनेत्याशयात् । एकवाक्यतायां 'विजानतः' इत्यस्य अतीवोपयेगादर्शनाच्च । नन्वियं पुनरुक्तिः 'तद्दूरे' इति वाक्यव्याख्यानावसरे परिहार्या । नात्र । असङ्गतत्वादित्यत उक्तम्- **पुनरुक्तिदोषपरिहारप्रसङ्गादिति** ॥ ७ ॥

## उपनिषत्

**स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम् । कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधात् शाश्वतीभ्यः समाभ्यः ॥८॥**

## भाष्यम्

शुक्रं तच्छोकराहित्यादव्रणं नित्यपूर्णतः ।
पावनत्वात्सदा शुद्धमकायं लिङ्गवर्जनात् ॥

स्थूलदेहस्य राहित्यादस्नाविरमुदाहृतम् ।
एवम्भूतोऽपि सार्वज्ञात् कविरित्येव शब्द्यते ॥
ब्रह्मादिसर्वमनसां [१]प्रकृतेर्मनसोऽपि [२]च ।

ईशितृत्वान्मनीषी स परिभूस्सर्वतो वरः ॥
सदाऽनन्याश्रयत्वाच्च स्वयम्भूः परिकीर्तितः ।
स सत्यं जगदेतादृङ् नित्यमेव प्रवाहतः ॥

अनाद्यनन्तकालेषु प्रवाहैकप्रकारतः ।
नियमेनैव ससृजे भगवान् पुरुषोत्तमः ॥

सज्ज्ञानानन्दशीर्षोऽसौ सज्ज्ञानानन्दबाहुकः ।
सज्ज्ञानानन्ददेहश्च सज्ज्ञानानन्दपादवान् ॥

---

१. प्रकृत्या । २. तु ।

एवम्भूतो महाविष्णुः यथार्थं जगदीदृशम् ।
अनाद्यनन्तकालीनं ससर्जात्मेच्छया प्रभुः॥
इति वाराहे ॥ ८ ॥

**टीका**- ज्ञानिनः शोकाद्यभावे युक्तित्वेन 'स पर्यगात्' इति विष्णुप्राप्तिरुक्ता । तत्र च राजादीनिव परमेश्वरं प्राप्तस्यापि शोकाद्यभावः किंनिमित्त इत्यतः शुक्रमित्यादिविशेषणानि । तत्रादेहत्वोक्त्या प्राप्तशङ्कापरिहाराय कविरित्युत्तरार्धः । तमिमं मन्त्रमप्रतीत्यादिपरिहाराय पुराणवाक्येन व्याख्याति- **शुक्रमिति** ॥ शुचं शोकं रहति त्यजतीति शुक्रमित्यर्थः ॥ **नित्यपूर्णत इति** ॥ नित्यत्वपूर्णत्वाभ्यामित्यर्थः । 'व्रण सञ्चूर्णने' इत्यतः स्तोको व्रणः, कालेनास्तोकं नित्यं, गुणैरस्तोकं पूर्णमिति । पावनत्वात् पावित्र्यहेतुत्वात् । यद्यपि कायशब्दः स्थूलसूक्ष्मशरीरसाधारणः । तथापि अस्नाविरमिति स्थूलशरीराभावस्य पृथगुक्तेः 'अकायं लिङ्गवर्जनात्' इत्युक्तम् । स्नावोपलक्षितधातुमयं स्नाविरं स्थूलशरीरमेव हि प्रसिद्धम् । यतो हि ब्रह्म शुद्धं तस्मादपापविद्धम् । ततश्च पापमूलस्थूलसूक्ष्मशरीरविधुरम् । तथा च देहनिमित्तशोकादिशून्यम् । एवम्भूतं च ज्ञानी पर्यगात् सारूप्यादिलक्षणां तद्गतिं गतो भवति । अतः तस्य शोकाद्यभावो युक्त इति भावः । यद्यशरीरो विष्णुर्न तर्हि तस्य जगत्सर्जनाद्युपपद्यते । घटादिसृष्ट्यादौ शरीरान्वयव्यतिरेकानुविधानदर्शनात् । न च वाच्यम् । शुक्तिकायामिव रजतं परमात्मनि जगदारोपितमेव । अतो न च शरीरापेक्षेति । बाधाभावेन तत्सत्यत्वनिश्चयात् । न च अदेहत्वस्य जगत्सृष्ट्यादेश्च कालभेदेन व्यवस्था । जगत्सृष्ट्यादिप्रवाहस्य अनाद्यनन्ततया प्रमितत्वात्। अतः सत्यानाद्यनन्तकालीनजगतदुत्पत्त्यादिकारणस्य विष्णोः कथमशरीरत्वमित्याशङ्कापरिहाराय उक्तस्य कविरित्यादेः व्याख्यानम्- **एवम्भूतोऽपीति** ॥ एवम्भूतोऽशरीरोऽपि स पुरुषोत्तमः सत्यं प्रवाहतो नित्यमपि जगत्ससृज इति सम्बन्धः ॥ **एतादृगिति** ॥ सत्यत्वादिना प्रमितमित्यर्थः । ससृज इत्युपलक्षणम् । प्रवाहतो नित्यत्वेऽपि पूर्वोत्तराणां जगतां वैचित्र्यं सम्भवति । तन्नास्तीति स्वरूपकथनम्- **अनादीति** ॥ 'नियमेन प्रवाहैकप्रकारतः' इति प्रवाहिणामेकप्रकारत्वमभिप्रैति । तदनेन 'शाश्वतीभ्यः समाभ्यः' इति सप्तम्यर्थे व्याख्यातं भवति । अनाद्यनन्तसंवत्सरेषु याथार्थ्येन वर्तमानानपीत्यर्थः । अशरीरस्य जगत्सृष्ट्यादिनिर्वाहार्थमाह- **सार्वज्ञादिति** ॥ 'एवाहोवैवाहि'

**इतिवत् कविरित्येव कविरित्येवम् । परिभवति सर्वं वशीकरोतीति परिभूस्सर्वतो वरः । स्वयमेव परमनपेक्ष्य भवतीति स्वयम्भूः । सदा अनन्याश्रयः । चशब्दौ विशेषणसमुच्चयार्थौ । ननु शरीराधीनत्वात् सर्जनादेः कथं सार्वज्ञादिना घटत इत्यत आह- सज्ज्ञानेति ॥ जडशरीराभावेऽपि सज्ज्ञनाद्यात्मकशीर्षादिमान् भवति । यत एवम्भूतस्तस्माज्जगत्ससर्जेति योजना । सज्ज़ानाद्यात्मकविग्रहवत्वमन्येषामविद्यमानं तस्योपपादयितुं सार्वज्ञादि-माहात्म्यमुक्तमिति भावः । अपरे तु योऽयमतीतैः मन्त्रैरुक्त आत्मा सः स्वेन रूपेण किंलक्षणक इत्यपेक्षायामयं मन्त्र इत्युक्त्वा 'स पर्यगात्' इत्येतदपि आत्मविषयं व्याकुर्वते । स आत्मा पर्यगात् व्याप्तोऽभूदिति । तत्तु असत् । शुक्रमित्यादेः द्वितीयान्तस्य अन्वयाभावप्रसङ्गात् । न चैतत् प्रथमान्तमात्मन एव विशेषणं लिङ्गव्यत्ययात् । विपरिणामस्तु अगतिका गतिः । स्वयमेव सर्वं भवतीति स्वयम्भूरिति च 'मनीषी परिभूः' इत्यनेन विरुद्धम् । न च एवंविधमात्मनो निष्कृष्टं रूपं तेषामिति सम्बन्धः ॥ ८ ॥**

**वामन**- यानि पुनः शुक्रत्वादिविशेषणानि विष्णोरुक्तानि तानि तु 'शुक्रं तत्-' इत्यादिना वाराहवचनेन व्याख्याति । कायः सूक्ष्मं लिङ्गशरीरम् । स्नाविरं स्थूलं भौतिकशरीरम् । 'आत्मैवाभूत्' इति वचनात् तद्व्यतिरिक्तं मिथ्येत्याशङ्क्य व्यक्तं परिहरति- **कविरिति** ॥ 'एवम्भूतः' इत्यादिना तन्मन्त्रार्थमाह । एवं स्थूलसूक्ष्मदेहविहीनोऽपि स्वतः सार्वज्ञात् कविः । 'कव ग्रहणे' इति धातोः । अन्यमनीषाणामीशत्वात् मनीषी । 'ईश ईशने' इति धातोः । अत्र शकारस्य षत्वविधानात् अन्यमनसामीशितृत्वाद्वा मनीषीत्युच्यते । परिभूः व्याप्तः । सर्वविजयी वा । कारणान्तरं विना स्वयमेव सर्वदा भवतीति स्वयम्भूः । एतादृक् वर्तमानजगत्सदृशम् । एवं च नीचोच्चवस्त्वात्मकं चिदचिद्रूपं चेत्युक्तं भवति । एवम्भूतस्य जगद्विशेषस्य परेणोत्पत्तिनाशवत्त्वात् प्रवाहतो नित्यमेव इत्युक्तिः । स च प्रवाह एकप्रकारः । पराद्यन्तयोरुत्पत्तिनाशनियमात् । कल्पादिक्लृप्तिनियमाच्च । नच तन्नित्यत्वमनादित्वमात्रादनन्तत्वमात्राद्वा विवक्षितम् । किन्तूभयतश्च भवति । 'शाश्वतीभ्यः समाभ्यः' इत्यस्य अनाद्यनन्तकालेषु इति विवरणात् । नच तेषु कालेषु पदार्थानां मिथ्यासृष्टिः शङ्क्या । याथातथ्यतोऽर्थविधानस्य नियमेन इत्यवधारणात् । अकायमिति करणाभावोक्तेः सत्यसृष्ट्याद्यसम्भवस्तस्येत्यत

आह- **सज्ज्ञानेति ॥** अप्राकृतदेहस्यापि सज्ज्ञानानन्दात्मकदेहेन्द्रियवत्त्वात् तत्सम्भवः । तदेतन्निगमयति- **एवम्भूत इति ॥** उक्तात्यन्तविलक्षणदेहादिमान् एवम्भूत इत्युक्तः । महाविष्णुः परं ब्रह्म । एवं सत्यजगत्कारणत्वं ब्रह्मणो निर्णीतम् । तत् परिणामेनेति माऽतिशङ्कि । आत्मेच्छया इति विशेषणात् । नहि सेच्छस्य कुलालादेः परिणमनं दृष्टम् । अतो निमित्तकारणमेव ब्रह्म नतूपादानमिति सिद्धम् । इदमत्राकूतं व्याप्तिधृतिशुक्रत्वादिभिः सह सत्यकर्मत्वं सच्चिदानन्दरूपे विष्णावुपसंहर्तव्यं महामुमुक्षुभिरिति ॥ ८ ॥

**वादि**- 'स्तोको व्रणः' इत्यत्र स्तोकोऽल्पता । 'किञ्चिन्मात्रं तनुस्तोक-ह्रस्वाल्पत्रुटयस्समाः' इति हलः । नच 'अकायम्' इत्यत्र सर्वथा कायाभावः शङ्क्यः । 'यत्ते रूपं कल्याणतमम्' इत्युपरि कल्याणतमरूपस्य वक्ष्यमाणत्वात् । 'अकायमव्रणम्' इत्यत्रापि प्राकृतदुर्भगदेहस्यैव निषेधः । अत एव व्रणादियोग्य-देहाभावसूचनाय 'अव्रणमस्नाविरम्' इत्युक्तम् । तस्य हरेः शोकरहितत्वेन तं प्राप्तस्य मुक्तस्यापि शोकराहित्यघटनाय 'सारूप्यादिलक्षणां तद्गतिम्' इत्युक्तम् ॥

'नियमेन प्रवाहैकप्रकारत इति' इत्यत्र प्रवाहस्यैकत्वात् तत्रैकप्रकारोक्तिः व्यर्था स्यात् । अत एव 'प्रवाहिणाम्' इत्युक्तम् । 'कविरित्येव शब्द्यते' इत्युक्ते नामान्तरं नास्तीति भ्रमः स्यात् । अत एव शब्दार्थं सदृष्टान्तमाह- **एवाह्येवैवेति ॥** 'एवाह्येवैवाह्यग्ना इ' इत्युपनिषद्वाक्येषु एवाहीति शब्दस्य एवं हीत्यर्थ उक्त इति भावः । ननु कविपदेन भगवतः सार्वज्ञकथनेऽपि तार्किकसर्वज्ञेश्वरवद्देहाभावे कथं सृष्टिः । कुम्भकरणकौशलज्ञानवतोऽपि कुम्भकारस्य हस्तच्छेदे कुम्भकर्तृत्वा-दर्शनादिति हरेरप्यलौकिकदेहसद्भावं प्रमाणेन द्रढयति- **सज्ज्ञानानन्दशीर्ष इति ॥**

न चैवंविधमित्यत्र तेषां स्वयमेव सर्वं स्वयं भवतीति वादिनामेवंविधं 'शुक्रमकायमस्नाविरम्' इत्यादिनोक्तं निष्कृष्टरूपमस्ति । मनुष्यपशुपक्ष्यादिरूपेषु शोकसहितत्वात् सकायत्वात् सव्रणत्वात् स्नाविरविशिष्टत्वात् पापविद्धत्वाच्च । तथाच स्वयम्भुपदेन सर्वजीवात्मकत्वं वदतां कथं न पूर्वोत्तरविरोध इति भावः ॥८॥

**श्रीनि**- राजादीनिवेति व्यतिरेकदृष्टान्तः । यथा राजादीन् प्राप्तस्य शोकादिरेव दृष्टो न तदभावः । एवं परमेश्वरं प्राप्तस्यापि शोकादिरेव युक्तः । दृष्टानुसारिणी हि

**इतिवत् कविरित्येव कविरित्येवम् । परिभवति सर्वं वशीकरोतीति परिभूस्सर्वतो वरः । स्वयमेव परमनपेक्ष्य भवतीति स्वयम्भूः । सदा अनन्याश्रयः । चशब्दौ विशेषणसमुच्चयार्थौ । ननु शरीराधीनत्वात् सर्जनादेः कथं सार्वज्ञादिना घटत इत्यत आह- सज्ज्ञानेति ॥ जडशरीराभावेऽपि सज्ज्ञनाद्यात्मकशीर्षादिमान् भवति । यत एवम्भूतस्तस्माजगत्ससर्जेति योजना । सज्ज्ञानाद्यात्मकविग्रहवत्त्वमन्येषामविद्यमानं तस्योपपादयितुं सार्वज्ञादि-माहात्म्यमुक्तमिति भावः । अपरे तु योऽयमतीतैः मन्त्रैरुक्त आत्मा सः स्वेन रूपेण किंलक्षणक इत्यपेक्षायामयं मन्त्र इत्युक्त्वा 'स पर्यगात्' इत्येतदपि आत्मविषयं व्याकुर्वते । स आत्मा पर्यगात् व्याप्तोऽभूदिति । तत्तु असत् । शुक्रमित्यादेः द्वितीयान्तस्य अन्वयाभावप्रसङ्गात् । न चैतत् प्रथमान्तमात्मन एव विशेषणं लिङ्गव्यत्ययात् । विपरिणामस्तु अगतिका गतिः । स्वयमेव सर्वं भवतीति स्वयम्भूरिति च 'मनीषी परिभूः' इत्यनेन विरुद्धम् । न च एवंविधमात्मनो निष्कृष्टं रूपं तेषामिति सम्बन्धः ॥ ८ ॥**

**वामन**- यानि पुनः शुक्रत्वादिविशेषणानि विष्णोरुक्तानि तानि तु 'शुक्रं तत्-' इत्यादिना वाराहवचनेन व्याख्याति । कायः सूक्ष्मं लिङ्गशरीरम् । स्नाविरं स्थूलं भौतिकशरीरम् । 'आत्मैवाभूत्' इति वचनात् तद्व्यतिरिक्तं मिथ्येत्याशङ्क्य व्यक्तं परिहरति- **कविरिति** ॥ 'एवम्भूतः' इत्यादिना तन्मन्त्रार्थमाह । एवं स्थूलसूक्ष्मदेहविहीनोऽपि स्वतः सार्वज्ञात् कविः । 'कव ग्रहणे' इति धातोः । अन्यमनीषाणामीशत्वात् मनीषी । 'ईश ईशने' इति धातोः । अत्र शकारस्य षत्वविधानात् अन्यमनसामीशितृत्वाद्वा मनीषीत्युच्यते । परिभूः व्याप्तः । सर्वविजयी वा । कारणान्तरं विना स्वयमेव सर्वदा भवतीति स्वयम्भूः । एतादृक् वर्तमानजगत्सदृशम् । एवं च नीचोच्चवस्त्वात्मकं चिदचिद्रूपं चेत्युक्तं भवति । एवम्भूतस्य जगद्विशेषस्य परेणोत्पत्तिनाशवत्त्वात् प्रवाहतो नित्यमेव इत्युक्तिः । स च प्रवाह एकप्रकारः । पराद्यन्तयोरुत्पत्तिनाशनियमात् । कल्पादिक्लृप्तिनियमाच्च । नच तन्नित्यत्वमनादित्वमात्रादनन्तत्वमात्राद्वा विवक्षितम् । किन्तूभयतश्च भवति । 'शाश्वतीभ्यः समाभ्यः' इत्यस्य अनाद्यनन्तकालेषु इति विवरणात् । नच तेषु कालेषु पदार्थानां मिथ्यासृष्टिः शङ्क्या । याथातथ्यतोऽर्थविधानस्य नियमेन इत्यवधारणात् । अकायमिति करणाभावोक्तेः सत्यसृष्ट्याद्यसम्भवस्तस्येत्यत

आह- **सज्ज्ञानेति** ॥ अप्राकृतदेहस्यापि सज्ज्ञानानन्दात्मकदेहेन्द्रियवत्त्वात् तत्सम्भवः । तदेतन्निगमयति- **एवम्भूत इति** ॥ उक्तात्यन्तविलक्षणदेहादिमान् एवम्भूत इत्युक्तः । महाविष्णुः परं ब्रह्म । एवं सत्यजगत्कारणत्वं ब्रह्मणो निर्णीतम् । तत् परिणामेनेति माऽतिशङ्कि । आत्मेच्छया इति विशेषणात् । नहि सेच्छस्य कुलालादेः परिणमनं दृष्टम् । अतो निमित्तकारणमेव ब्रह्म नतूपादानमिति सिद्धम् । इदमत्राकूतं व्याप्तिधृतिशुक्रत्वादिभिः सह सत्यकर्मत्वं सच्चिदानन्दरूपे विष्णावुपसंहर्तव्यं महामुमुक्षुभिरिति ॥ ८ ॥

**वादि**- 'स्तोको व्रणः' इत्यत्र स्तोकोऽल्पता । 'किञ्चिन्मात्रं तनुस्तोक-ह्रस्वाल्पत्रुटयस्समाः' इति हलः । नच 'अकायम्' इत्यत्र सर्वथा कायाभावः शङ्क्यः । 'यत्ते रूपं कल्याणतमम्' इत्युपरि कल्याणतमरूपस्य वक्ष्यमाणत्वात् । 'अकायमव्रणम्' इत्यत्रापि प्राकृतदुर्भगदेहस्यैव निषेधः । अत एव व्रणादियोग्य-देहाभावसूचनाय 'अव्रणमस्नाविरम्' इत्युक्तम् । तस्य हरेः शोकरहितत्वेन तं प्राप्तस्य मुक्तस्यापि शोकराहित्यघटनाय 'सारूप्यादिलक्षणां तद्गतिम्' इत्युक्तम् ॥

'नियमेन प्रवाहैकप्रकारत इति' इत्यत्र प्रवाहस्यैकत्वात् तत्रैकप्रकारोक्तिः व्यर्था स्यात् । अत एव 'प्रवाहिणाम्' इत्युक्तम् । 'कविरित्येव शब्द्यते' इत्युक्ते नामान्तरं नास्तीति भ्रमः स्यात् । अत एव शब्दार्थं सदृष्टान्तमाह- **एवाह्येवैवेति** ॥ 'एवाह्येवैवाह्यग्ना इ' इत्युपनिषद्वाक्येषु एवाहीति शब्दस्य एवं हीत्यर्थ उक्त इति भावः । ननु कविपदेन भगवतः सार्वज्ञकथनेऽपि तार्किकसर्वज्ञेश्वरवद्देहाभावे कथं सृष्टिः । कुम्भकरणकौशलज्ञानवतोऽपि कुम्भकारस्य हस्तच्छेदे कुम्भकर्तृत्वा-दर्शनादिति हरेरप्यलौकिकदेहसद्भावं प्रमाणेन द्रढयति- **सज्ज्ञानानन्दशीर्ष इति** ॥

न चैवंविधमित्यत्र तेषां स्वयमेव सर्वं स्वयं भवतीति वादिनामेवंविधं 'शुक्रमकायमस्नाविरम्' इत्यादिनोक्तं निष्कृष्टरूपमस्ति । मनुष्यपशुपक्ष्यादिरूपेषु शोकसहितत्वात् सकायत्वात् सव्रणत्वात् स्नाविरविशिष्टत्वात् पापविद्धत्वाच्च । तथाच स्वयम्भुपदेन सर्वजीवात्मकत्वं वदतां कथं न पूर्वोत्तरविरोध इति भावः॥८॥

**श्रीनि**- राजादीनिवेति व्यतिरेकदृष्टान्तः । यथा राजादीन् प्राप्तस्य शोकादिरेव दृष्टो न तदभावः । एवं परमेश्वरं प्राप्तस्यापि शोकादिरेव युक्तः । दृष्टानुसारिणी हि

कल्पना । अतः शोकाद्यभावः किं निमित्त इत्यर्थः । चूर्णमल्पम् । स्तोको स्वल्पः ॥ **कालेनेति** ॥ कालेन स्वल्पो न । किं नाम बहुकालीनेत्यर्थः । सूक्ष्मशरीरं लिङ्गदेहः । ननु स्यादेतदुपपादनम् । यदि स्नाविरशब्दवाच्यतया स्थूलशरीरं प्रसिद्धं स्यात् । तदेव कुत इत्यत आह- **स्नावेति** ॥ अदेहत्वोक्त्या प्राप्तशङ्कापरिहारायेत्युक्तम् । तं दर्शयति- **यद्यशरीर इत्यादिना** ॥ **कालभेदेनेति** ॥ यदा देहवत्वं तदा जगत्स्रष्टृत्वम्, यदा न जगत्स्रष्टृत्वं तदा अदेहवत्वमिति कालभेदेन व्यवस्थेत्यर्थः । उपलक्षणम् । 'स्थितिप्रलययोः' इति शेषः ॥ **स्वरूपेति** ॥ जगत्स्वरूपेत्यर्थः । ननु प्रवाहस्य एकप्रकारत्वेऽपि प्रवाहिणां जगतां वैचित्र्यं नास्तीति कथमागतमित्यत आह- **नियमेनेत्यादिना** ॥ पञ्चम्यन्तपदद्वयं 'याथातथ्यतः' इत्यस्य यथार्थेन वर्तमानानपीति । प्रवाहतो नित्यानपीत्यर्थः । याथातथ्यत इत्यस्य व्याख्यानं भाष्ये 'नित्यमेव प्रवाहतः' इति । अत्र एवशब्दोऽप्यर्थः । अत एव प्रवाहतो नित्यमपीति व्याख्यातम् । ननु 'कविः' इत्येवोक्त्या इतरनामवाच्यताभावप्राप्तेरित्यत आह- **एवाहीति** ॥ हे अग्ने मदुक्तं प्रमेयं एवाहि । एवैवाहि एवमेव हीत्येव तद्वाक्यार्थः । तद्वदत्रापि एवशब्दः एवमित्यर्थकः । ततश्च कविरित्येवं शब्द्यते इत्यर्थः । ननु यदि ज्ञानानन्दाद्यात्मकविग्रहोऽस्ति हरेः तर्हि सुखेन जगत्स्रष्टृत्वोपपत्तेः कविरित्यादिना सार्वज्ञादिमाहात्म्यं कस्मादुक्तमित्यत आह- **सज्ज्ञानादीति** ॥ **स्वेन रूपेणेति** ॥ तस्य स्वरूपस्य किं लक्षणमित्यर्थः ॥

अयं मन्त्रः कविरिति मन्त्रः । स पर्यगाच्छुक्रमिति मन्त्रः । शुक्रमित्यस्य प्रथमान्तत्वे नपुंसकलिङ्गत्वप्राप्त्या आत्मविशेषणत्वायोगेन तदर्थं पुल्लिङ्गत्वाय नपुंसकलिङ्गस्य व्यत्यासः कर्तव्यः स्यादित्यत आह- **लिङ्गेति** ॥ ननु नपुंसकलिङ्गत्वे हि व्यत्ययः क्रियते किं नाम पुल्लिङ्गस्य द्वितीयाविभक्तिरियम् । आत्मनो विशेषणत्वाय द्वितीयाविभक्तेः प्रथमान्तत्वेन विपरिणामः क्रियत इत्यत आह- **विपरिणामस्त्विति** ॥ अगतिकागतिः गतिशून्या गमनिका गत्यन्तराभावे इत्थं व्याख्या कार्या । स ज्ञानी शुक्रादिरूपं भगवन्तं पर्यगादिति अस्मद्रीत्या व्याख्याने युक्ते सति विपरिणामादिकमयुक्तमिति भावः॥ **विरुद्धमिति** ॥ आत्मनः सर्वाभेदे ब्रह्मादिसर्वमनःप्रेरकत्वरूपमनीषीत्यस्य सर्वपरिभावकत्वरूपपरिभूशब्दवाच्यतायाश्चायोगात् । ताभ्यां शब्दाभ्यां भेदस्यैव प्राप्तेरिति भावः । **न**

**चैवंविधमिति** ॥ स्वेन रूपेण किं लक्षणकमिति पृष्टे कविरिति मन्त्रस्य प्रवृत्तत्वात् । यन्निष्कृष्टं रूपं शुद्धं स्वरूपं तत् तेषां मायिनां मते एवंविधं सार्वज्ञादिविशिष्टं नैव भवतीत्यर्थः ॥ ८ ॥

**छलारी- शुक्रमित्यादिविशेषणानीति** ॥ राजादेः स्वप्राप्तभृत्यनिमित्त-भयादिसम्भावनया अपूर्णत्वेन कामाद्यप्राप्तिसम्भावनया च स्वभृत्यादेः कदाचिच्छोकमोहाद्यभावकारणं सम्भावितम् । विष्णोस्तु नित्यपूर्णकामत्वेन अपापविद्धत्वेन च प्राप्तभक्तनिमित्तभयाभावेन प्राप्तभक्तानां शोकमोहाद्यभावकारणं युक्तमेवेति भावः ॥ **उपलक्षणमिति** ॥ 'स्थित्यादेः' इति शेषः ॥ **एवाह्येवै-वाहीतिवदिति** ॥ तत्र 'विदा मघवन्' इति खण्डे विष्णुसर्वोत्तमत्वे अग्न्यादिसम्मतिं वक्तुं एवं ह्येवेति वक्तव्ये एवाहीति मलोपेन यथा निर्देशः । तथा कविरित्येवेत्यत्रापीति भावः । उभयत्रापि पृषोदरादित्वात् मलोप इति समाधानं ज्ञेयम् ॥ **परिभवतीति** ॥ 'परि स्यात्सर्वतो भवः' इति विश्वकोशोक्तेः परिशब्दः सर्वतो भवनार्थ इति भावेनाह- **सर्वं वशीकरोति इति** ॥ **भवतीति** ॥ भवति वर्तते 'भू सत्तायाम्' इति धातोरित्यर्थः ॥ **न च एतत्प्रथमान्तमात्मन एव विशेषणमिति** ॥ 'स पर्यगात्' इति तच्छब्देन परामृष्टात्मनः विशेषणं शुक्रमित्यादिपदजातमित्यर्थः ॥ **लिङ्गव्यत्ययादिति** ॥ शुक्रमित्यादेः स इत्यस्य विशेषणत्वे लिङ्गव्यत्यासाङ्गीकारप्रसङ्गादित्यर्थः ॥

'व्यत्ययो बहुलम्'(सि.कौ.३४३३) इत्युक्तेः लिङ्गविपरिणमोऽङ्गीक्रियत इत्यत आह- **विपरिणामस्त्विति** ॥ न विद्यते गतिः उपपत्तिः यस्याः सा अगतिका । 'शेषाद्विभाषा'(सि.कौ.८९१) इति कः । भावप्रधानो निर्देशः । अगतिकागतिकत्वं प्रकारान्तरेणानुपपन्नत्वं गतिः यस्येति विग्रहः । शुक्रमित्यादि-पदानां विभक्तिविपरिणामं विना वाक्यार्थानुपपत्तौ हि विपरिणामोऽङ्गीकार्यः । द्वितीयान्तत्वेनोक्तरीत्या वाक्यार्थोपपत्तौ स नाश्रयणीय इति भावः । स्वयम्भूशब्दस्य सर्वैक्यार्थकत्वे मनीषीपरिभूशब्दाभ्यां कथं विरोध इत्यत आह- **न चैवं विधमिति** ॥ मनीषीत्वपरिभावकत्वादिविशिष्टमात्मनो रूपं स्वयम्भूरित्यनेनोक्तम् । स्वव्यतिरेकेण किमपि नास्तीति भावेन सर्वाभिन्नत्वेनोक्तम् । निष्कृष्टं निर्गुणं रूपं तेषां मायावादिनां मते न हि भवतीत्यर्थः ॥ ८ ॥

कल्पना । अतः शोकाद्यभावः किं निमित्त इत्यर्थः । चूर्णमल्पम् । स्तोको स्वल्पः ॥ **कालेनेति** ॥ कालेन स्वल्पो न । किं नाम बहुकालीनेत्यर्थः । सूक्ष्मशरीरं लिङ्गदेहः । ननु स्यादेतदुपपादनम् । यदि स्नाविरशब्दवाच्यतया स्थूलशरीरं प्रसिद्धं स्यात् । तदेव कुत इत्यत आह- **स्नावेति** ॥ अदेहत्वोक्त्या प्राप्तशङ्कापरिहारायेत्युक्तम् । तं दर्शयति- **यद्यशरीर इत्यादिना** ॥ **कालभेदेनेति** ॥ यदा देहवत्वं तदा जगत्स्रष्टृत्वम्, यदा न जगत्स्रष्टृत्वं तदा अदेहवत्वमिति कालभेदेन व्यवस्थेत्यर्थः । उपलक्षणम् । 'स्थितिप्रलययोः' इति शेषः ॥ **स्वरूपेति** ॥ जगत्स्वरूपेत्यर्थः । ननु प्रवाहस्य एकप्रकारत्वेऽपि प्रवाहिणां जगतां वैचित्र्यं नास्तीति कथमागतमित्यत आह- **नियमेनेत्यादिना** ॥ पञ्चम्यन्तपदद्वयं 'याथातथ्यतः' इत्यस्य यथार्थेन वर्तमानानपीति । प्रवाहतो नित्यानपीत्यर्थः । याथातथ्यत इत्यस्य व्याख्यानं भाष्ये 'नित्यमेव प्रवाहतः' इति । अत्र एवशब्दोऽप्यर्थः । अत एव प्रवाहतो नित्यमपीति व्याख्यातम् । ननु 'कविः' इत्येवोक्त्या इतरनामवाच्यताभावप्राप्तेरित्यत आह- **एवाहीति** ॥ हे अग्ने मदुक्तं प्रमेयं एवाहि । एवैवाहि एवमेव हीत्येव तद्वाक्यार्थः । तद्वदत्रापि एवशब्दः एवमित्यर्थकः । ततश्च कविरित्येवं शब्द्यते इत्यर्थः । ननु यदि ज्ञानानन्दाद्यात्मकविग्रहोऽस्ति हरेः तर्हि सुखेन जगत्स्रष्टृत्वोपपत्तेः कविरित्यादिना सार्वज्ञादिमाहात्म्यं कस्मादुक्तमित्यत आह- **सज्ज्ञानादीति** ॥ **स्वेन रूपेणेति** ॥ तस्य स्वरूपस्य किं लक्षणमित्यर्थः ॥

अयं मन्त्रः कविरिति मन्त्रः । स पर्यगाच्छुक्रमिति मन्त्रः । शुक्रमित्यस्य प्रथमान्तत्वे नपुंसकलिङ्गत्वप्राप्त्या आत्मविशेषणत्वायोगेन तदर्थं पुल्लिङ्गत्वाय नपुंसकलिङ्गस्य व्यत्यासः कर्तव्यः स्यादित्यत आह- **लिङ्गेति** ॥ ननु नपुंसकलिङ्गत्वे हि व्यत्ययः क्रियते किं नाम पुल्लिङ्गस्य द्वितीयाविभक्तिरियम् । आत्मनो विशेषणत्वाय द्वितीयाविभक्तेः प्रथमान्तत्वेन विपरिणामः क्रियत इत्यत आह- **विपरिणामस्त्विति** ॥ अगतिकागतिः गतिशून्या गमनिका गत्यन्तराभावे इत्थं व्याख्या कार्या । स ज्ञानी शुक्रादिरूपं भगवन्तं पर्यगादिति अस्मद्रीत्या व्याख्याने युक्ते सति विपरिणामादिकमयुक्तमिति भावः॥ **विरुद्धमिति** ॥ आत्मनः सर्वाभेदे ब्रह्मादिसर्वमनःप्रेरकत्वरूपमनीषीत्यस्य सर्वपरिभावकत्वरूपपरिभूशब्दवाच्यतायाश्चायोगात् । ताभ्यां शब्दाभ्यां भेदस्यैव प्राप्तेरिति भावः । **न**

**चैवंविधमिति** ॥ स्वेन रूपेण किं लक्षणकमिति पृष्टे कविरिति मन्त्रस्य प्रवृत्तत्वात् । यन्निष्कृष्टं रूपं शुद्धं स्वरूपं तत् तेषां मायिनां मते एवंविधं सार्वज्ञादिविशिष्टं नैव भवतीत्यर्थः ॥ ८ ॥

**छलारी- शुक्रमित्यादिविशेषणानीति** ॥ राजादेः स्वप्राप्तभृत्यनिमित्त-भयादिसम्भावनया अपूर्णत्वेन कामाद्यप्राप्तिसम्भावनया च स्वभृत्यादेः कदाचिच्छोकमोहाद्यभावकारणं सम्भावितम् । विष्णोस्तु नित्यपूर्णकामत्वेन अपापविद्धत्वेन च प्राप्तभक्तनिमित्तभयाभावेन प्राप्तभक्तानां शोकमोहाद्यभावकारणं युक्तमेवेति भावः ॥ **उपलक्षणमिति** ॥ 'स्थित्यादेः' इति शेषः ॥ **एवाह्येवै-वाहीतिवदिति** ॥ तत्र 'विदा मघवन्' इति खण्डे विष्णुसर्वोत्तमत्वे अग्न्यादिसम्मतिं वक्तुं एवं ह्येवेति वक्तव्ये एवाहीति मलोपेन यथा निर्देशः । तथा कविरित्येवेत्यत्रापीति भावः । उभयत्रापि पृषोदरादित्वात् मलोप इति समाधानं ज्ञेयम् ॥ **परिभवतीति** ॥ 'परि स्यात्सर्वतो भवः' इति विश्वकोशोक्तेः परिशब्दः सर्वतो भवनार्थ इति भावेनाह- **सर्वं वशीकरोति इति** ॥ **भवतीति** ॥ भवति वर्तते 'भू सत्तायाम्' इति धातोरित्यर्थः ॥ **न च एतत्प्रथमान्तमात्मन एव विशेषणमिति** ॥ 'स पर्यगात्' इति तच्छब्देन परामृष्टात्मनः विशेषणं शुक्रमित्यादिपदजातमित्यर्थः ॥ **लिङ्गव्यत्ययादिति** ॥ शुक्रमित्यादेः स इत्यस्य विशेषणत्वे लिङ्गव्यत्यासाङ्गीकारप्रसङ्गादित्यर्थः ॥

'व्यत्ययो बहुलम्'(सि.कौ.३४३३) इत्युक्तेः लिङ्गविपरिणमोऽङ्गीक्रियत इत्यत आह- **विपरिणामस्त्विति** ॥ न विद्यते गतिः उपपत्तिः यस्याः सा अगतिका । 'शेषाद्विभाषा'(सि.कौ.८९१) इति कः । भावप्रधानो निर्देशः । अगतिकागतिकत्वं प्रकारान्तरेणानुपपन्नत्वं गतिः यस्येति विग्रहः । शुक्रमित्यादि-पदानां विभक्तिविपरिणामं विना वाक्यार्थानुपपत्तौ हि विपरिणामोऽङ्गीकार्यः । द्वितीयान्तत्वेनोक्तरीत्या वाक्यार्थोपपत्तौ स नाश्रयणीय इति भावः । स्वयम्भूशब्दस्य सर्वैक्यार्थकत्वे मनीषीपरिभूशब्दाभ्यां कथं विरोध इत्यत आह- **न चैवं विधमिति** ॥ मनीषीत्वपरिभावकत्वादिविशिष्टमात्मनो रूपं स्वयम्भूरित्यनेनोक्तम् । स्वव्यतिरेकेण किमपि नास्तीति भावेन सर्वाभिन्नत्वेनोक्तम् । निष्कृष्टं निर्गुणं रूपं तेषां मायावादिनां मते न हि भवतीत्यर्थः ॥ ८ ॥

**सत्य- कविरित्युत्तरार्ध इति** ॥ युक्तमिति द्रष्टव्यम् ॥ **'एवाह्येवैवाहि' इतिवत् इति** ॥ 'एवा हि एवं हि एवैवाहि एवमेवहि' इति कर्मनिर्णये व्याख्यातत्वात् । तद्वदत्रापि कविरिंत्येवेत्यस्य कविरित्येवमित्यर्थकत्वं द्रष्टव्यमित्यर्थः। अत्र यद्यपि 'एवैवाहि' इतिवदित्येतावदेवोदाहर्तव्यम् । तथापि स्थानविवेकार्थं पूर्णांशोदाहरणं कृतम् ॥ **जगत्ससर्जेति योजनेति** ॥ यतस्तस्मादिति पदद्वयाध्याहारेण योजना कर्तव्येत्यर्थः ॥ **लिङ्गव्यत्यासादिति** ॥ शुक्रमित्यादेर्नपुंसकलिङ्गत्वात् स इत्यस्य पुल्लिङ्गत्वात् विशेषणविशेष्यभावोऽनुपपन्न इति भावः । ननु शुक्रमित्यादिकं शुक्र इत्यादिना पुल्लिङ्गत्वेन विपरिणम्यते । अतो न लिङ्गव्यत्यास इत्यत आह- **विपरिणामस्त्विति** ॥ आत्मनो निष्कृष्टचैतन्यस्य जडाजडात्मकत्वं परैः नाङ्गीकृतं चेत्याह- **न चैवंविधमात्मन इति** ॥ ८॥

**नृसिंह- नित्यपूर्णत इति** ॥ नित्यं पूर्णत्वत इति प्रतीतेराह- **नित्यत्वेति** ॥ स चाव्रणशब्दारूढो न भवतीति भावः । नन्वस्मिन् पक्षे कथं पदारूढतेत्यत आह- **'व्रण सञ्चूर्णने' इति** ॥ यदि पावनत्वं नाम पावित्र्यम्, तच्च प्रकृते शुद्धपदप्रवृत्तिनिमित्तं स्यात् तर्हि 'अपापविद्धम्' इति पुनरुक्तं भवेत् । सकलपापासंश्लेषो हि पावित्र्यं नामेत्यत आह- **पावनत्वादिति** ॥ ननु कायशब्दस्य उभयसाधारण्यं तर्हि 'अकायम्' इत्यत्रैव स्थूलदेहाभावोऽर्थः अत्र लिङ्गवर्जनमिति किं न स्यादित्यत आह- **स्नावोपलक्षितेति** ॥ परब्रह्मप्राप्तेः संसारिसाधारण्यादाह- **सारूप्यादिलक्षणामिति** ॥ **न च वाच्यमिति** ॥ याथातथ्यत इत्येतद्व्यावर्त्यकथनम् ॥ **न चादेहत्वस्येति** ॥ शाश्वतीभ्यः समाभ्यः इत्यस्येति बोध्यम् ॥ **ससृज इत्युपलक्षणमिति** ॥ धारणपोषणादिकञ्च ग्राह्यम् । अत एव भाष्याद्यपद्ये 'जगद्धात्रे' इत्यभिहितमिति भावः । अथवा ससृजे इत्युपलक्षणं सृजति स्रक्ष्यतीत्यपि ग्राह्यम् । अन्यथा अनाद्यनन्तकालेष्वित्युक्त्ययोगादिति भावः । ननु प्रवाहैकप्रकारता कथम् ? अनाद्यनन्तकालीनप्रवाहस्य एकत्वात् । अनेकत्वे हि एकप्रकारतोक्तिः सम्भवतीत्यत आह- **नियमेनेति** ॥ ननु 'सार्वज्ञात् कविरित्येव शब्द्यते' इत्ययुक्तम् । सूरिज्ञान्यादिशब्दवाच्यत्वादित्यतो नायमेवशब्दोऽवधारणार्थः । किन्तु एवं शब्दार्थ इत्येतत्प्रयोगप्रदर्शनपूर्वकमाह- **'एवाह्येवैवाहि' इति** ॥ ननु यदि प्रथमान्तत्वे

लिङ्गव्यत्ययप्रसङ्गः तर्हि प्रथमार्थे द्वितीया स्यादित्यत आह- **विपरिणामस्त्विति** ॥ **इति च विरुद्धमिति** ॥ मनसामीशितृत्वस्य सर्वपरिभावकत्वस्येतरसापेक्षत्वात् स्वयमेव भवतीत्यन्यनिरासो न युक्त इति भावः ॥ **नचैवंविधमिति** ॥ सर्वजगत्स्रष्टृत्वादीनामौपाधिकरूपत्वादिति भावः ॥ ८ ॥

**रघु**- उत्तरभाष्यं सङ्गमयितुं 'स पर्यगात्' इति मन्त्रप्रतिपाद्यं तावदाह- **ज्ञानिन इत्यादिना** ॥ **तत्र चेति** ॥ विष्णुप्राप्तौ निमित्तत्वेनोक्तायामित्यर्थः । निमित्तविशेषाभावेऽपि परमेश्वरं प्राप्तस्य शोकाद्यभावे राजादीन् प्राप्तस्यापि शोकाद्यभावः स्यात् । ततश्च द्वितीयानुमाने अप्रयोजकत्वमित्याशयेनोक्तम्- **राजादीनिवेति** ॥ **इत्यत इति** ॥ इति यतः शङ्का अतस्तन्निरासायेत्यर्थः ॥ **तत्रादेहत्वोक्त्येति** ॥ शुक्रमित्यादिविशेषणेषु 'अकायमस्नाविरम्' इति विशेषणाभ्यामदेहत्वोक्त्येत्यर्थः ॥ **प्राप्तशङ्केति** ॥ यद्यशरीरो विष्णुरित्यादिवक्ष्यमाणरीत्या प्राप्तशङ्केत्यर्थः ॥ **अप्रतीत्यादीति** ॥ आदिपदेन परोक्तान्यथाप्रतीतेरकायास्नाविरशब्दयोः पौनरुक्त्यस्य च सङ्ग्रहः । ननु बृहद्भाष्ये 'शुक्रं जीवमादाय' इत्युक्त्वा 'शोकेन रत्या युक्तत्वात् शुक्रो जीव उदाहृतः' इत्युपन्यस्ते प्रमाणे शोकवत्तायाः शुक्रशब्दार्थत्वप्रतीतेः कथं शोकराहित्यं शुक्रशब्दार्थ इत्यतः शुक्रशब्दस्य शोकराहित्ये योगं दर्शयति- **शुचमिति** ॥ अनेन शुच् शब्दे कर्मण्युपपदे 'रह त्यागे' इत्यस्माद्बाहुलके डप्रत्यये टिलोपे उपपदान्त्यस्य कुत्वे शुक्रमिति सिद्ध्यतीत्युक्तं भवति । एतेन शुक्रं रोचिष्मत् दीप्तिमदित्यपव्याख्यानमपहसितं वेदितव्यम् । ननु पूर्णशब्दोक्तधर्मिणः प्रवृत्तिनिमित्तत्वाभावात् पूर्णत इत्ययुक्तम् । प्रकरणवशात् भावप्राधान्येऽपि नित्यशब्दो व्यर्थ इत्यतः प्रवृत्तिनिमित्तद्वयं भावप्राधान्यं पञ्चम्यन्तात्तसिं च मनसि निधाय व्याचष्टे- **नित्यत्वेति** ॥ अव्रणशब्देनोक्तार्थद्वयलाभप्रकारं दर्शयति- **व्रण सञ्चूर्णन इत्यत इति** ॥ स्तोकोऽल्पः । अनेनाव्रणमक्षतमित्यपव्याख्यानं निरस्तं भवति । पावनत्वादित्यस्य पवित्रत्वादिति व्याख्याने अपापत्वातिरिक्तपवित्रत्वाभावात् अपापविद्धमित्यनेन पुनरुक्तिः स्यादित्यत आह- **पावित्र्यहेतुत्वादिति** ॥ अनेन शुद्धं निर्मलमिति परोक्तं निरस्तं भवति ॥ **साधारण इति** ॥ तथा च 'अकायं देहवर्जनात्' इति व्याख्येयम् । न तु सामान्यशब्दस्य विशेषे लक्षणामङ्गीकृत्य

लिङ्गवर्जनादिति । लक्षणाया मुख्यार्थानुपपत्तिपूर्वकत्वादत्र च तदभावादिति भावः । अस्त्यत्रापि मुख्यार्थानुपपत्तिरित्याह- **तथापीति** ॥ ननु-

............ अकायं स्थूलवर्जनात् ।
लिङ्गदेहस्य राहित्यादस्नाविरमुदाहृतम् ॥

इत्येव प्रमाणे किं नोक्तम् । पुनरुक्तिपरिहारस्यैवमपि सम्भवादित्यत आह- **स्नावोपलक्षितेति** ॥ मांसमज्जादिसप्तधातुविकारस्य स्थूलदेहस्य स्नाविरमात्रत्वानुपपत्तेः स्नावोपलक्षितेत्युक्तम् । स्थूलशरीरमेव हि प्रसिद्धमिति । न तु लिङ्गशरीरं अतो न वैपरीत्येन वक्तुं शक्यमिति भावः ॥ अनेन 'स्नावाः सिराः यस्मिन् विद्यन्ते इति स्नाविरं न स्नाविरं अस्नाविरम् । अव्रणमस्नाविरमित्याभ्यां स्थूलशरीरप्रतिषेधः' इत्यपव्याख्यानं निराकृतं भवति । ननु यदुक्तं राजादीनिव परमेश्वरं प्राप्तस्यापि शोकाद्यभावः किं निमित्त इत्यतः शुक्रमित्यादिविशेषणानीति । तत्र किं सर्वेषां विशेषणानां परमेश्वरं प्राप्तस्य शोकाद्यभावोपपादकत्वमभिप्रेतमुतैकस्य । नाद्यः । अप्रयोजकत्वेन तदभावत् । न द्वितीयः। अमुकस्येति निर्धारणोपायाभावात् । विशेषणान्तरवैयर्थ्यप्रसङ्गाच्च इत्यतः शुक्रमित्यस्यैवोक्तसाध्योपपादकत्वम् । शोकादिशून्यपरमेश्वरसारूप्यादिमतः शोकाद्यभावनियमात् । इतरेषां तु विशेषणानां साक्षात्परम्परया शुक्रत्वोपपादकत्वान्न वैयर्थ्यमित्याशयेन हेतुहेतुमद्भावेन विशेषणानि योजयति- **यतो हीति** ॥ **एवंभूतं चेति** ॥ उक्तप्रणाड्या शोकादिशून्यमित्यर्थः । अनेन राजादिवैषम्यमुक्तं भवति । 'स पर्यगात्' इत्यस्य हेतोः पूर्वमन्त्रोक्तशोकाद्यभावेन साध्येन अन्वयमाह- **अत इति** ॥ मन्त्रे यत्तच्छब्दावध्याहार्याविति ज्ञापनाय अत इत्युक्तम् ॥

इदमुक्तं भवति । विमतो ज्ञानी शोकादिरहितः शोकादिरहितब्रह्मप्राप्तिमत्वात् यो यद्रहितयत्प्राप्तिमान् स तद्रहितः यथा दारिद्र्यरहितराजादिप्राप्तिमान् दारिद्र्यरहितः । सारूप्यादिलक्षणप्राप्तिविशेषस्य विवक्षितत्वान्न सुप्ते व्यभिचारः । एतदर्थमेव सारूप्यादिलक्षणामित्युक्तम् । न च सुप्ते साध्यस्यापि सत्वान्न व्यभिचारप्रसक्तिरिति वाच्यम् । तस्यापि अन्तःकरणरूपेण शोकादिमत्त्वात् । न च शोकादिरहितेति व्यर्थम् । विपक्षे व्याघातसूचनार्थत्वात् । शोकरहितब्रह्मसारूप्यं गतः स्वयं च शोकादिमानित्यस्य व्याहतत्वात् । बहिरेव अप्रयोजकत्वपरिहारे

ब्रह्मप्राप्तिमत्त्वादित्येव हेतुरस्तु । न च ब्रह्मणः शोकादिशून्यत्वासिद्धिः । ब्रह्म शोकादिशून्यं स्थूलसूक्ष्मशरीरशून्यत्वात् । व्यतिरेकेण देवदत्तादिवत् । न च अप्रयोजकता शोकस्य उक्तशारीरद्वयनिमित्तकत्वेन अकारणकर्योत्पत्तिप्रसङ्गात् । एतदेवाभिप्रेत्योक्तं- **देहनिमित्तेति** ॥ ब्रह्मणोऽपि स्वरूपदेहवत्त्वेन असिद्धि-वारणाय स्थूलसूक्ष्मेत्युक्तम् । ननु देहद्वयघटितः एक एव हेतुः उत हेतुद्वयम् । नाद्यः । स्थूलपदवैयर्थ्यात्, तमोगतेषु व्यभिचारापाताच्च । न द्वितीयः । स्थूलदेहशून्यत्वस्य तमोगतेषु प्रलयकालीनेषु च व्यभिचरितत्वात् । सूक्ष्मदेहशून्यत्वस्य तमोगतेषु अनैकान्त्यात् । अत एव जडदेहशून्यत्वे तात्पर्यमित्यपि निरस्तम् । प्रलयकालीने व्यभिचारनिवारणेऽपि तमोगते तदनिवारणात् । तस्मात् कथमेतदिति चेन्मैवम् । शोकादिनिमित्तदेहशून्यत्वस्य हेतुत्वे तात्पर्यात् । तमोगतानां स्वरूपदेहस्य विशेषबलेन स्वरूपशोकादिव्यक्ति-निमित्ततायाः सिद्धान्ते अङ्गीकृतत्वेन तत्र हेतोरभावेन व्यभिचारशङ्काऽनवकाशात् । शोकादिनिमित्तलिङ्गदेहवति प्रलयकालीनेऽपि न व्यभिचारः । न चैवमपि देहपदं व्यर्थम् । असिद्धिपरिहाराय पक्षे हेतूपपादनार्थत्वात् । यद्वा आनन्दाद्यात्मक-देहातिरिक्तदेहशून्यत्वं हेतुरिति न कश्चिद्दोषः। न च स्थूलसूक्ष्मदेहशून्यत्वस्य असिद्धिः । ब्रह्म स्थूलसूक्ष्मदेहशून्यं पापविधुरत्वात् व्यतिरेकेण अस्मदादिवत् इत्यनुमानेन तत्सिद्धिसम्भवात्। अत्रापि विपक्षे अकारणकार्योत्पत्तिप्रसङ्ग एव बाधको ज्ञातव्यः । अत एव पापमूलेति शरीरविशेषणम् । न च साध्ये स्थूलपदं व्यर्थमिति वाच्यम् । गुणादिकं गुण्यादिना भिन्नाभिन्नमित्यादाविव उद्देश्यसिद्ध्यर्थत्वसम्भवात् । शोकनिमित्तदेहशून्यत्वस्य साध्यत्वे तात्पर्यान्नोक्त-शङ्कावकाश इति वा । न चात्रापि हेतोरसिद्धिः । ब्रह्म पापविद्धं न भवति जगत्पावित्र्यहेतुत्वादित्यनुमानेन तत्सिद्धेः । अत्र च विपक्षे हेतूच्छेद एव बाधकः । न हि स्वयं पापविद्धस्य जगत्पावित्र्यहेतुत्वं सम्भावनार्हमिति ॥

ननु शुक्रमित्यादिविशेषणानीति पूर्वग्रन्थे पूर्वार्धगतानां षण्णां विशेषणानां शोकाद्यभावोपपादकत्वं प्रतिज्ञाय 'यतो हि' इति तदुपपादनपरेऽत्र ग्रन्थे 'अव्रणम्' इत्यस्य हेतुत्वानुपपादनाद्विरोधः । पूर्वमादिशब्देन तद्व्यतिरिक्तविशेषणविवक्षा-यामव्रणमित्यस्य मन्त्रे वैयर्थ्यापातादिति चेन्मैवम् । शुद्धत्वादीनामिव न अव्रण-

त्वस्य परम्परया शोकादिशून्यत्वोपपादकत्वमपि तु अव्रणत्वात् शोकादिशून्यम् । नहि स्वरूपतः देहतश्च अनादिनित्यमानन्दादिगुणपूर्णं ब्रह्म शोकादिमद्भवितुमर्हति विरोधादिति साक्षादेव तदुपपादकत्वमिति ज्ञापनायात्र अग्रहणोपपत्तेः इदानीं कविरित्याद्युत्तरार्धव्याख्यानरूपं 'एवम्भूतोऽपि' इति भाष्यं योजयितुं यदुक्तं प्राक् तत्र अदेहत्वोक्त्या प्राप्तशङ्कापरिहाराय कविरित्युत्तरार्ध इति तां शङ्कां तावद्दर्शयति- **यद्यशरीर इत्यादिना** ॥ पूर्वार्धे अकायास्नाविरशब्दाभ्याम-शरीरत्वस्य उक्तत्वादिति भावः । विष्णुः न अशरीरः स्रष्टृत्वात् घटस्रष्टृवदिति विवक्षितानुमाने विपक्षे हेतूच्छेदरूपं बाधकमुक्तं- **यद्यशरीर इति** ॥ यद्वा यदि विष्णुः अशरीरः स्यात्तदा स्रष्टा न स्यादिति तर्क एव अनेनोक्तः । तत्र कुलालादौ व्यतिरेकव्याप्तिं सप्रमाणकमाह- **घटादीति** ॥ विवर्तवादः परिणामवादश्चेति द्विविधो हि मायावादः । तत्र आद्यमतानुसारेण दृष्टान्तदार्ष्टान्तिकयोः वैषम्य-माशङ्क्य निषेधति- **न चेति** ॥ इयं च शङ्का मन्त्रे 'याथातथ्यतः' इत्येतद्व्यावर्त्यतया कथितेति द्रष्टव्यम् ॥ **आरोपितमेवेति** ॥ न तु कुलालादिना घटादिकमिव परमात्मना जगत्सृज्यमित्येवशब्दार्थः ॥

अधिष्ठानस्यापि आरोपार्थं शरीरसापेक्षत्वे शुक्तिकाया अपि तत्स्यादित्याशयेन दृष्टान्तोपादानमिति द्रष्टव्यम् । कुतो न वाच्यमित्यतः सन् घटः अहं दुःखी इत्यादिप्रत्यक्षेण, प्रमाणदृष्टत्वाद्यनुमानेन, 'विश्वं सत्यम्'(ऋ.सं.२.२४.१२) इत्याद्यागमेन च जगतः सत्यत्वेन प्रमितत्वादित्याह- **तत्सत्यत्वेति** ॥ अनेन याथातथ्यत इत्येतद्व्याख्यातं भवति । ननु तर्हि शुक्तिरजतादिसत्तापि प्रत्यक्षेण सिद्ध्येदविशेषादित्यतो बाधकभावाभावाभ्यां विशेषादित्याशयेनोक्तं- **बाधा-भावेनेति** ॥ ननु न सृष्ट्यादिसमये परमेश्वरस्यादेहत्वम् । येन सृष्ट्याद्यनुपपत्तिः । किन्तु समयान्तरे । अतो न अदेहत्वोक्तिविरोधोऽपीत्याशङ्क्य निषेधति- **न चेति** ॥ इयं च शङ्का मन्त्रे 'शश्वतीभ्यः समाभ्यः' इत्येतद्व्यावर्त्यतयोक्तेति ज्ञातव्यम् । कुतो नेत्यतः प्रवृत्तस्य 'शाश्वतीभ्यः समाभ्यः' इत्यस्य तात्पर्यमाह- **जगदिति** ॥ 'अनाद्यनन्तं जगदेतदीदृक् प्रवर्तते नात्र विचार्यमस्ति' इत्यादिप्रमाणेन प्रमितत्वादित्यर्थः । अत्र प्रमितत्वादित्युक्त्या पूर्वत्र निश्चयादित्युक्त्या च मन्त्रे विशेषणद्वयस्य असिद्धिः परिहृता । अत एवैतत्पदद्वयव्याख्यानरूपे 'स सत्यं

जगदेतादृक्' इतिप्रमाणे एतादृगित्यनेन सत्यत्वानाद्यनन्तत्वयोः प्रमितत्वमुक्तमिति ज्ञातव्यम् । एवम्भूतोऽपीत्येतत् शुक्रत्वादिविशिष्टोऽपीति प्रतीतिनिरासाय 'अकायमस्नाविरम्' इति पदद्वयोक्ताशरीरत्वपरामर्शकतया अनूद्य व्याकुर्वन्नशरीरत्वस्य कवित्वेन विरोधस्यानाशङ्कनादेवम्भूतोऽपि कविरिति शब्दित इत्यसङ्गतमित्यतः ससृज इत्यनेन सम्बन्धान्नासङ्गतिरिति भावेन व्यवहितानां पदानामन्वयं च दर्शयति- **एवम्भूतोऽशरीरोऽपीत्यादि** ॥

एतादृगित्यस्य वैयर्थ्यमाशङ्क्य प्रमाणसूचकत्वात् न तदित्याशयेन व्याचष्टे- **सत्यत्वादिनेति** ॥ आदिपदेन प्रवाहतो नित्यत्वस्य ग्रहणम् । अत्र नित्यमेवेत्येवशब्दस्य एतादृगेवेति सम्बन्धोऽभिप्रेतः । न तु यथाश्रुतः । सत्यमित्यनेन विरोधापातात् । अत एव एवम्भूतोऽपीत्यपिशब्दस्यावृत्तिमाश्रित्य नित्यमपीति पूर्वमुक्तम् । अन्यथा नित्यमेवेति अवक्ष्यत् । तथा च यथा लोके अयं घटः इत्युक्त्वा पुनः घटो भवत्येव इत्युक्त्या प्रतिमत्वं प्रतीयते । तथा इहापि जगत्सत्यं प्रवाहतो नित्यमपि इत्युक्त्वा पुनः एतादृगेव इत्युक्त्या प्रमितत्वं लभ्यत इति भावः । परमेश्वरस्य अदेहत्वे प्राप्तशङ्कायाः तत्परिहारस्य च सृष्ट्यादि-सर्वविषयत्वात् ससृजे इति सृष्टिमात्रोक्तिरयुक्तेत्यत आह- **ससृज इत्युपलक्षणमिति** ॥ स्थित्यादीनामुपलक्षणमित्यर्थः । अनेन मन्त्रे व्यदधादित्युप-लक्षणमित्युक्तं भवति । ननु अनादीत्यादिना पूर्वोत्तरजगतां वैचित्र्याभावोक्तिः न प्रकृतसङ्गता । अदेहत्वस्य जगत्सृष्ट्यादेश्च कालभेदेन व्यवस्थायाः जगत्प्रवाहे नित्यत्वोक्तिमात्रेण परिहारसम्भवादित्यत उक्तशङ्कापरिहारानुपयोगेऽपि वस्तुस्थिति कथनरूपत्वान्न दोष इत्याह- **प्रवाहत इति** ॥

ननु जगतः अनेकप्रकारत्वशङ्कायां प्रवाहस्यैकप्रकारत्वकथनमसङ्गतमित्यतः प्रवाहशब्दस्य प्रवाहिषु लक्षणामभिप्रेत्याह- **नियमेनेति** ॥ नियमेनेत्यस्य उत्तरशेषत्वभ्रमनिरासाय अत्र सम्बन्धोः दर्शितः। ननु उक्तशङ्कापरिहारस्य नियमेन 'प्रवाहैकप्रकारतः' इत्येतावतैव सिद्धेः 'अनाद्यनन्तकालेषु' इति व्यर्थमित्यतो मन्त्रगतपञ्चम्याः सप्तमीत्वेन विपरिणामज्ञापनार्थत्वान्न तदित्याशयेनाह- **तदनेनेति** ॥ तच्च तदिदं च तदिदं तेन । अनाद्यनन्तकालेषु इत्यनेनेत्यर्थः । इतीत्यतः परं पञ्चम्यन्तमिति शेषः । पञ्चम्याः सप्तम्यर्थत्वेन लब्धं 'याथातथ्यतः'

इत्यादिमन्त्रवाक्यार्थमन्वयप्रदर्शनपूर्वकमाह- **अनाद्यनन्तेति** ॥ 'याथातथ्यतः' इत्यस्य 'याथार्थ्येन' इति व्याख्यानेन तृतीयान्तात्तसिरित्युक्तं भवति । 'वर्तमानानपि' इति मन्त्रे अध्याहारः ।। अशरीरस्यापि आरोपाधिष्ठानत्वेन स्रष्टृत्वमुपपद्यत इत्यन्यथासिद्धिशङ्कायाः याथार्थ्येन वर्तमानानित्यनेन निरासादशरीरत्वयथार्थस्रष्टृत्वयोः विरोधस्फोरणायापीत्युक्तम् । एतस्य अर्थान् महदादीन् व्यदधात् उत्पादयामास इति मन्त्रेणान्वयः । अनेन 'याथातथ्यतः यथातथा भावो याथातथ्यम् । यथाभूतकर्मफलसाधनतः अर्थान् कर्तव्यपदार्थान् व्यदधात् विहितवान्, यथानुरूपं व्यभजदित्यर्थः। शाश्वतीभ्यः नित्याभ्यः । समाभ्यः संवत्सरेभ्यः । प्रजापतिभ्यः' इत्यपव्याख्यानमपहस्तितं वेदितव्यम् । ननु 'शुक्रम्' इत्यादिशब्दवाच्यत्वस्यापि अयुक्तत्वेन 'कविरित्येव शब्द्यते' इत्यवधारणार्थकैवशब्दानुपपत्तिरित्यतो नायमेवशब्दः किन्तु बिन्दुलोपेन एवंशब्दः । एवशब्दत्वेऽपि वा अव्ययानामनेकार्थत्वेन एवंशब्दार्थभूतप्रकारार्थ एव नावधारणार्थकोऽतो नोक्तदेष इत्याशयेन अनूद्य व्याचष्टे- **कविरित्येव कविरित्येवमिति** ॥ इदञ्च व्याख्यानं भाष्यकृत्सम्मतमित्याशयेनोक्तम्- **एवाह्येवैवाहीतिवदिति** ॥ भगवत्पादैः कर्मनिर्णये 'विदा मघवन्' इति खण्डव्याख्यानावसरे एतद्वाक्यस्य 'एवं हि एवमेव हि' इति व्याख्यातत्वेन तद्वदिहापि व्याख्यायत इत्यर्थः । कर्मनिर्णये 'एवा हि' इत्यस्य 'एवं हि' इति व्याख्यानम् । 'एवैवा हि' इत्यस्य 'एवमेव हि' इति व्याख्यानम् । दैर्घ्यं तु सांहितमिति ज्ञातव्यम् । यद्यपि 'एवा हि' इतिवत् इत्येतावतैव प्रकृतनिर्वाहात्तावदेवोदाहर्तव्यम् । तथापि स्पष्टत्वार्थमधिकोदाहरणं कृतमित्यवधेयम् । नचात्र इतिशब्देनैव प्रकारसमर्पणादेवंशब्दो व्यर्थ इति वाच्यम् । अथवा इत्यादिवदित्येवमिति निपातसमुदायत्वाङ्गीकारेण तदनवकाशात् । नच सार्वज्ञादेव कविरिति शब्द्यत इति भिन्नक्रमेणैव शब्दसम्बन्धसम्भवात्किमेवं व्याख्यानेनेति वाच्यम् । परेणापि 'कविः सर्वदृक्' इति व्याख्याततत्त्वेन अपव्याख्याननिरासादिप्रयोजनाभावेन तथा सम्बन्धस्य व्यर्थत्वादित्याशयात् । तात्पर्यार्थपरं भाष्यमित्यभिप्रेत्य अक्षरार्थं दर्शयति- **परिभवतीति** ॥ स्वयम्भूःशब्देन सदा अनन्याश्रयत्वलाभप्रकारं दर्शयति- **स्वयमेवेति** ॥ ननु स्वयम्भूःशब्दवाच्यत्वे निमित्तान्तरानुक्त्या समुच्चेतव्याभावात् अनन्याश्रयत्वाच्चेति चशब्दानुपपत्तिः ।

'प्रकृत्या मनसोऽपि च' इत्यत्रापिशब्देनैव ब्रह्मादिमनःसमुच्चयसिद्धेश्चशब्दो व्यर्थ इत्यत आह- **चशब्दौ विशेषणसमुच्चयार्थाविति** ॥ स्वयम्भूश्च मनीषी चेति विशेषणसमुच्चायकावेव चशब्दौ नतु यथाश्रुतसम्बन्धेन निमित्तसर्वमनःसमुच्चायकौ येनोक्तदोषः स्यादिति भावः । ननु परमेश्वरस्य सदेहत्वे अकायत्वोक्तिविरोध इत्यतो व्यवस्थया तं परिहरति- **जडशरीरेति** ॥ देहवत्त्वस्य स्रष्टृत्वे हेतुत्वलाभाय यत्तच्छब्दावध्याहृत्य योजयति- **यत एवम्भूत इति** ॥ ज्ञानाद्यात्मकदेहवा-नित्यर्थः । ननु विग्रहवत्त्वाङ्गीकारे तत एव सर्जनाद्युपपत्तेः कविरित्यादिना सार्वज्ञादिवर्णनं व्यर्थमित्यत आह- **सज्ज्ञानाद्यात्मकेति** ॥ अत्र सच्छब्देन पारतन्त्र्यादिदोषराहित्यस्य विवक्षितत्वात् अन्येषामविद्यमानमिति घटते। व्यदधात् निर्मितवान् निर्माणशक्तिप्रदर्शनार्थं कविरित्यादि इति विष्णुतत्त्वनिर्णयटीकायामपि कवित्वादीनां सज्ज्ञानात्मकविग्रहत्वोपपादकत्वेनैव निर्माणशक्तिप्रदर्शकत्वं विवक्षितं न तु साक्षात् । अतो न विरोधः ॥

यद्वा विग्रहवतोऽपि परमेश्वरस्य कुलालादिवन्न अनन्तजगन्निर्मातृत्वं युक्तम् । तदुपयुक्तसार्वज्ञाभावादिति शङ्कापरिहाराय कवित्वादीनां निर्माणशक्तिप्रदर्शकत्वं तत्रोक्तम् । अत्र तु प्रकारान्तरेण तेषामुपयोग उक्त इति न कोऽपि विरोध इति ज्ञातव्यम् । 'स विष्णुं पर्यगाद्यतः' इति प्रमाणशेषेण उत्तरमन्त्रस्य सङ्गतिसूचनपूर्वकं 'स पर्यगात्' इत्येतज्ज्ञानिविषयतया व्याख्यातम् । तेन परोक्तसङ्गतिव्याख्यानयोः अयुक्तत्वं सूचितमिति भावेन ससङ्गतिकं तद्व्याख्यानं दूषयितुमनुवदति- **अपरे त्विति** ॥ **अयं मन्त्र इति** ॥ स पर्यगादित्यादिको मन्त्र इत्यर्थः ॥ **एतदपीति** ॥ न केवलं शुक्रमित्यादिकमित्यपेरर्थः । तदेव व्याख्यानं दर्शयति- **स आत्मेति** ॥ शुक्रमित्यादिकमस्मद्रीत्या द्वितीयान्त-मभ्युपेयते । आद्यं निराचष्टे- **शुक्रमित्यादेरिति** ॥ **अन्वयाभावेति** ॥ विशेष्यभूतात्मवाची स इति प्रथमान्तेन अन्वयाभावप्रसङ्गादित्यर्थः । द्वितीयमाशङ्क्य निराकरोति- **न चैतदिति** ॥ कुतो नेत्यत आह- **लिङ्गेति** ॥ शुक्रमित्यादेः विशेषणस्य प्रथमान्तत्वे नपुंसकत्वावश्यम्भावात् स इति विशेष्यस्य च पुल्लिङ्गत्वात् लिङ्गव्यत्ययेन विशेषणविशेष्यभावानुपपत्तिरित्यर्थः । नच घटो द्रव्यम् इत्यादिवदुपपत्तिः । तत्र नियतलिङ्गत्वात् अत्र शुक्रमित्यादीनामनियत-लिङ्गत्वात् ।

अनियतलिङ्गानां विशेषणानां विशेष्यनिघ्नत्वावश्यम्भावादिति भावः । ननु न लिङ्गव्यत्ययः । शुक्रमित्यादीनामपि पुल्लिङ्गत्वेन विपरिणामाङ्गीकारात् । यथोक्तं परेण शुक्रमित्यादीनि वचांसि पुल्लिङ्गत्वेन विपरिणेयानि । 'स पर्यगात्' इत्युपक्रम्य 'कविर्मनीषी' इत्यादिना पुल्लिङ्गत्वेन उपसंहारादिति' इत्यत आह- **विपरिणामस्त्विति** ॥ अगतिकागतिः गत्यन्तररहिता गमनिका इत्यर्थः । अस्मदुक्तरीत्या 'शुक्रम्' इत्यादिद्वितीयान्तानां 'स पर्यगात्' इत्युक्तप्राप्तिकर्मत्वेन 'कविः' इत्यादिप्रथमान्तानां 'व्यदधात्' इत्युक्तसृष्ट्यादिकर्तृत्वेन यथाश्रुतान्वय-सम्भवे विपरिणामाङ्गीकारोऽनुचित इति भावः । स्वयम्भूरित्यस्य अपव्याख्यानं निराकरोति- **स्वयमेवेति** ॥ **विरुद्धमिति** ॥ मनीषी मनस ईशिता । परिभूः सर्वेषामुपर्युपरि भवतीति परव्याख्यानानुसारेण भाष्यकृद्व्याख्यानानुसारेण वा सर्वभेदस्यैव प्राप्त्या सर्वात्मकत्वं विरुद्धमित्यर्थः । एवं 'स पर्यगात्' इत्येतद्व्याख्यानं निराकृत्य मन्त्रस्य परोक्तां सङ्गतिमपि निराकरोति- **न चेति** ॥ नापीत्यर्थः ॥ **एवंविधमिति** ॥ कविरित्याद्युक्तसार्वज्ञादिविशिष्टमित्यर्थः । तेषां निर्विशेषत्ववादिनामिति हेतुगर्भं विशेषणम् । ततश्च अस्य मन्त्रस्य निष्कृष्टात्मप्रतिपादकत्वाभावात् योऽयमतीतैः मन्त्रैः इत्युक्तसङ्गत्यनुपपत्तिरिति भावः । यद्वा स्वयमेव सर्वं भवतीति व्याख्याने दोषान्तरमाह- **न चेति** ॥ एवंविधं चेतनाचेतनसर्वजगदात्मकम् । तथाच निष्कृष्टात्मस्वरूपप्रतिपादनाय प्रवृत्तेऽत्र मन्त्रेऽतथाभूतसर्वात्मकत्वप्रतिपादनमसङ्गतमिति भावः ॥

ततश्चायं मन्त्रार्थः । पूर्वमन्त्रे ज्ञानिनः शोकाद्यभाव उक्तः । तत्र हेत्वाकाङ्क्षायामाह- **स पर्यगादिति** ॥ यतो ज्ञानी परमेश्वरप्रसादात् विष्णुं पर्यगात् सम्यक् प्राप्नोत्येव परमेश्वरसारूप्यलक्षणां गतिं गतो भवतीति यावत् । अतः शोकाद्यभावो युक्तः । परमेश्वरसारूप्येऽपि कुतस्तदभावः । राजादिसारूप्यवतः तदभावादित्यत उक्तम्- **शुक्रमिति** ॥ शुचं शोकं रहति त्यजतीति शुक्रम् । शोकादिरहितब्रह्मसारूप्यं गतस्य शोकाद्यभावो युक्त इति भावः । ब्रह्मणः शोकादिराहित्यमेव कुतः? यतोऽकायं शोकहेतुलिङ्गदेहवर्जितम् । तथा अस्नाविरं स्नावोपलक्षितसप्तधातुमयस्थूलशरीरवर्जितम् । अकायत्वादिकमपि कुतः? यतोऽपापविद्धं देहारम्भकपापशून्यम् । तदपि कुतः? यतः शुद्धं जगत्पावित्र्य-

निमित्तम् । न हि एवम्भूते पापं सम्भावनार्हम् । किञ्च यतोऽव्रणम् । नित्यत्वे सत्यानन्दादिगुणपूर्णम् । अतोऽपि शुक्रम् । ननु ब्रह्मणो देहशून्यत्वे श्रुत्यादिसिद्धसर्वजगत्सर्जनादिविरोधः । तस्य देहसापेक्षतायाः घटादौ दृष्टत्वादित्यतः कविरित्याद्युत्तरार्धः । तत्रादौ सज्ज्ञानानन्ददेहवानित्युपस्कर्तव्यम् । यतः सज्ज्ञानानन्ददेहवानतः अर्थान् महदादीन् व्यदधात् उत्पादयामास । स्थित्याद्युपलक्षणमेतत् । ननु जगदारोपाधिष्ठानत्वरूपजगत्स्रष्टृत्वस्य शरीरानपेक्षत्वात् किं तदङ्गीकारेणेत्यतो अर्थान् विशिनष्टि- **याथातथ्यत इति** ॥ तृतीयान्तात्तसिः । 'वर्तमानान्' इति शेषः । अबाधितप्रत्यक्षादिसिद्धतया याथार्थ्येन वर्तमानानित्यर्थः । न च अदेहत्वस्य जगत्सृष्ट्यादेश्च कालभेदेन व्यवस्था । जगत्सृष्ट्यादिप्रवाहस्य अनाद्यनन्ततया प्रमितत्वात् । तदेतदुक्तं- **शाश्वतीभ्यः समाभ्य इति** ॥ पञ्चमी सप्तम्यर्थे । अनाद्यनन्तसंवत्सरेषु व्यदधात् । सज्ज्ञानाद्यात्मकदेहवत्त्वमन्येषामविद्यमानं परमेश्वरस्योपपादयितुं सार्वज्ञादिमाहात्म्यमुक्तं कविरित्यादिविशेषणैः । कविः सर्वज्ञः । मनीषी रमाब्रह्मादिमनसां ईशिता । परिभवति सर्वं वशीकरोतीति परिभूः सर्वतो वरः । स्वयमेव परमनपेक्ष्य भवतीति स्वयम्भूः । सदा अनन्याश्रय इति ॥ ८ ॥

## उपनिषत्

**अन्धंतमः प्रविशन्ति ये अविद्यामुपासते ।**
**ततो भूय इव ते तमो य उ विद्यायाँ रताः ॥ ९ ॥**

## भाष्यम्

**'अन्यथोपासका ये तु तमोऽन्धं यान्त्यसंशयम् ।**
**ततोऽधिकमिव व्यक्तं यान्ति तेषामनिन्दकाः ।।**

**तस्माद्यथास्वरूपं तु नारायणमनामयम् ।।**
**अयथार्थस्य निन्दां च ॥ ९ ॥**

**टीका**- 'अन्धं तमः प्रविशन्ति' इत्यादिमन्त्रान् अप्रतीत्यन्यथाप्रतीतिनिरासाय स्मृत्यैव व्याचष्टे- **अन्यथोपासका इति** ॥ यथावत्परमात्मज्ञानं

**मोक्षसाधनमित्युक्तम् । न केवलं तत् । किं नाम अन्यथाज्ञाननिन्दासमुच्चित-मेवेत्येतदर्थप्रतिपादकमाद्यमन्त्रत्रयम् । तत्र तावत् यथावज्ज्ञानस्येव अन्यथाज्ञाननिन्दाया अपि आवश्यकत्वोपपादनाय अन्यथाज्ञानस्य उक्तमसुर्य-लोकसाधनत्वमनूद्य अन्यथाज्ञानानिन्दनस्य ततोऽधिकानर्थसाधनत्व-माद्येन मन्त्रेणोच्यते । तस्यार्थः- अन्यथेति ॥ उपासकाः 'विष्णोः' इति शेषः । सर्वत्र ज्ञानशब्दस्य उपासनापर्यन्तत्वात् व्यामिश्रोक्तिः । तत्र अविद्यापदं विषयिवाचकं विषयस्य अन्यथाकारस्य लक्षकमित्यभिप्रेत्य 'अविद्यामुपासते' इत्येतत् 'अन्यथोपासकाः' इति व्याख्यातम् । ततः अन्यथाज्ञानिप्राप्या-त्तमसोऽधिकमिव । इवशब्दार्थमाह- व्यक्तमिति ॥ उशब्दोऽवधारणार्थः । 'विद्यायाम्' इत्यनेन सम्बद्ध्यते । तेन, विद्यायां यथार्थज्ञाने एव रताः । न तु अन्यथाज्ञाननिन्दां कुर्वन्तीत्येषोऽर्थो लभ्यते । अत उक्तम्- तेषामनिन्दका इति ॥ ततः किमित्यतो वक्ति- तस्मादिति ॥ यस्मात् मिथ्याज्ञानतद-निन्दाभ्यां तमःप्राप्तिः। 'निन्दाञ्च विद्यात्' इति शेषः- अयथार्थस्य निन्दामिति ॥ अयथार्थज्ञानस्य निन्द्यत्वमित्यर्थः ॥ ९ ॥**

**वामन**- य इतोऽन्यथोपासकास्ते 'अन्धन्तमः प्रविशन्ति' इत्याह । पूर्वत्र ह्यन्यथोपासकत्वं 'आत्महनः' इति किञ्चित् सूचितमेव । अत्र तु 'अविद्यामुपासते' इति सुव्यक्तमुच्यते । तस्मान्न पुनरुक्तिः । 'अन्यथा' इत्यादि कौर्मवचनेन 'अन्धन्तमः' इत्यादिवाक्यानि व्याख्याति । अविद्याकल्पितं जगदित्युपासन-मविद्योपासनम् । अथ तेषामविद्याकल्पितं हि जीवत्वम् । तत् सत्यमित्युपासन-मप्यविद्योपासनमेव । ब्रह्मणो निर्गुणत्वाद्युपासनमपि तथैव । एवमाद्यविद्योपासका नियमेन अन्धन्तमः प्रविशन्ति । अथ ये साक्षाद् विद्यायामेव रताः न पुनरविद्यानिन्दकास्ते ततोऽपि भूय इव तमः प्रविशन्ति । महातमःप्राप्तियोग्यानां तत्प्राप्तिवदेतेऽपि स्वयोग्यं किञ्चन तमः प्राप्नुवन्ति । स्वल्पं वा बहु वा अविद्यापरिहारोऽपि कर्तव्यः । तच्चाऽह- **तस्माद्यथेति** ॥ ते हि सज्जनाः । अन्ये तु दुर्जनाः ॥ ९ ॥

**वादि**- तमस्यनुभूयमानदुःखातिशयस्य 'ततोऽधिकम्' इत्यनेनैव प्राप्तेः पुनरिव शब्दो व्यर्थ इव भाति । अतस्तदर्थमाह भाष्यकारः- **व्यक्तमिति** ॥ तमः प्रवेशयन्ति वायुदूताः । अविद्योपासकस्तु सद्विद्यामजानन्नत एव

दुर्विद्यानिन्दनमप्यजानन् भगवतो जीवस्वरूपत्वमुक्त्वा दुःखभोक्तृत्वमज्ञातृत्वं मूलस्वरूपेऽपि निर्गुणत्वादिकमुपास्ते । त्वं तु सद्विद्यां जानन्नत एव दुर्विद्यानिन्दनमपि जानन् दुष्प्रमेयं न निन्दसि । केवलविद्यामेवोपास्से । एवञ्च भगवद्द्वेष्युपेक्षकत्वात् ज्ञात्वा कृतब्रह्महत्यावत्तव भगवदपराधोऽधिक इति दोषाधिक्यं घोषयित्वा तमोमार्गे तं जत्रुताडनतर्जनताडनजिह्वाच्छेदनदेहदाहादिना बहुतरदुःखादिकं दत्वा नयन्ति । तं तु न तथा नयन्ति । तमसि ततोऽधिकदुःखानुभवस्तु भूयःपदेनैव प्राप्त इति भावः ॥ ९ ॥

**श्रीनि**- नन्वत्र आद्यत्रिके उत्तरत्रिके च आद्यमन्त्रस्य पूर्वार्धे 'उपासते' इति अन्यथोपासनादेः अनर्थहेतुत्वमुक्त्वा उभयत्रापि तृतीयमन्त्रे 'वेद' इति ज्ञानस्य मोक्षहेतुत्वमुच्यते । तथा 'अन्यथोपासकाः' इत्युक्त्वा 'ये विदुः' 'परिज्ञानात्' इति भाष्येऽपि अतो व्यामिश्रोक्तिः कुत इत्यत आह- **सर्वत्रेति** ॥ श्रुतौ प्रमाणे चेत्यर्थः ॥ **अविद्येति** ॥ अज्ञानेत्यर्थः । लक्षणाबीजसम्बन्धप्रदर्शनाय विषयस्येत्युक्तम् ॥ ९ ॥

**छलारी- अप्रतीत्यन्यथाप्रतीतिनिरासायेति** ॥ 'येऽविद्यामुपासते' इत्यत्र अविद्याशब्देन विवक्षितार्थाप्रतीतिः । अविद्याशब्देन अज्ञानप्रतीत्यन्यथाप्रतीतिश्च । एवमविद्याशब्दादौ अप्रतीत्यन्यथाप्रतीती ज्ञेये इति भावः ॥ **इत्युक्तमिति** ॥ 'यस्तु सर्वाणि भूतानि इत्यादिना' इति शेषः । 'ततो न विजुगुप्सते' इत्यत्र 'भयाभावात्' इत्युक्त्या मोक्षस्यैव विवक्षितत्वादिति भावः ॥ **सर्वत्रेति** ॥ एतन्मन्त्रत्रयव्याख्यानरूपे भाष्य इत्यर्थः ॥ **पर्यायत्वादिति** ॥ पर्यायत्वेन विवक्षितत्वादित्यर्थः । वस्तुतस्तु ज्ञानशब्दः सामान्यवाची । उपासनाशब्दस्तु ज्ञानविशेषवाचीति प्रसिद्धमेवेति ज्ञेयम् । 'अविद्यामुपासते' इत्यस्य 'अन्यथोपासकाः' इति कथं व्याख्यानमित्यतः तद्घटयति- **अत्राविद्यापदमिति** ॥ **विषयवाचकमिति** ॥ अविद्यापदस्य मिथ्याज्ञानार्थकत्वादिति भावः ॥ अन्यथाकारस्य 'विष्णौ अविद्यमानस्य' इति शेषः ॥ **इवार्थमाहेति** ॥ 'इवशब्दमनूद्य' इति शेषः । यथा ब्रह्माज्ञात्वा ब्रह्महत्याकरणे अर्धषडब्दप्रायश्चित्तं स्मृतावुक्तम् । ब्राह्मणत्वज्ञानानन्तरं ब्रह्महत्यायाः निषिद्धत्वज्ञानेऽपि ब्रह्महत्याकरणे सम्पूर्णद्वादशाब्दप्रायश्चित्तं 'ब्रह्महा द्वादशाब्दं व्रतं चरेत्' इत्यादावुक्तम् । तथा

अविद्यानिरतस्य अविद्यायाः निन्दनीयत्वाज्ञानात् अन्धे तमसि क्वचित्पातमात्रं फलम् । अविद्यायाः निन्दनीयत्वज्ञानेऽपि निन्दनाऽकरणे ततोऽधिकतमः प्राप्तिरत्रोच्यत इति भावः ॥ ९ ॥

**सत्य- मोक्षसाधनमित्युक्तमिति** ॥ 'यस्तु सर्वाणि भूतानि' इत्यादिना इति शेषः ॥ ननु 'येऽविद्यामुपासते' इति मन्त्रानुसारेण 'अन्यथोपासकाः' इति युक्तम् । 'ये विदुः' इत्यादिना ज्ञानकथनमयुक्तम् । व्याख्येयमन्त्रविसंवादादित्यत आह- **सर्वत्र ज्ञानशब्दस्येति** ॥ ९ ॥

**नृसिंह**- विषयिलक्षणमुख्यार्थसम्बन्धद्योतनाय विषयभूतस्य अन्यथाकारस्येत्युक्तम् । 'ततो भूय इव ते तमः' इत्यत्र अन्यथाज्ञानानिन्दकेन प्राप्यतमसोऽन्यस्याभावेन मिथ्याज्ञानिप्राप्यात् भूय इत्यधिकोक्तिरयुक्तेत्याशङ्कानिरासाय इवेत्युक्तम् । स्थानैकत्वेऽपि तदपेक्षया दुःखं स्पष्टतरं अनुभवन्तीति भावः । नन्विदं कथं युज्यते । न हि मिथ्याज्ञानानिन्दनमात्रेण अन्यथाज्ञान्यपेक्षया अधिकदुःखानुभव उपपत्तिगोचरतामर्हतीति चेन्न । मैवं मंस्थाः । एतच्छङ्कानिरासस्य बृहद्भाष्ये स्फुटमवगमात् । तथा च वाक्यम्-

अन्यथोपासका ये तु ते यान्ति ह्यधरं तमः ।
ततः किञ्चिद्विशेषेण दुर्ज्ञानस्याविनिन्दकाः ॥

सम्यगाचार्यवचनमव(वि)ज्ञाय विरोधिनि ।
सत्त्वबुद्धिं यतः कुर्युस्ततस्तेऽधिकपापिनः ।
अप्राप्तत्यागिनः प्राप्तनिष्ठाहीनो हि दोषवान् ॥ बृ.भा.६.४.१० इति ॥ ९ ॥

**कल्ला**- भाष्ये 'नित्यमेव प्रवाहतः' इति जगत्प्रवाहस्य नित्यत्वमुक्तं, 'अन्यथोपासकाः' इति तमस्साधनमुक्तम् । उपलक्षणञ्चैतत् ॥ ९ ॥

**रघु**- अथ भाष्यार्थः॥ **इत्यादिमन्त्रानिति** ॥ आदिपदेन 'सम्भूत्यामृतमश्नुते' इत्यन्ता मन्त्राः ग्राह्याः ॥ **अन्यथोपासका इतीति** ॥ एतच्च मन्त्रषट्क व्याख्यानरूपकौर्म इत्यन्तस्मृतिप्रतीकग्रहणमिति मन्तव्यम् । ननु मन्त्रा एव व्यर्थाः, ततस्तद्व्याख्यानपरं भाष्यं सुतरामनर्थकमित्यतः त्रिकद्वये आद्यत्रिकस्य तावत्ससङ्गतिकं प्रतिपाद्यमाह- **यथावदित्यादि** ॥ **मोक्षसाधनमित्युक्तमिति** ॥

'ततो न विजुगुप्सते' 'तत्र को मोहः कः शोकः' इति भयशोकाद्यभाव-साधनत्वोक्त्या तद्रूपमोक्षसाधनत्वमुक्तमित्यर्थः ॥ **न केवलं तदिति** ॥ मोक्षसाधनमित्यनुवर्तते । केवलमसहायं तत्परमात्मज्ञानं मोक्षसाधनं नेत्यर्थः ॥ **तत्र तावदिति** ॥ तत्र आद्यमन्त्रत्रयेऽपि आद्येन मन्त्रेण तावदन्यथाज्ञाना-निन्दनस्य ततोऽन्यथाज्ञानादधिकानर्थसाधनत्वमुच्यत इत्यन्वयः । तर्हि पूर्वार्धस्य वैयर्थ्यम् । न च अन्यथाज्ञानस्य अनर्थसाधनत्वं वक्तुं तदिति वाच्यम् । तस्य 'असुर्या नाम' इति मन्त्रेणोक्तत्वेन पुनरुक्तिप्रसङ्गादित्यतः उक्तानुवादरूपत्वान्न दोष इत्याशयेनोक्तम्- **अन्यथाज्ञानस्य उक्तमसुर्यलोकसाधनत्वमनूद्येति** ॥ अनूद्येत्यतः पूर्वं 'पूर्वार्धेन' इति शेषः । ननु अनुवादोऽपि व्यर्थः । अधिक-विधानाद्यभावादित्यत उक्तम्- **यथावज्ज्ञानस्येव अन्यथाज्ञाननिन्दाया अपि आवश्यकत्वोपपादनायेति** ॥ उपासनाकर्मानुक्तेराह- **विष्णोरिति शेष इति**॥ अनुपपत्तिस्फोरणाय वा, अध्याहृतस्य सम्बन्धज्ञापनाय वा उपासका इत्यनुवादः । ननु 'ये अविद्यामुपासते' 'यस्तद्वेद' इति मन्त्रे 'अन्यथोपासका ये तु' 'ये विदुः सह सज्जनाः' इति भाष्ये च ज्ञानोपासनयोः व्यामिश्रोक्तिरयुक्ता । अनिर्णयप्रसङ्गादित्यत आह- **सर्वत्रेति** ॥ मन्त्रे भाष्ये चेत्यर्थः ॥ **उपासनापर्यन्तत्वादिति** ॥ सामान्यशब्दस्य विशेषे लक्षणेति भावः । यद्यपि उपासनाशब्दस्य ज्ञानपरत्वेनाङ्गीकारेणापि व्यामिश्रोक्तिघटना सम्भवति । तथापि तमःप्राप्तिरूपानर्थस्य मृत्यूत्तरणादिरूपमोक्षस्य च उपासनाफलत्वेऽपि ज्ञानमात्र-फलत्वाभावादेवमेव घटना कृतेति द्रष्टव्यम् । भाष्यमन्त्रयोः व्याख्यानव्याख्येयभावं घटयति- **तत्रेति** ॥ आद्यमन्त्र इत्यर्थः ॥ **विषयिवाचकमिति** ॥ विद्याविरुद्धमिथ्याज्ञानवाचकमित्यर्थः । विषयविषयिभावरूपशक्यसम्बन्धसूचनाय विषयिवाचकमिति विषयस्येति च उक्तम् । मिथ्याज्ञानरूपाविद्याया उपास्यत्वा-भावान्मुख्यार्थानुपपत्तिः द्रष्टव्या ॥

ननु तत इत्यनेन तमसः परामर्शः क्रियते उत अन्यथोपासकानाम् । नाद्यः, स्वतः स्वस्याधिक्यस्य बाधितत्वात् । न द्वितीयः, विजातीयत्वेन आधिक्यासम्भवादित्यतो अन्यथोपासकाः तमो यान्तीति वाक्यतात्पर्यार्थपरामर्शान्न कश्चिद्दोष इत्याशयेनाह- **तत इति** ॥

ननु मन्त्रव्याख्यानरूपे प्रमाणे व्यक्तमिति किं मन्त्रपदानुवादः उत व्याख्यानम् । नाद्यः, मन्त्रे तत्पदाभावात् । न द्वितीयः, व्याख्येयपदाभावादित्यतो द्वितीयपक्षमङ्गीकृत्याह- **इवार्थमाहेति** ॥ अनेन भाष्ये अधिकमिवेति मन्त्रगतेवशब्दानुवादेन व्यक्तमिति तद्व्याख्यानं कृतमित्युक्तं भवति । ननु इवशब्दस्य व्यक्तत्वार्थत्वे 'भूय इव' इत्यस्य व्यक्तमधिकं सम्यगधिकमित्यर्थः सम्पद्यते । प्रकारान्तराभावात् । तथा च-

अन्यथोपासका येऽस्य ते यान्ति ह्यधरं तमः ।
ततः किञ्चिद्विशेषेण दुर्ज्ञानस्याविनिन्दकाः ॥

इत्येतन्मन्त्रव्याख्यानरूपबृहद्भाष्यविरोधः । तत्र किञ्चिदित्यनेनेवशब्दस्याल्पार्थता व्याख्यानेनाल्पाधिकतमःप्राप्तेः फलितत्वेनोक्तत्वात् । नच तत्र किञ्चिदिति न इवशब्दस्य व्याख्यानमिति वाच्यम् । उन्मूलत्वापातात् । इवशब्दस्य व्याख्याना-भावप्रसङ्गाच्च । 'उपमार्थे तथाल्पत्वेऽपीवशब्दः प्रयुज्यते' इति तत्रैव पूर्वोक्त-प्रमाणप्राप्ताल्पत्वार्थताया हातुमशक्यत्वाच्च । किञ्चिदित्यस्येवशब्दार्थत्वाभावेऽपि विरोधापरिहाराच्चेति चेन्मैवम् । अत्रापि अधिकमित्यस्य किञ्चिदधिक-मित्येवार्थोऽभिप्रेतः । व्यक्तत्वार्थकेवशब्दस्य तु अन्यथोपासकाः ततोऽल्पमधिकं तमो यान्तीति व्यक्तं प्रमितमिति भिन्नक्रमेण सम्बन्धस्य विवक्षितत्वेन विरोधाभावात् ॥

इयांस्तु विशेषः । अत्र भूय इत्यस्यैव किञ्चिदाधिक्यार्थकत्वमङ्गीकृत्य इव शब्दो व्यक्तत्वार्थतया व्याख्यातः । तत्र इवशब्दः किञ्चिदित्यर्थकत्वेनेति । ननु अन्यथाज्ञानिप्राप्यतमसः सकाशात्तदनिन्दकानामधिकतमःप्राप्तिर्भवतीत्युक्तं तदयुक्तम् । अन्यथाज्ञानानिन्दनस्य उभयोरपि समत्वेन अधिकतमःप्रापकाभावात् । अङ्गीकृत्य चैतदुक्तम् । वस्तुतस्तु अन्यथाज्ञानानिन्दकस्य विद्यारतत्वेन अन्यथोपासकापेक्षया समीचीनत्वेन अनिन्दनप्रयुक्ताल्पतमःप्राप्तेरेव वक्तुमुचितत्वा-दिति चेत् । अस्त्यत्र विवेकः । न तावदन्यथोपासकापेक्षया तदनिन्दकस्य विद्यारतत्वप्रयुक्तं समीचीनत्वम् । अनिन्दनदोषदूषितस्य विद्यारतत्वस्य भर्जितबीजवदकिञ्चित्करत्वेन सामीचीन्यानापादकत्वात् । नापि अन्यथा-ज्ञानानिन्दकत्वेन उभयोः साम्यम् । अन्यथोपासकस्य सम्यगाचार्योपदेशाभावेन

अन्यथाज्ञाननिन्दनस्य कर्तव्यत्वेनाप्राप्ततया तत्त्यागिनो अप्राप्तत्यागित्वात् । विद्यारतस्य तु सम्यगाचार्योपदेशावश्यम्भावेन तत एव ब्रह्मनिर्गुणत्वादिनिन्दनस्य कर्तव्यत्वेन प्राप्तस्याप्यकरणेन प्राप्तनिष्ठाहीनत्वात् अप्राप्तत्यागिनः प्राप्तनिष्ठाहीनो हि अधिकदोषवान् । आचार्योपदेशाभावेन अप्राप्तनित्यकर्मादित्यागिनः सकाशादा-चार्योपदेशादिना प्राप्ते नित्यकर्मादौ निष्ठाहीनो दोषवानिति लोके प्रसिद्धत्वात् अतो अन्यथोपासकापेक्षया अन्यथाज्ञानानिन्दकस्याधिकपापित्वाद्युक्तमधिकतमः-प्राप्तिकथनम् । तदेतत्सर्वमुक्तमेतन्मन्त्रव्याख्यानरूपे बृहद्भाष्ये-

अन्यथोपासका येऽस्य ते यान्ति ह्यधरं तमः ।
ततः किञ्चिद्विशेषेण दुर्ज्ञानस्याविनिन्दकाः ॥

सम्यगाचार्यवचनमव(वि)ज्ञाय विरोधिनि ।
सत्त्वबुद्धिं यतः कुर्युस्ततस्तेऽधिकपापिनः ॥
अप्राप्तत्यागिनः प्राप्तनिष्ठाहीनो हि दोषवान् ॥(बृ.भा.६.४.१०) इति ॥

सम्यगाचार्यवचनं ब्रह्मनिर्गुणत्वादिनिन्दापरम् ।, अवज्ञाय तिरस्कृत्य । विरोधिनि ब्रह्मनिर्गुणत्वादौ सत्त्वबुद्धिं यतः कुर्युरिति तद्वाक्यार्थः । ननु मन्त्रे विद्यारतानामधिकतमःप्राप्तिरुच्यते । तद्विरुद्धं प्रकृतासङ्गतश्च । न च 'य उ विद्यायां रताः' इत्यस्य न विद्यारतत्वमात्रे तात्पर्यं किन्तु अन्यथाज्ञानानिन्दनेऽपि । अतो नोक्तदोषद्वयावकाशः । अत एव भाष्ये 'तेषामनिन्दकाः' इति तद्वाक्यमन्यथा-व्याख्यातमिति चेत्सत्यम् । तेन तदर्थालाभादित्यतो लाभप्रकारं दर्शयति- **उशब्दोऽवधारणार्थ इत्यादि** ॥

ननु तस्मादित्यादिभाष्यमाद्यमन्त्रस्य व्याख्यानमुत 'विद्यां चाविद्यां च' इति तृतीयमन्त्रस्य । नाद्यः, पूर्वश्लोकेनैव सम्यग् व्याख्यातत्वात् । न द्वितीयः, तस्मादित्यंशवैयर्थ्यादित्यत आद्यं पक्षमङ्गीकृत्य पदव्याख्यानत्वाभावेऽपि मन्त्रे अनन्वयशङ्कायामध्याहृतसाध्येन अन्वयप्रदशनार्थं तदित्यभिप्रेत्य साध्याकाङ्क्षा-मुत्थापयति- **ततः किमिति** ॥ यस्मादित्यध्याहृत्य पूर्वश्लोकार्धेन अन्वयं दर्शयति- **यस्मान्मिथ्याज्ञानेति** ॥ ननु भाष्येऽपि साध्यानुक्तेः अनन्वयदोषः तदवस्थः । ततः किमित्यपेक्षाया अनिवृत्तिश्चेत्यतः साध्यमध्याहरति- **विद्यादिति**

**शेष इति** ॥ एतच्च 'ये विदुः' इति भाष्ये 'यस्तद्वेद' इति मन्त्रे च अनुवादेन सूचितमिति बोध्यम् । शेषपूरणं च निन्दां चेत्यतः परमिति ज्ञापनाय तत्पदानुवादः । एवं सर्वत्रापि ज्ञातव्यम् । अत्र यस्मात् मिथ्याज्ञानेन तमःप्राप्तिः तस्मान्नारायण-मनामयं यथास्वरूपं विद्यात् । यस्मात्तदनिन्दया तमःप्राप्तिः तस्मादयथार्थस्य निन्दां च विद्यादिति प्रत्येकमन्वयो ज्ञातव्यः । ननु निन्दां विद्यादित्ययुक्तम् । निन्द्यत्वज्ञानस्य विशिष्टफलहेतुत्वेऽपि निन्दाज्ञानस्य तदभावादित्यतो विषयिवाचकनिन्दाशब्दस्य विषये निन्द्ये लक्षणां भावप्राधान्यञ्चाङ्गीकृत्य अनूद्य व्याचष्टे- **अयथार्थस्य निन्दामितीति** ॥

ज्ञानस्येत्युक्त्या 'दुर्ज्ञानस्याविनिन्दकाः' इति बृहद्भाष्यानुसारेणायथार्थ-प्रातिपदिकात्परं ज्ञानप्रातिपदिकस्य अध्याहार इत्युक्तं भवति । अनेन ये अविद्यामुपासते विष्णोरन्यथाकारस्य निर्गुणत्वादेरुपासकाः ते अन्धंतमः प्रविशन्ति यस्मात्तस्मात् यथास्वरूपं नारायणं विद्यादुपासीत । ये विद्यायां उ विद्यायामेव यथार्थज्ञान एव रताः । सम्यगाचार्यवचनमवज्ञाय अयथार्थज्ञानस्य अनिन्दका इति यावत् । ते ततः मिथ्याज्ञानिप्राप्यतमसः सकाशात् । भूयः किञ्चिदधिकम् । तमः प्रविशन्तीति । इव व्यक्तं प्रमितम् । यस्मात् तस्मादयथार्थज्ञानस्य निन्द्यत्वं च विद्यात् । ततश्च निन्दा कार्येति साध्याध्याहारेण मन्त्रयोजना सूचिता भवति ॥९॥

## उपनिषत्

**अन्यदेवाहुर्विद्यया अन्यदाहुरविद्यया ।**
**इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १० ॥**

**टीका- किं विपक्षे अनर्थप्राप्तेरेव सम्यज्ज्ञानासम्यज्ज्ञाननिन्दनयोः कर्तव्यता, नेति ब्रूमः । किन्तु मोक्षफलस्यांशतः उभयसाध्यत्वादपीति प्रतिपादकः अन्यदेवाहुर्विद्यया इति द्वितीयमन्त्रः । तथाहि विद्यया यथार्थज्ञानेन अन्यदेव मोक्षैकदेशलक्षणं फलं प्राप्यमाहुः वृद्धाः । अविद्यया अन्यथाज्ञान-निन्दया चेति यावत् । अन्यदेव फलमाहुरिति धीराणां धीमतां वृद्धवचन-सम्मतियुक्तं वचनं शुश्रुम । ये धीराः नोऽस्मभ्यं मोक्षसाधनं विचचक्षिरे व्याचचक्षिरे । तस्मादुपपन्नस्समुच्चय इति ॥ १० ॥**

 

**वामन**- विद्याभ्यासेनैवाविद्यानिन्दनफलमपि कथञ्चित् सुलभं स्यादित्याशङ्क्याऽह- **अन्यदेवेति** ॥ अनयोर्हि स्वकीयं फलं नान्येन लभ्यम् । तच्च प्राज्ञा आहुः । तच्छ्रुत्वाऽन्ये व्याचचक्षिरे । वयं तु शुश्रुम इति वचनात् ऐतिह्यप्रमाणसिद्धम् ॥ १० ॥

**वादि**- 'अविद्यया अन्यथाज्ञाननिन्दया' इत्यत्र अविद्यया मोक्षैकदेशप्राप्तेरसम्भवात्, अविद्यानिन्दनस्य प्राक्प्रस्तुतत्वाच्च, यथाश्रुतविद्याविद्ययोर्भिन्नफलत्वस्य सर्वसम्मतत्वेनावक्तव्यत्वाच्च, 'अविद्यया मृत्युं तीर्त्वा' इति मोक्षैकदेशरूपफलस्य वक्ष्यमाणत्वाच्च 'निन्दया' इति पदमध्याहृत्य व्याख्येयमिति भावः । लौकिकधैर्यस्य अप्रयोजकत्वात् 'धियां रता इति धीराः' इति भावेनोक्तम्- **धीमतामिति** ॥ तेऽपि धीराः कल्पनाशक्त्या नोक्तवन्त इति भावेनोक्तम्- **वृद्धवचनसम्मतियुक्तमिति** ॥ १० ॥

**सत्य**- धीषु रमन्त इति धीरा इति व्युत्पत्तिमभिप्रेत्याह- **धीराणां धीमतामिति** ॥ **वृद्धवचनसम्मतियुक्तमिति** ॥ आहुरिति श्रवणादेवमुक्तमिति द्रष्टव्यम् ॥ १० ॥

**नृसिंह**- धीरैः अप्याहुः इत्युक्तत्वात् वृद्धवचनसम्मतियुक्तं वचनं इत्युक्तम् ॥१०॥

**रघु**- द्वितीयमन्त्रार्थविवरणरूपतृतीयमन्त्रव्यख्यानेनैव द्वितीयमन्त्रस्यापि व्याख्यातत्वं मन्यमानेन भाष्यकृता अव्याख्यातं द्वितीयमन्त्रं स्वयमवतार्य व्याचष्टे- **किं विपक्षे अनर्थप्राप्तेरेवेत्यादिना** ॥ **सम्यज्ज्ञानासम्यज्ज्ञाननिन्दनयोः कर्तव्यतेति** ॥ अत्र सम्यज्ज्ञानस्य कर्तव्यत्वं नाम सम्पाद्यत्वम् । असम्यज्ज्ञाननिन्दनस्य तु प्रसिद्धमेवेति ज्ञातव्यम् । एवमवतार्य व्याख्यातुं प्रतिजानीते- **तथा हीति** ॥ अन्यथाज्ञानवाचकाविद्याशब्दस्य तन्निन्दायां जहल्लक्षणेत्याह- **अन्यथाज्ञाननिन्दया चेति यावदिति** ॥ धिया रमन्ते इति व्युत्पत्तिमभिप्रेत्योक्तम्- **धीराणां धीमतामिति** । **वृद्धवचनसम्मतियुक्तमिति** ॥ अन्यदेवाहुरिति धीरवचनगताहुः इत्यस्य अस्मद्वृद्धा एवमाहुः इत्यर्थकत्वादेवमुक्तमिति ज्ञातव्यम् ॥ १० ॥

## उपनिषत्

**विद्यां चाविद्यां च यस्तद्वेदोभयꣳ सह ।**
**अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ ११ ॥**

## भाष्यम्

**...................... ये विदुस्सह सज्जनाः ।**
**ते निन्दयाऽयथार्थस्य दुःखाज्ञानादिरूपिणः ॥**
**दुःखाज्ञानादिसन्तीर्णाः सुखज्ञानादिरूपिणः ।**
**यथार्थस्य परिज्ञानात्सुखज्ञानादि[1]रूपताम् यान्ति ॥ ११ ॥**

**टीका**- अस्यैवार्थस्य विवरणार्थः 'विद्याञ्च' इति तृतीयो मन्त्रः । तस्येदं व्याख्यानं- **ये विदुरिति** ॥ 'यथास्वरूपं तु' इत्याद्युक्तावृत्त्याऽन्वयः । तेन विद्यापदं ईश्वरयाथात्म्यस्य, अविद्यापदं च अन्यथाज्ञाननिन्द्यत्वस्य उपलक्षणमित्युक्तं भवति । सहेत्येकपुरुषार्थहेतुत्वेन इत्यर्थः । दुःखाज्ञानादिरूपिणोऽयथार्थस्येति । तज्ज्ञानस्येत्यर्थः । अयथार्थज्ञाननिन्दया मृत्युपदोदितदुःखादितरणं भवति । यथार्थज्ञानेन च सुखज्ञानादिरूपतालक्षणामृतप्राप्तिर्भवतीत्येतदुपपादनाय 'दुःखाज्ञानादिरूपिणः अयथार्थस्य' 'सुखज्ञानादिरूपिणो यथार्थस्य' इति विशेषणोपादनं कृतम् । तथा च श्रुतिः 'तं यथा यथोपासते तदेव भवति' इति ॥११॥

**वामन**- 'विद्यां च' इत्यादिकं फलद्वयविशेषवादिवाक्यं व्याख्याति- **तेऽनिन्दयेति** ॥ ते सज्जनाः अयथार्थज्ञानस्य निन्दामकृत्वैवानादिकालतो दुःखाज्ञानादिदोषसम्बद्धस्वरूपिणो बभूवुः । ततो दुःखादितरणार्थमविद्याया निन्दयाऽवश्यं भाव्यम् । तत्तरणानन्तरमेव च केवलसुखज्ञानादिगुणस्वरूपव्यक्तिमन्तस्ते भवेयुः । तद्व्यक्तिस्तु विद्याफलमित्याह- **यथार्थस्येति** ॥ विद्याविद्ये उभे अपि सहैव वेदितव्ये । निर्दोषत्वेन च सदोषत्वेन च भेदः । मृत्युर्मरणकारणत्वादज्ञानादिकम् । तद्राहित्यादमृतं स्वरूपानन्दादि ॥ ११ ॥

---

१. स्वरूपताम् ।

**वादि**- क्रमिकज्ञानयोः युगपदुत्पत्त्यभावात् सहशब्दार्थमाह- **एकपुरुषार्थेति** ॥११॥

**श्रीनि**- ये विदुरित्यनुवादस्य विधिसापेक्षत्वात् 'विद्याश्च' इति पूरितम् । ये विदुरित्यत्र कर्माप्रतीतेराह- **यथास्वरूपश्चेति** ॥ तेन उक्तावृत्त्यान्वयकरणेन । ॥ **दुःखाज्ञानादीति** ॥ तथा च दुःखाज्ञानादिरूपिणोऽयथार्थस्य निन्दया दुःखाज्ञानादिसन्तीर्णा भवन्तीत्यन्वयो ध्येयः । अयथार्थस्येत्यनन्तरं 'निन्दया दुःखाज्ञानादिसन्तीर्णाः' इति शेषः । यथार्थस्येत्यनन्तरं परिज्ञानात्सुखज्ञानादिरूपतां यान्ति इति शेषः। बृहद्भाष्ये षष्ठाध्याये शारीरब्राह्मणे -

अन्यथोपासका ये तु ते यान्ति ह्यधरं तमः ।
ततः किञ्चिद्विशेषेण दुर्ज्ञानस्याविनिन्दकाः ।
सम्यगाचार्यवचनमवि(व)ज्ञाय विरोधिनि ॥ इत्याद्युक्ता ।

ननु कथमेते अधिकपापिन इत्याशङ्कायामुक्तम् 'अप्राप्तत्यागिनः प्राप्तनिष्ठाहीनो हि दोषवान्' इति । व्याख्यातं चैतद् भावबोधे 'अन्यथोपासको हि अप्राप्तत्यागी तस्य विद्यात्वाभावेन 'तन्निर्गुणत्ववेत्तारस्तेऽसन्तस्तमआलयाः' इत्यादिरूपसमीचीनाचार्योपदेशाभावेन दुर्ज्ञानविनिन्दनस्य अप्राप्तत्वात् । अयं तु प्राप्तनिष्ठाहीनः सम्यगाचार्योपदेशे प्राप्तेऽपि दुर्ज्ञानविनिन्दने नित्यशून्यत्वात् । अप्राप्तत्यागिनः प्राप्तनिष्ठाहीनोऽधिकदोषवानित्यर्थः । आचार्योपदेशाभावेन अप्राप्तनित्यकर्मादित्यागिनः आचार्योपदेशादिना प्राप्तनित्यकर्मादौ निष्ठाहीनोऽधिकदोषवानिति प्रसिद्धमिति हि शब्देन दर्शयति- **अयथार्थेति** ॥ अयथार्थज्ञाननिन्दया अस्वाभाविकार्थभूतदुःखादितरणं भवति । भगवतः सुखादिपूर्णतारूपयथार्थज्ञानेन स्वेषामपि सुखादिपूर्णत्वं भवतीत्यर्थः । भवति प्राप्नुवन्ति । एवमित्यस्यार्थमाह- **यथेति** ॥ अन्यथोपासका अन्यथाज्ञानानिन्दकाः यथा तमो यान्त्येवमित्यर्थः ॥ ११ ॥

**छलारी- विद्यापदमिति** ॥ 'विद्याश्च अविद्याश्च इति मन्त्रे' इति शेषः ॥ **एकपुरुषार्थहेतुत्वेनेति** ॥ अनिष्टनिवृत्तीष्टप्राप्तिरूपमोक्षस्यैकपुरुषार्थहेतुत्वेनेत्यर्थः । 'दुःखाज्ञानादिरूपिणः' इत्येतदयथार्थस्येति पदस्य विशेषणमिति-

भावेनान्वयं दर्शयन्नेवायथार्थस्येत्यस्य लभ्यार्थमाह- **दुःखाज्ञानादिरूपिणोऽ-यथार्थस्येतीति** ॥ **तज्ज्ञानस्येत्यर्थ इति च** ॥ एवं 'सुखज्ञानादिरूपिणः' इत्यत्रापि ज्ञेयम् ॥ **अन्यथाज्ञानमेवेति** ॥ 'असुर्या नाम ते लोका इत्यादौ' इति शेषः ॥ **यथार्थज्ञानमिति** ॥ 'अनेजदेकं इत्यादौ' इति शेषः । 'अन्यथा-ज्ञाननिन्दासमुच्चितम्' इति च शेषः ॥ ११ ॥

**सत्य- 'तदेव भवति' इति**॥ प्राप्नोतीत्यर्थः । यद्वा तदेव गुणजातं अस्याधिकारिणो भवतीत्यर्थः । तदेव तज्जातीयमेव ॥ ११ ॥

**नृसिंह- एकपुरुषार्थेति** ॥ अन्यथोभयशब्देनैव चारितार्थ्यादिति भावः ॥ **तज्ज्ञानस्येत्यर्थ इति** ॥ ११ ॥

**रघु- विवरणार्थ इति** ॥ अन्यदेवेति सामान्येनोक्तस्य मृत्युं तीर्त्वा अमृतमश्नुते इति विस्पष्टमुक्तत्वात् विवरणार्थ इत्युक्तम् । अतो न गतार्थतेति भावः । ननु ये विदुरित्यारभ्यैव भाष्यस्य तृतीयमन्त्रव्याख्यानत्वे विद्यां च अविद्यां चेति पदद्वयस्य अव्याख्यातत्वप्रसङ्गः । भाष्ये वेदनकर्मानुक्त्या अनन्वयप्रसङ्गश्च इत्यत आह- **यथास्वरूपं तु इत्यादीति** ॥ ननु उक्तावृत्त्या अन्वयाङ्गीकारेऽपि मन्त्रभाष्ययोः विसंवाद एव । मन्त्रे विद्याविद्ययोः भाष्ये च ईश्वरयाथात्म्यायथार्थज्ञाननिन्द्यत्वयोः वेद्यत्वेनोक्तत्वादित्यतो मन्त्रगतपदद्वय-व्याख्यानत्वात् भाष्यस्य न दोष इति भावेन व्याख्यानतां घटयति- **तेनेति**॥ आवृत्तेन यथास्वरूपं च इत्यादिना इत्यर्थः । अत्र आद्या विषयिवाचकस्य विषये जहल्लक्षणा । द्वितीया तु धर्मिवाचकस्य धर्मे । उपलक्षणा च गौणीचेत्यादौ लक्षणामात्रेऽपि उपलक्षणाशब्दप्रयोगादिति द्रष्टव्यम् । यौगपद्यार्थत्व-भ्रमनिरासायाह- **सहेत्येकपुरुषार्थेति** ॥ निर्दुःखपरमानन्दरूपैकपुरुषार्थेत्यर्थः । अयथार्थस्य निन्दया दुःखाज्ञानादिरूपिणश्च निन्दयेति वा दुःखाज्ञानादिरूपिणस्ते इति वा अन्वयभ्रमनिरासाय विशेषणविशेष्यभावेन तत्प्रदर्शनपूर्वकं अयथार्थज्ञानस्य निन्द्यत्वप्रस्तावेऽपि अयथार्थस्य तदभावात् भगवत्यसम्भवाच्चेति शङ्कापरिहाराय 'दुर्ज्ञानस्याविनिन्दकाः' इति बृहद्भाष्यानुसारेण अयथार्थपदं तज्ज्ञानलक्षकतया व्याचष्टे- **दुःखाज्ञानादीति** ॥ दुःखाज्ञानादिरूपिणोऽयथार्थज्ञानस्येति कार्य-कारणयोरभेदोपचारः । यद्वा दुःखाज्ञानादि रूपयत्युत्पादयतीति व्युत्पत्त्या

तत्कारणस्येत्येवार्थः । सुखज्ञानादिरूपिणो यथार्थस्येत्यत्र तु साक्षादभेद एव । यथार्थपदोदितेश्वरयाथात्म्यस्य सुखज्ञानादिव्यतिरेकेण अन्यस्याभावेन तदात्मकत्वादिति बोध्यम् । ननु 'दुःखाज्ञानादिरूपिणः' इति भाष्ये दुःखाज्ञानादिरूपं यस्य इति बहुव्रीहिणैव मत्वर्थलाभादिनिप्रत्ययवैयर्थ्यमिति चेत् । बहुव्रीहिमाश्रित्य मतुबर्थप्रत्ययप्रयोगे वैयर्थ्येऽपि दुःखाज्ञानादिकं च तद्रूपं च दुःखाज्ञानादिरूपं तदस्य अस्तीति दुःखाज्ञानादिरूपी इति कर्मधारयमाश्रित्य तत्प्रयोगे शब्दान्तरत्वेन दोषाभावात् । नच 'न बहुव्रीहिनिर्वाह्ये भवन्ति मतुबादयः' इत्याद्युक्तिबलात् बहुव्रीह्यङ्गीकार एवोचितो न कर्मधारयमत्वर्थीयाङ्गीकार इति वाच्यम् । यतः अस्त्यत्र व्यवस्था । यत्र कर्मधारयमत्वर्थीये बहुव्रीहौ च शब्दसाम्यं तत्र कर्मधारयमत्वर्थीय एव अङ्गीकार्यो न बहुव्रीहिः । तस्य अन्यपदार्थप्रधानकस्य कर्मधारयाज्जघन्यत्वेन वृथा तदङ्गीकारस्य अनुचितत्वात् । यत्र च कर्मधारयमत्वर्थीयात् बहुव्रीहौ शब्दलाघवं तत्र बहुव्रीहिरेवाङ्गीकार्यो न कर्मधारयमत्वर्थीयः । अल्पेन शब्देन अभिमतार्थप्रतिपादनसम्भवे बहुयत्नाश्रयणस्य दोषत्वात् । यथोक्तं 'कर्मधारयमत्वर्थीयात् बहुव्रीहिरेवेष्टो लघुत्वात्' इति ॥

सम्मतश्चैतट्टीकाकारस्य । अत एव प्रमेयदीपिकायां 'यद्विकारी'(भ.गी.१३.३) इत्यत्र कर्मधारयमत्वर्थीयमभ्युपगम्यानादिमदित्यत्र तदनङ्गीकारः । एतच्च 'एकगोपूर्वाट्ठञ् नित्यम्' (सि.कौ.१९२५) इति सूत्रे दुर्घटवृत्तिकृता प्रपञ्चितमनुसन्धेयम् । तस्माद्युक्तं 'दुःखाज्ञानादिरूपिणः' इत्यत्र कर्मधारयमत्वर्थीयाश्रयणमिति । मन्त्रानुक्तविशेषणोपादानस्य प्रयोजनमाह- **अयथार्थज्ञानेत्यादि** ॥ ननु मन्त्रे मृत्यूत्तारणमुक्तं प्रमाणे तु दुःखादितरणम् । अतो वैरूप्यमित्यत उक्तं- **मृत्युपदोदितेति** ॥ एवमेव सुखज्ञानादिलक्षणामृत-प्राप्तिः भवतीत्येतदपि व्याख्येयम् ॥ **इत्येतदुपपादनायेति** ॥ दुःखादितरणे दुःखादिरहितत्वेन भगवदुपासकत्वरूपोपपत्तेः सुखज्ञानादिरूपत्वे च सुखादिमत्त्वेन भगवदुपासकत्वरूपोपपत्तेः सूचकत्वेन उपपादनायेत्यर्थः । कथमनेन विशेषणद्वयेन तत्सूचनमिति चेदित्थम् । ज्ञानशब्दस्योपासनापर्यन्तत्वस्य उक्तत्वात् अयथार्थज्ञानं नाम जीवाभिन्नत्वादिना भगवदुपासनम् । जीवस्य च दुःखादिमत्त्वात् तदेव दुःखादिमत्त्वेन भगवदुपासनमित्युच्यते । तस्य च 'दुःखाज्ञानादिरूपिणः' इत्यनेन

दुःखाज्ञानादिसाधनत्वेन निन्द्यत्वेऽभिहिते दुःखादिरहितत्वेन भगवदुपासनस्य कर्तव्यत्वं लभ्यते । ततश्च दुःखादिरूपिणोऽयथार्थज्ञानस्य निन्दया दुःखादितरणं भवतीत्यर्थः सम्पद्यते । एवं यथार्थस्य परिज्ञानं नाम परमेश्वरयाथात्म्यस्य उपासनम् । तस्य च याथात्म्यस्य सुखज्ञानादिरूपत्वेऽभिहिते सुखादिमत्त्वेन भगवदुपासकत्वं स्फुटं लभ्यते । तथा च 'सुखज्ञानादिरूपिणः । यथार्थस्य परिज्ञानात् सुखज्ञानादिरूपतां यान्ति' इत्यनेन सुखज्ञानादिमत्त्वेन भगवदुपासकत्वात् सुखज्ञानादिरूपतां यान्तीत्यर्थः सम्पद्यते । अतो युक्तं तत्सूचकत्वम् ॥

अवश्यमेतदेवं व्याख्येयम् । अन्यथा 'तं यथा यथा' इति श्रुत्युदाहरणासङ्गतिप्रसङ्गादिति ध्येयम् । दुःखाज्ञानादिरहितत्वेन तदुपासकस्य सुखादिरूपता भवतीत्येतत्कुत इत्यत आह- **तथा चेति** ॥ तामेव पठति- **तं यथेति** ॥ तदेव तत्सदृशमेव भवति प्राप्नुवन्ति । अन्यथोपासत इति बहुवचनानुपपत्तेरे-कवचनस्य 'भू प्राप्तौ' इति धातोः परस्मैपदस्य च छान्दसत्वात् । एतदभिप्रायेणैव वैश्वानराधिकरणटीकायां 'तदेव भवति प्राप्नुवन्ति' इत्युक्तम् । भाष्ये 'सुखज्ञानादिरूपताम्' इति सुखज्ञानादिरूपताव्यक्तिमित्यर्थः । अत एव 'तद्व्यक्तिमाव्रजेत्' इति वक्ष्यतीति ज्ञेयम् ॥

ततश्चायं मन्त्रार्थः। विद्यां विद्याविषयीभूतमीश्वरयाथात्म्यम् । अविद्यां अन्यथाज्ञाननिन्द्यत्वम् । च शब्दावन्योन्यसमुच्चये । तदिदमुभयं यः सज्जनः सह निर्दुःखानन्दरूपैकपुरुषार्थसाधनत्वेन वेद जानाति, उपास्ते इति यावत् । सः अविद्यया दुःखाज्ञानादिरूपिणोऽयथार्थज्ञानस्य निन्दया, दुःखादिरहितत्वेन परमेश्वरोपासनयेति यावत् । मृत्युं दुःखादिकम् तीर्त्वा । विद्यया सुखज्ञानादि-रूपिणः परमेश्वरयाथात्म्यस्य उपासनया अमृतत्वं सुखज्ञानादिरूपतां व्यक्तिमश्नुते प्राप्नोति । 'तं यथा यथोपासते तदेव भवति' इति श्रुतेरिति ॥ ११ ॥

### उपनिषत्

**अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते ।**
**ततो भूय इव ते तमो य उ सम्भूत्याꣳ रताः ॥ १२ ॥**

भाष्यम्

'....एवं सृष्टिकर्तृत्वं नाङ्गीकुर्वन्ति ये हरेः ।
तेऽपि यान्ति तमो घोरं तथा संहारकर्तृताम् ॥

नाङ्गीकुर्वन्ति तेऽप्येवं तस्मात्सर्वगुणात्मकम् ।
सर्वकर्तारमीशेशं सर्वसंहारकारकम् ॥ १२ ॥

**टीका-** अन्यथाज्ञानमेव अनर्थसाधनं, यथार्थज्ञानमेव मोक्षसाधनमित्येतद्विवरणार्थं 'अन्धं तमः प्रविशन्ति' इत्युत्तरमन्त्रत्रयम् । तत्राद्यमन्त्रस्यार्थः - **एवमिति** ॥ यथाऽन्यथोपासका अन्यथाज्ञानानिन्दका इत्यर्थः । असम्भूतिं जगत्सृष्टेरकर्तारमित्यस्य तात्पर्यम्- **सृष्टीति** ॥ अत्रापि उशब्दो अवधारणार्थः । सम्भूत्यामित्यनेन सम्बद्ध्यते। तेन सम्भूत्यां उ जगत्स्त्रष्टृत्व एव । जगत्स्रष्टैव विष्णुः न तु संहारकर्तेत्यस्मिन्नर्थे रता इत्येषोऽर्थो लभ्यते । तस्मादुक्तम्- **तथेति** ॥ तेऽप्येवं सृष्टिकर्तृत्वानङ्गीकारिण इव तमो यान्तीत्यर्थः । ततः किमित्यत आह- **तस्मादिति** ॥ यस्मादेवं सृष्टिकर्तृत्वानङ्गीकारे अनर्थः । विद्यादिति वाक्यशेषः । सृष्टिकर्तृत्वानङ्गीकारे अनर्थकथनमुपलक्षणार्थमिति ज्ञापयितुं 'सर्वगुणात्मकम्' इत्युक्तम् । एतदप्युपलक्षणम् । उपसंहारे अधिकस्यापि वक्ष्यमाणत्वात् ॥ १२ ॥

**वामन-** अविद्योपास्त्यादौ विशेषवाचकं 'अन्धन्तमः' इत्युत्तरवाक्यम् । 'सृष्टिकर्तृत्वम्' इत्यादिना तद् विवृणोति । असम्भूतिं स्रष्टृत्वाभावं हरेः ये उपासते क्रियादिविशेषमनङ्गीकुर्वाणाः तेऽपि तमः प्रविशन्ति । ये चास्य सम्भूत्यां सृष्टिक्रियोपास्तावेव रताः न पुनः संहारक्रियामुपासते तेऽप्युक्तन्यायेन तमो यान्ति ॥१२॥

**वादि-** न विद्यते सम्भूतिर्यस्मादिति व्युत्पत्तिमभिप्रेत्याह- **जगत्सृष्टेरकर्तारमिति** ॥ 'उपसंहारेऽधिकस्यापि वक्ष्यमाणत्वात्' इत्यत्र 'सर्वदोषविनिर्मुक्तम्' इत्यादिश्लोकत्रयेण बहुप्रमेयाणां निरूप्यमाणत्वात् आधिक्यमिति भावः ॥१२॥

**श्रीनि**- 'यो वेद' इत्यनुवादस्य विधिसापेक्षत्वादाह- **विद्यादितीति** ॥ उपसंहारे 'सर्वदोषविनिर्मुक्तम्' इत्यादिना क्रियमाणे अधिकस्य भगवद्गुणजातस्य । तथा च सर्वदोषविनिर्मुक्तत्वादिरूपश्च यो वेदेत्यर्थः ।। १२ ॥

**छलारी- असम्भूतिं जगत्सृष्टेरकर्तारमिति** ॥ सम्पूर्वकभूधातोः भावे क्तिनि सम्भूतिः सृष्टिः । न विद्यते सम्भूतिः यस्माद्विष्णोः स असम्भूतिरिति विग्रहं मनसि निधायेदं व्याख्यानं ज्ञेयम् ॥ **तात्पर्यमिति** ॥ कर्तृवाचक-शब्दाभावात् नाङ्गीकुर्वन्तीत्येतद्वाचकाभावाच्चेति भावः ॥ **जगत्स्रष्टैव विष्णुः न तु संहर्तेति** ॥ इदं 'सम्भूतिश्च विनाशश्च' इत्युत्तरमन्त्रानुसारेण उशब्दव्यावर्त्यत्वेन कथनम् । न तु मुख्यव्यावर्त्यत्वेन । 'य उ सम्भूत्यां रताः' इत्यत्र उशब्दव्यावर्त्यत्वेन सकलगुणपूर्णत्वादेः उपलक्षणत्वेन वक्ष्यमाणत्वात् । सकलगुणपूर्णत्वादिज्ञानमपि उशब्दव्यावर्त्यं ज्ञेयम् ॥ १२ ॥

**सत्य- एतदप्युपलक्षणमिति** ॥ 'सर्वदोषविनिर्मुक्तत्वादेः' इति शेषः । कुत इत्यत आह- **उपसंहार इति** ॥ सर्वदोषविनिर्मुक्त इत्यादावित्यर्थः ॥१२॥

**नृसिंह**- दुःखाज्ञानादिरूपत्वलक्षणायथार्थस्य विष्णावभावेन निन्द्यत्वासम्भवात् अन्यथाज्ञाननिन्दाया एव प्रस्तुतत्वाच्च तज्ज्ञानमुपलक्षणीयमिति भावः । 'सर्वगुणात्मकम्' इत्यादेः 'यो वेद' इत्यनेनैवान्वितत्वे फलितकथनरूपत्वं न स्यात् । तथात्वाभावे च 'तस्मात्' इति व्यर्थमित्यतो वाक्यभेदसिद्ध्यर्थं शेषं पूरयति- **विद्यादितीति** ॥ एवं पूर्वत्रापि द्रष्टव्यम् ॥ १२ ॥

**रघु- इत्येतद्विवरणार्थमिति** ॥ असम्भूतिमित्यनेन अयथार्थज्ञानस्य 'सम्भूतिं च' इत्यादिना यथार्थज्ञानस्य विवृतत्वादिति भावः । एवंशब्दस्य दार्ष्टान्तिकार्थकस्य दृष्टान्ताकाङ्क्षायां यथार्थस्य परिज्ञानादिति सन्निहितप्रकृतयथार्थ-ज्ञानिनां दृष्टान्तत्वस्य विरुद्धत्वात् तेषामनिन्दका इति व्यवहितोक्तं दृष्टान्तमाह- **यथेति** ॥ अत्र अन्यथाज्ञानानिन्दकानामधिकतमःप्राप्तेरुक्तत्वेऽपि तमःप्राप्तिमात्रे दृष्टान्तत्वं ज्ञातव्यम् । 'तथा संहारकर्तृताम् । नाङ्गीकुर्वन्ति' इत्यस्य 'य उ सम्भूत्यां रताः' इत्येतद्व्याख्यातत्वं घटयति- **अत्रापि उ शब्द इत्यादि** ॥ न केवलं य उ विद्यायामित्यत्रेत्यपेरर्थः । तेऽप्येवमित्यत्रापि एवंशब्दस्य यथा अन्यथाज्ञानानिन्दका एवमित्यर्थः प्रतीयते अतोऽनूद्य व्याचष्टे- **तेऽप्येवमिति** ॥

अव्यवहितस्य दृष्टान्तत्वसम्भवे व्यवहितस्य तदङ्गीकारोऽनुचित इति भावः । अत्र तमःप्राप्तिमात्रे दृष्टान्तदार्ष्टान्तिकभावो ज्ञातव्यः । अन्यथा संहारकर्तृत्वानङ्गीकारिणां भूयःशब्देन अधिकतमःप्राप्तेः उक्तत्वेन वैषम्यापातादिति द्रष्टव्यम् । ननु सृष्टिकर्तृत्वानङ्गीकारिप्राप्यतमसः सकाशात् संहारकर्तृत्वानङ्गीकारिप्राप्यतमसो भूय इवेति मन्त्रे आधिक्यमुक्तम् । तदयुक्तम् । आधिक्यप्रापकदोषाधिक्याभावादिति चेत् अस्त्येव दोषाधिक्यम् । तथाहि सृष्टिकर्तृत्वानङ्गीकारिणः सम्यगाचार्योपदेशाभावेन अप्राप्तत्यागित्वात् । सृष्टिकर्तृत्वमङ्गीकृत्य संहारकर्तृत्वानङ्गीकारिणस्तु सृष्टिकर्तृत्वाङ्गीकाराय सम्यगाचार्योपदेशस्य तन्मूलभूत'यतो वा' इत्यादिवेदवाक्यानुसरणस्य च आवश्यकत्वेन ताभ्यामेव संहारकर्तृत्वस्यापि प्राप्त्या तत्त्यागिनः प्राप्तनिष्ठाहीनत्वात् अप्राप्तत्यागिनः प्रप्तनिष्ठाहीनस्य अधिकदोषवत्तायाः पूर्वोदाहृतप्रमाणसिद्धत्वात् । अतः संहारकर्तृत्वानङ्गीकारिणो युक्ता अधिकतमः प्राप्तिरिति ॥

साध्यानुक्तेः ततः किमिति शङ्काया अपरिहार इत्यत आह- **विद्यादिति वाक्यशेष इति** ॥ अन्यथा यो वेदेत्यनुवादानुपपत्तेरिति भावः । सर्वसंहारकारकमिति वाक्यान्ते शेषो वाक्यशेषः । यत्र क्वापि अन्वयभ्रान्तिपरिहाराय वाक्यशेष इत्युक्तम् । अनेन, मन्त्रे अनन्वयशङ्कायां यस्मात्तस्मादित्यध्याहारेण अन्वयो ज्ञातव्य इत्युक्तं भवति । ननु मन्त्रे सर्वगुणात्मकत्वाज्ञाने अनर्थानुक्तेः तस्मात्सर्वगुणात्मकं विद्यादिति साध्यकथनमसङ्गतमित्यत आह- **सृष्टीति** ॥ **सर्वगुणात्मकमित्युक्तमिति** ॥ अत्र सर्वगुणात्मकमित्यतः परं 'ईशेशम्' इति शेषः । अन्यथा तद्विशेषणवैयर्थ्यप्रसङ्गात् । यद्वा तस्य विशेष्यसमर्पकत्वाजदनुपादानमिति ज्ञातव्यम् ॥ **एतदप्युपलक्षणमिति** ॥ सर्वगुणात्मकमित्येतदपि सर्वदोषविनि-र्मुक्तत्वादेः उपलक्षणमित्यर्थः । कुत इत्यत आह- **उपसंहार इति** ॥ सर्वदोषविनिर्मुक्तमित्याद्युपसंहारग्रन्थे सर्वदोषविनिर्मुक्तत्वादेरधिकस्य वक्ष्यमाणत्वादित्यर्थः ॥

ततश्चायं मन्त्रार्थः । ये परमेश्वरमसम्भूतिं जगत्सृष्टेरकर्तारमुपासते ते अन्धयतीत्यधंतमः प्रविशन्ति । ये च सम्भूत्याम् उ जगत्स्रष्टृत्वे एव, जगत्स्रष्टैव विष्णुः न तु संहारकर्तेत्यस्मिन्नर्थे रताः, उपलक्षणमेतत् । परमेश्वरस्य सर्वगुणात्म-

कत्वसर्वदोषविनिर्मुक्तत्वादिकं नाङ्गीकुर्वन्ति । तेऽपि ततः सृष्टिकर्तृत्वानङ्गी-कर्तृप्राप्यतमसः सकाशात् भूयः किञ्चिदधिकं तमः प्रविशन्तीत्येतत् इव व्यक्तमसन्दिग्धमिति यावत् । यद्वा अत्र इवशब्दस्यैव अल्पार्थत्वाङ्गीकारेण भूय इव किञ्चित् अधिकमिति व्याख्येयम् । यस्मादेवं सृष्टिसंहारकर्तृत्वसर्वगुणात्म-कत्वाद्यनङ्गीकारे अनर्थः तस्मात् परमेश्वरं स्रष्टृत्वाद्युपेतं विद्यादुपासीतेति ॥१२॥

## उपनिषत्

**अन्यदेवाहुः सम्भवादन्यदाहुरसम्भवात् ।**
**इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १३ ॥**

**टीका- किं विपक्षे बाधकसद्भावादेवैतज्ज्ञातव्यम् । नेति ब्रूमः। किन्तु मोक्षोपयोगित्वादपि इति प्रतिपादयितुं 'अन्यदेवाहुस्सम्भावात्' इति द्वितीयो मन्त्रः । तत्र सम्भवात् सृष्टिकर्तृत्वज्ञानात्, असम्भवात् सम्भवविपरीत-संहारकर्तृत्वज्ञानादित्यर्थः ॥ १३ ॥**

**वामन-** सम्भवाद्युपास्तेः तदभावोपस्तेश्च अन्योन्यविरुद्धफलमित्याह- **अन्यदेवेति** ॥ सम्भवाद्युपासनात् अन्यत् विलक्षणम्, असम्भवाद्युपासनाच्च अन्यत् विलक्षणमेवानिष्टफलं भवति । सर्वेष्टानिष्टनाशोत्पत्तिरूपत्वात् । अथवा सम्भवासम्भवौ सृष्टिसंहारौ । तदुपासनाभ्यां भिन्नमेवेष्टं फलद्वयं भवति ॥ १३ ॥

**रघु-** द्वितीयमन्त्रविवरणरूपतृतीयमन्त्रव्याख्यानेनैव द्वितीयस्यापि व्याख्याततां मन्यमानेन भाष्यकारेण अव्याख्यातं द्वितीयमन्त्रं स्वयं ससङ्गतिकं व्याचष्टे- **किं विपक्ष इत्यादि** ॥ **एतदिति** ॥ सृष्टिसंहारकर्तृत्वमित्यर्थः ॥ **मोक्षोपयोगि-त्वादपीति** ॥ मोक्षफलस्यांशत उभयसाध्यात्वादपीत्यर्थः ॥ **सृष्टिकर्तृत्व-ज्ञानादिति** ॥ अनेन सम्भवत्यनेनेति सम्भवः सृष्टिकर्ता । भावप्रधानो निर्देशः । विषयवाचकस्य विषयिणि ज्ञाने लक्षणेत्युक्तं भवति। नञोऽभावार्थत्वभ्रमनिरासाय विरुद्धार्थत्वमङ्गीकृत्य असम्भवादिति पदं व्याचष्टे- **सम्भवविपरीतेति** ॥ 'इति शुश्रुम धीराणाम्' इत्युत्तरार्धस्य प्रागेव व्याख्याततत्वादत्र न व्याख्यानं कृतम् ॥१३॥

## उपनिषत्

**सम्भूतिं च विनाशं च यस्तद्वेदोभयꣳ सह ।**
**विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते ॥ १४ ॥**

## भाष्यम्

यो वेद संहृतिज्ञानाद्देहबन्धाद्विमुच्यते ।
सुखज्ञानादिकर्तृत्वज्ञानात्तद्व्यक्तिमाव्रजेत् ॥

सर्वदोषविनिर्मुक्तं गुणरूपं जनार्दनम् ।
जानीयान्न गुणानां च भागहानिं प्रकल्पयेत् ॥

न मुक्तानामपि हरेः साम्यं विष्णोरभिन्नताम् ।
नैव प्रचिन्तयेत्तस्मात् ब्रह्मादेः साम्यमेव वा ॥

मानुषादिविरिञ्चान्तं तारतम्यं विमुक्तिगम् ॥
ततो विष्णोः परोत्कर्षं सम्यज्ज्ञात्वा विमुच्यते ॥

इति कौर्मे ॥१४॥

**टीका**- तस्यैव विवरणार्थः 'सम्भूतिश्च' इति तृतीयो मन्त्रः । तस्यार्थः - **यो वेदेति** ॥ पूर्ववदावृत्त्यैव अन्वयः ॥ **संहृतिज्ञानादिति** ॥ तत्कर्तृत्व-ज्ञानादित्यर्थः । देहसम्बन्धस्य मृत्युत्वं तद्धेतुत्वात् ज्ञातव्यम् । सुखज्ञानादीति पूर्ववद्युक्तिसूचनार्थम् । मन्त्रत्रयार्थमुपसंहरति- **सर्वेति** ॥ तस्मादिति वक्ष्यमाणमादौ योज्यम् । 'हरेः साम्यं न चिन्तयेत्' इति वक्ष्यमाणेन अन्वयः । विष्णोरभिन्नतां मुक्तानां इत्यनुवर्तते । ब्रह्मादेः अमुक्तवर्गस्य साम्यमेव न किमुत अभिन्नताम् । वाशब्दो न चिन्तयेदित्यस्य अनुकर्षणार्थः । 'मानुषादि' इत्यत्र 'जानीयात्' इत्यनुवर्तते । ततः मुक्तामुक्तगणात्। तस्मादिति परामृष्टं हेतुं दर्शयति- **सम्यगिति** ॥ केचिदविद्यापदं कर्मवाचकं मत्वा एकैकनिन्दया मोक्षे ज्ञानकर्मणोः समुच्चयस्य प्रतिपादकमाद्यमन्त्रत्रयमिति मन्यन्ते । अन्ये तु विद्यापदं देवताज्ञानस्य वाचकं मत्वा स्वर्गादौ तस्य कर्मणा समुच्चयं प्रतिपादयतीदमित्याचक्षते । उत्तरं तु मन्त्रत्रयं सम्भूत्यसम्भूतिपदयोः

**उत्पत्त्यनुत्पत्तिमत्परत्वेन हिरण्यगर्भप्रकृतिवाचकत्वं गृहीत्वा तदुपासनयोः सत्यलोकादिप्राप्तौ समुच्चयस्य प्रतिपादकमिति प्रतिपन्नाः । तदेतदपव्याख्यानम् । पुराणवाक्येनैव अन्यथा व्याख्यातत्वात् । 'नान्यः पन्थाः' इत्यादिश्रुतिविरुद्धश्च समुच्चयपक्षः । केवलकर्मिणोऽपि अधिकः केवलज्ञानिनः संसार इति च 'कामकारेण चैके' (ब्र.सू.३.४.१५) इत्यादिविरुद्धम् । आत्मज्ञाननिष्ठाया एव अत्र उपक्रमादिभिः निर्णीतत्वात् देवताज्ञानकर्मणोः समुच्चयश्च न प्रकरणानुगुणः । 'कुर्वन्नेव' इति मन्त्रस्यापि निवृत्तकर्मविषयतया व्याख्यातत्वात् । 'सम्भूतिश्च विनाशश्च' इत्यत्र कुतोऽयं विनाश आपतित इति चिन्त्यम् । विनाशधर्मकत्वात् विनाशो हिरण्यगर्भ इति चेन्न । सम्भूतिपदेन पौनरुक्त्यात् । अव्याकृतोक्त्यभावाच्च । अकारलोपेन सम्भूतिरव्याकृतमित्यपूर्वं [१]व्याकरण-कौशलमित्यास्ताम् ॥ १४ ॥**

**वामन-** तच्चानेनेदमिति विवेचयति- **सम्भूतिं चेति** ॥ 'सर्वकर्तारम्' इत्यादिना तदभिप्रायं विवृणोति । मृतिकारणत्वात् मृत्युः देहबन्धः । अमृतं सुखादिसम्पत्तिः । अपिच इह तावत् 'सम्भूतिं च विनाशं च' इति जगतः सृष्टिसंहारावुदितौ । 'यस्मिन् सर्वाणि भूतानि' इति स्थितिः । 'ईशावास्यम्' इति नियमनम् । 'मनीषी' इति निखिलमनोनियामकत्वोक्त्या ज्ञानमज्ञानं चार्थत उक्तम् । 'नान्यथेतोऽस्ति' इति कर्मलेपोक्त्या बन्धः । 'अमृतमश्नुते' इति मोक्षः । एवं जगतः सृष्टिस्थितिसंहारनियमनज्ञानाज्ञानबन्धमोक्षाः परमपुरुषाद् विष्णोरुक्ताः । ते च तस्मिन्नुपसंहर्तव्या इत्याह- **तस्मात्सर्वगुणात्मकमिति** ॥ तत्रतत्र तदुक्तावप्यन्ते निगमनार्थत्वात् पुनस्तद्वचनम् । ये चात्र पुनः कायव्रणपापवेधादि-दोषाणामभावा उक्तास्तेषामप्युपसंहारः कार्य इत्याह- **सर्वदोषविनिर्मुक्तमिति** ॥ मूलरूपवन्निर्दोषगुणात्मकत्वमवतारेष्वपि सममित्याह- **गुणरूपमिति** ॥ ये पुनर्मनसो जवीयस्त्वादयस्तत्तद्गुणानामंशा उक्तास्तेषामपि हानिं न कल्पयेत् । 'अमृतमश्नुते' इत्युक्तस्य मुक्तजनस्य निर्दुःखानन्दादिरूपत्वात् भगवत्साम्यं तदैक्यं वा किं न स्यादित्याशङ्क्याऽह- **न मुक्तानामपीति** ॥ असम्भाव्यत्वात् नैव इत्यवधारणम् । अत एव ब्रह्मरुद्रादेः परस्परसाम्यमपि नैव चिन्तयेत् । एवं चेत् केभ्यः क उत्तमाः, क्व वा तत्पर्यवसानमित्याकाङ्क्षायामाह- **मानुषादीति** ॥

---

१. व्याख्यान ।

मानुषगन्धर्वादिषु विरिञ्चान्तेषु प्रायः शतगुणाधिक्येन तारतम्यं सुज्ञेयम् । तेभ्यो विष्णोः अत्यन्तानन्तगुणत्वेन परमोत्कर्षः सम्यज्ज्ञेयः । 'सम्भूत्याऽमृतमश्नुते' इत्येतद् व्याख्याति- **सम्यज्ज्ञात्वा विमुच्यत इति** ॥ एवं चात्र सत्यजगत्स्रष्टृत्वात् सत्याख्यस्य विष्णोर्विद्ययैव मोक्ष इति निर्धारितम् ॥ १४ ॥

**वादि**-'आदौ योज्यम्' इत्यत्र तस्माद्विष्णोरित्यर्थकथनाय तत्रापि तस्मादित्यस्यावश्यकत्वात् उपसंहारत्वज्ञापकपदस्यात्र अदर्शनात् आदावपि योज्यमिति भावः । 'अव्याकृतोक्त्यभावात्' इत्यत्र प्रागसम्भूतिपदेन न विद्यते सम्भूतिः यस्या इति असम्भूतिपदेन प्रकृतिमुक्त्वा इदानीं तत्स्थाने प्रयुक्तविनाश-पदेन हिरण्यगर्भोक्तौ प्रकृतिवाचकपदाभावादिति भावः । 'अकारलोपेन' इत्यत्र सम्भूतिपदे अकारप्रक्षेपं कृत्वा प्रकृतिमभिधाय पुनः तल्लोपे सति सम्भूतिपदमात्र-मुर्वरितमिति व्याख्यानस्य प्रसिद्धव्याकरणे अनुशासनाभावादपूर्वं व्याकरण-कौशलमित्युक्तम् । यद्यपि निरुक्तिमात्रे वर्णनाशादिकमुक्तम्, तथापि स्वापेक्षितलौकिकप्रयोगेषु वर्णविनाशादेः कथने घटपदमघटवाचकं पटपदमपट-वाचकं ऐक्यपदं चानैक्यवाचकं स्यादिति सर्वव्यवहारेषु सङ्करप्रसङ्ग इति भावः ॥१४॥

**श्रीनि- पूर्ववदावृत्त्येति** ॥ पूर्वमुक्तस्य सर्वकर्तारमित्यादेरावृत्त्या यो वेदेत्यस्यान्वयो ज्ञेय इत्यर्थः । 'विनाशेन मृत्युं तीर्त्वा' इत्येतत् 'देहबन्धाद्विमुच्यते' इति व्याख्यातम् । तत्र देहबन्धस्य कथं मृत्युत्वमित्यत उक्तम्- **तद्धेतुत्वादिति** ॥ मृत्युत्पादकत्वादित्यर्थः । सति हि देहबन्धे तद्वियोगरूपं मरणं जीवस्य भवतीति मृत्युहेतुत्वं देहस्येति भावः ॥ **युक्तीति**॥ संहर्तृत्वज्ञानेन देहबन्धसंहारो भवति । सुखज्ञानादिसृष्टिकर्तृत्वाज्ञानेन स्वस्यापि तव्यक्तीभवति । 'तं यथा यथोपासते' इति पूर्वमुक्तेरित्यर्थः ॥ **तस्मादितीति** ॥ **परामृष्टमिति** ॥ तज्ज्ञानस्य मोक्षहेतुत्वरूपं समुच्चेयम् । मोक्षे ज्ञानकर्मणोरिति शेषः ॥ **इति चेति** ॥ 'ततो भूय इव ते तमो य उ विद्यायां रताः' इत्यनेनोच्यते तत्सूत्रविरुद्धम् । तत्र ज्ञानिनः कामतश्चरणेऽपि तत्कृतबन्धाभावोक्तेरित्यर्थः ॥ **उपक्रमादिभिरिति** ॥ ईशावास्यमित्युपक्रमेण, आदिपदेन यस्मिन्नित्युपसंहारसङ्ग्रहः । तथा च देवताज्ञानं न प्रकरणानुगुणम्, दूरे तस्य कर्मणा समुच्चय इति भावः । ननु 'कुर्वन्नेव' इति मन्त्रे अज्ञस्य

यज्ञादिप्रवृत्तकर्मविधानादस्य च इन्द्रदेवताकत्वात् देवताज्ञानमपि प्रकृतमेवेति युक्तम् । तस्य कर्मणा स्वर्गादौ समुच्चयः कथमित्यत आह- **कुर्वन्नेवेतीति** ॥ **सम्भूतिपदेनेति** ॥ सम्यग्भवति उत्पद्यत इति सम्भूतिपदेन हिरण्यगर्भ इति व्याख्याततत्वात् । अव्याकृतं प्रकृतिः प्रकृतेरसम्भूतिशब्दवाच्यत्वेन सम्भूतिपदेन कथं प्रकृतिरायास्यतीत्यत अकारलोपेन इत्युक्तम् । छान्दसत्वादिति भावः ॥१४॥

**छलारी- पूर्ववदावृत्त्येति** ॥ सर्वगुणात्मकं सर्वकर्तारं सर्वसंहारकारक-मिति पूर्वेण यो वेदेत्यस्य पुनरन्वयेनेत्यर्थः । 'असम्भूत्या मृत्युं तीर्त्वा' इत्यस्य व्याख्यानं 'देहबन्धाद्विमुच्यते' इति भाष्यं घटयति- **देहसम्बन्धस्य मृत्युत्वमिति** ॥ 'सम्भूत्याऽमृतमश्नुते' इति मन्त्रव्याख्यानरूपे भाष्ये सृष्टिकर्तृत्वज्ञानादिति वक्तव्ये सुखज्ञानादिकर्तृत्वज्ञानादिति कथमुच्यत इत्यत आह- **पूर्ववदिति** ॥ 'यो वेद संहृतिज्ञानात्' इति पूर्ववाक्ये विष्णोः संहारकर्तृत्वोपासनारूपकारणेन तत्सदृशं लिङ्गशरीरबन्धनाशाख्यफलं यथा, तथा सम्भूतिशब्दवाच्यसृष्टिकर्तृत्वान्तर्गतसुखकर्तृत्वोपासनारूपहेतुना तत्सदृशस्वरूपा-भिव्यक्तिरूपफलं भवतीति युक्तिसूचनार्थमिति भावः ॥ **तस्मादिति परामृष्टं हेतुमिति** ॥ 'सम्यज्ज्ञात्वा विमुच्यते' इत्यत्र 'यतः' इति शेष इति भावः । तेन यतो निर्दोषत्वादि सम्यज्ज्ञात्वा विमुच्यते, तस्माद्विष्णोः निर्दोषत्वादि जानीयादिति पूर्वेणान्वयः सूचितो भवति ॥ **अविद्यापदं कर्मवाचकं मत्वेति** ॥ 'येऽविद्यामुपासत इत्यादौ' इति शेषः । विद्याशब्दस्य ज्ञानवाचकत्वात् कर्मणः ज्ञानविरुद्धत्वेन अविद्यापदवाच्यत्वादिति भावः । वस्तुतस्तु अविद्यापदस्य मिथ्याज्ञाने प्रयोगात्कर्मण्यप्रयोगात् मिथ्याज्ञानवाचकत्वमेव । न तु कर्मवाचकत्व-मित्यभिप्रेत्य मत्वेत्युक्तम् ॥ **देवताज्ञानस्य वाचकं मत्वेति** ॥ विद्याशब्दस्य सुबन्तस्य योगरूढिभ्यां प्रकृतस्य ज्ञानसामान्यवाचकत्वाद्देवताज्ञानवाचकत्वे प्रमाणाभावादिति भावः ॥ **उत्पत्त्यनुत्पत्तिमत्त्वेनेति** ॥ सम्यग्भूतिः भवनमुत्पत्तिर्यस्येति बहुव्रीहिः, न विद्यते सम्भूतिः यस्याः प्रकृतेरिति । उभयत्रापि बहुव्रीह्याश्रयणेनेति शेषः । पूर्वमन्त्रत्रये व्याख्यानद्वये प्रमाणविरोधमभिधाय ज्ञानकर्मसमुच्चयेन मोक्ष इति वादे दूषणान्तरमाह- **नान्य इति** ॥ अत्र ज्ञानातिरिक्तस्य कर्मादेः मोक्षसाधनत्वनिषेधादिति भावः ॥ **अधिकः**

**केवलज्ञानिनः संसार इति** ॥ अन्धंतमःशब्दस्य समुच्चयवादिना संसारार्थकत्वाङ्गीकारादिति भावः ॥ **विरुद्धमिति** ॥ 'कामचाराः कामभक्षाः' इत्यादिश्रुतौ सत्कर्मानुष्ठानरहितानां कामचारिणां ज्ञानिनामिमं देहमुत्सृज्य परात्परपुरमारम्भणमिति ब्रह्मप्राप्त्युक्तेरिति भावः । पूर्वमन्त्रत्रयस्य द्वितीयव्याख्यानं दूषयति- **आत्मेति** ॥ 'यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति' इत्यदौ आत्मशब्दोक्तेरिति शेषः । ननु 'कुर्वन्नेवेह कर्माणि' इत्यादौ कर्मण उपक्रमस्य दर्शनादुपक्रमे कर्माभावः कथमित्यत आह- **कुर्वन्नेवेतीति** ॥ प्रमाणेनैव व्याख्यातत्वात् काम्यकर्मविषयत्वाभावात् नोपक्रमस्य काम्यकर्मविषयत्वमिति भावः ॥ **अव्याकृतोक्त्यभावादिति** ॥ अव्याकृतं प्रकृतितत्त्वम् ॥ **अपूर्वेति** ॥ अल्लोपविधायकाभावादिति भावः । पृषोदरादित्वाश्रयणेनाल्लोपः किं न स्यादित्यत आह- **आस्तामिति** ॥ अयं भावः । एतस्य मन्त्रस्य प्रकृत्याद्यर्थकत्वसिद्धौ पृषोदरादित्वाश्रयणेनाल्लोपकल्पना, अल्लोपसिद्धौ च प्रकृत्याद्यर्थकत्वसिद्धिरिति अन्योन्याश्रयत्वमिति भावः ॥ १४ ॥

**सत्य- पूर्ववद्युक्तिसूचनार्थमिति** ॥ 'दुःखाज्ञानादिरूपिणः' इत्यत्रेवात्रापि सुखज्ञानादिप्राप्तिरूपप्रयोजनसिद्ध्यर्थं सुखज्ञानादीत्युक्तमित्यर्थः ॥ **'कामकारेण चैके' इत्यादीति** ॥ ननु देवताज्ञानस्य प्रकरणाननुगुणत्वेऽपि कर्म न प्रकरणाननुगुणम् । 'कुर्वन्नेव' इतिमन्त्रे काम्यकर्मणः प्रकृतत्वादित्यत आह- **कुर्वन्नेवेति मन्त्रस्यापीति** ॥ **अव्याकृतोक्त्यभावाच्चेति** ॥ प्रकृत्युक्त्यभावाच्चेत्यर्थः । अकारलोपेन सम्भूतिमितिपदं अव्याकृतोक्तिरूपं भविष्यतीत्यत आह- **अकारलोपेनेति** ॥ **व्याकरणकौशलमिति** ॥ अत्राकारलोपविधायकसूत्राभावात् व्याकरणशास्त्रकौशलमिति विपरीतलक्षणया परिहासः । व्याख्यानकौशलमिति वा परिहासः ॥१४॥

**नृसिंह-** मानुषादीत्यत्राव्यवहिततयोक्तं 'नैव प्रचिन्तयेत्' इत्यनुषज्यत इत्यवभासते, तथा च सति अशेषाम्नायस्मृतिगोचरस्वसिद्धान्तो व्याहन्येतेत्यत उक्तम्- **मानुषादीति** ॥ ननु तस्मादित्यनेनैव सम्यज्ज्ञानस्यैव मोक्षसाधनत्वादिति हेतोर्लब्धत्वात् सम्यज्ज्ञात्वेति व्यर्थमित्यत आह- **तस्मादितीति** ॥ **केवलकर्मिण इति** ॥ अविद्यापदस्य कर्मवाचकत्वं गृहीत्वा व्याख्याने

कर्ममात्रनिष्ठापेक्षया ज्ञानमात्रनिष्ठस्याधिकानर्थोऽभिहितो भवेत् । स च न शोभां बिभर्ति भगवन्मतविरोधात् । 'कामकारेण चैके' इत्यत्र भगवज्ज्ञानिनः कामतश्चरणं ह्यभ्यनुज्ञातं कर्मिणश्च तदभावादिति भावः । व्यख्यानान्तरं दूषयति- **आत्मज्ञानेति** ॥ यदुक्तं देवताज्ञानकर्मणोः स्वर्गादावेकैकनिन्दया समुच्चयं ब्रवीतीत्याद्यं मन्त्रत्रयमिति तदरमणीयम् । एतत्प्रकरणस्यात्मज्ञाननिष्ठापरत्वेन विद्यापदस्य देवताज्ञानवाचित्वे प्रकरणानानुगुण्यात् आत्मविद्यारतिप्रकरणत्वं कुतोऽस्यावसीयत इति चेत् उपक्रमे 'असुर्याः' इति मन्त्रेणापरमात्मविदां निन्दनस्य प्रकृतत्वात्, 'अनेजत्' इत्यादिना आत्मतत्त्वमुपदिश्य, 'यस्तु सर्वाणि' इत्यादिना तज्ज्ञानफलस्योक्तत्वाच्च एतत्प्रकरणमेव ज्ञापयतीति भावः ॥

ननु 'कुर्वन्नेव' इति मन्त्रेण कर्मणां विहितत्वादविद्यापदेन च तेषां ग्रहणात् कर्मणां च स्वर्गसाधनतया तत्समभिव्याहारेण विद्यापदमपि स्वर्गसाधनीभूत-देवताज्ञानं वदिष्यति । न चास्माकं मोक्षे समुच्चयपक्ष इव श्रुत्यादिविरोधोऽस्तीत्यत आह- **कुर्वन्नेवेतीति** ॥ न चाविद्यापदस्य कर्मपरामर्शकत्वे किञ्चिन्मानम् । स्वर्गादौ च कर्मसमुच्चयाभिधायीदमिति च निर्मूलम् । 'अमृतमश्नुते' इत्यमृतत्व-हेतुताश्रवणात् मुख्यसम्भवे चामुख्यायोगादिति च बोध्यम् । उत्तरमन्त्रत्रयाप-व्याख्यां निरस्यति- **सम्भूतिं चेति** ॥ सम्भूत्यसम्भूतिपदयोः हिरण्यगर्भप्रकृति-वाचकत्वे 'सम्भूतिश्चासम्भूतिश्च' इत्येव वक्तव्यम्, न तु 'सम्भूतिश्च च विनाशश्च' इति । प्रकृतेर्नित्यत्वेन विनाशशब्दस्य तत्परत्वासम्भवात् असम्भूतिपदस्य संहारकर्तृतापरत्वे तु न काप्यनुपपत्तिः । संहृतिविनाशपदयोः समानार्थत्वदिति हृदयम् ॥१४॥

**रघु**-'यो वेद' इत्यत्र वेदनकर्मानुक्तेराह- **पूर्ववदावृत्त्येति** ॥ सर्वगुणात्मकमित्याद्यावृत्त्या इत्यर्थः । यः सर्वसंहारकारकं भगवन्तं वेद सः संहृतिज्ञानेन बन्धाद्विमुच्यते इत्यसङ्गतिः । भगवज्ज्ञानस्य बन्धमोचकत्वेऽपि संहृतिज्ञानस्य तदभावात् विरोधश्चेत्यतः सुखज्ञानादीत्युत्तरभाष्यानुसारेण व्याचष्टे- **संहृतीति** ॥

ननु मन्त्रे 'मृत्युं तीर्त्वा' इति मृत्यूत्तरणं फलमुक्तम् । भाष्ये तु देहबन्धमोचनमतो वैरूप्यमित्यतो व्याख्यानव्याख्येयभावं घटयति-

**देहसम्बन्धस्येति** ॥ तद्धेतुत्वादिति वदता मृत्युशब्दस्य देहबन्धे लक्षणा, कार्यकारणभावः शक्यसम्बन्ध इत्युक्तं भवति । ननु 'सम्भूत्या' इति मन्त्रे सर्वकर्तारमिति पूर्वभाष्ये चाविशेषेण सर्वकर्तृत्वस्य प्रकृतत्वात् अत्र सुखज्ञानादीति विशिष्योक्तिः व्यर्थेत्यत आह- **सुखेति** ॥ **पूर्ववदिति** ॥ पूर्वभाष्ये सुखज्ञानादिरूपिण इति विशेषणमिवेत्यर्थः ॥ **युक्तिसूचनार्थमिति** ॥ अधिकारिणः सुखज्ञानादिव्यक्तिमत्त्वे सुखज्ञानादिकर्तृत्वेन भगवदुपासकत्वरूप-युक्तिसूचनार्थमित्यर्थः । यद्यपि अत्र 'सम्भूतिं च विनाशं च' इत्यादिपूर्वमन्त्रानु-सारेण सुखज्ञानादिकर्तृत्वेत्याद्युक्त्वा अनन्तरं संहृतिज्ञानादिकं वक्तव्यम् । न च 'विनाशेन मृत्युं तीर्त्वा' इत्युत्तरार्धानुसारेण भाष्यप्रवृत्तेः न दोष इति वाच्यम् । उत्तरार्धेऽपि पूर्वक्रमोल्लङ्घने निमित्ताभावात् । तथापि 'मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः' इत्यादिप्रमाणानुसारेण विशिष्टरूपेऽपि मोक्षे संसारनिवृत्तेः पूर्वभावित्वात् फलानुसारेण उत्तरार्धे क्रमोल्लङ्घनम् । तदनुसारेण प्रवृत्तत्वात् भाष्यस्य न तत्रापि कश्चिद्दोषः ॥

ततश्चायं मन्त्रार्थः । सम्भूतिं सुखज्ञानादिकर्तृत्वम् । विनाशं विनाशकर्तृत्वं, सर्वसंहारकत्वमिति यावत् । चशब्दौ अन्योन्यसमुच्चये । तदिदमुभयं योऽधिकारी सह एकपुरुषार्थसाधनत्वेन वेद उपास्ते, सः विनाशेन परमेश्वरस्य विनाशकर्तृत्वोपासनेन मृत्युं मृत्युकारणदेहादिबन्धं तीर्त्वा । सम्भूत्या सुखज्ञानादिकर्तृत्वोपासनेन अमृतं सुखज्ञानादिव्यक्तिमश्नुते प्राप्नोति । 'तं यथा यथोपासते' इति श्रुतेरिति । ननु उपसंहारज्ञापकाभावादुपसंहरतीत्यनुपपन्नमित्यत आह- **तस्मादिति** ॥ भाष्ये 'न गुणानां च भागहानिम्' इति ज्ञानानन्दादिगुणानां मध्ये ज्ञानेच्छाद्यङ्गीकृत्य आनन्दाद्यनङ्गीकारेण हानिं नैव प्रकल्पयेदित्यर्थः ॥ **वक्ष्यमाणमिति** ॥ 'न वै प्रचिन्तयेत्तस्मात्' इत्यत्र वक्ष्यमाणं तस्मादितिपदं सर्वदोषविनिर्मुक्तमित्यस्यादौ योज्यमित्यर्थः ॥ **हरेः साम्यं नेति** ॥ हरेः साम्यं नेत्यस्य चिन्तयेदिति वक्ष्यमाणेन अन्वय इत्यर्थः । 'न मुक्तानाम्' इति नञः सम्बन्धप्रदर्शनाय हरेः साम्यं नेत्यनुवादः कृतः । क्वचित् हरेः साम्यं चिन्तयेदिति वक्ष्यमाणेनान्वय इति पाठो दृश्यते । तत्र साम्यमित्यस्य चिन्तयेदिति वक्ष्यमाणेनान्वय इत्यर्थः । नेत्यस्य पूर्ववदेव सम्बन्धो ज्ञातव्यः । मुक्तानामित्यस्य

पूर्वत्रान्वितत्वादभेदस्य च प्रतिसम्बन्धिसापेक्षत्वादाह- **मुक्तानामित्यनुवर्तत इति** ॥

ननु साम्यमेवेत्यवधारणविरुद्धम् । ब्रह्मादेः साम्यमेव न चिन्तयेत् । अभिन्नतां तु चिन्तयेदित्यर्थप्रतीतेरित्यतो न अवधारणार्थत्वमेवशब्दस्य येनोक्तदोषः । किन्तु कैमुत्यार्थत्वमित्याह- **साम्यमेव किमुत अभिन्नतामिति** ॥ न चिन्तयेदित्यनुकर्षस्य वक्ष्यमाणत्वात् साम्यमेवेति यथाश्रुतानुवादः । साम्यमेव न किमुत अभिन्नतामिति पाठस्तु वक्ष्यमाणानुकर्षसिद्धवत्कारेणेति द्रष्टव्यम् । ननु न मुक्तानामित्यनेनैव ब्रह्मादिसाम्यस्य निषिद्धत्वात् पुनरुक्तिदोष इत्यत उक्तम्- **अमुक्तवर्गस्येति** ॥ ननु भाष्ये साम्यमेवेत्यस्य अन्वयाभावः । विकल्पाप्रसक्तेः वाशब्दवैयर्थ्यं चेत्यत आह- **वाशब्द इति** ॥ साम्यमेव नेति पाठे तु ननु साम्यमेव नेत्यनुवादो न युक्तः । नञोऽश्रवणात् वाशब्दवैयर्थ्यं चेत्यत आह- **वाशब्द इति** ॥ इत्यवतारणीयम् । अव्ययानामनेकार्थत्वादिति भावः । न वै प्रचिन्तयेदित्यन्वयभ्रमनिरासाय आह- **मानुषादीत्यत्रेति** ॥ 'विमुक्तिगं मानुषादिविरिञ्चान्तं तारतम्यम्' इत्यत्र विष्णोः परोत्कर्षमित्यत्र चेत्यर्थः । यद्यपि सन्निहितत्वात् प्रचिन्तयेदित्यनुवर्तत इति वक्तव्यम् । तथापि तस्य नञ्सम्बद्धत्वेनैव पूर्वत्रान्वितत्वात् नञ् परित्यागेन केवलस्यानुवृत्तेः अनन्यगतिकत्वाज्जानीयादित्यनुवर्तत इत्युक्तम् । ननु विष्णोः परोत्कर्षं जानीयादित्यन्तेनैवोपसंहारसिद्धेः सम्यज्ज्ञात्वा विमुच्यते इति व्यर्थमित्यत आह- **तस्मादिति परामृष्टमिति** ॥ अनेन यस्मात्परमेश्वरं सम्यज्ज्ञात्वा विमुच्यते तस्मात्सर्वदोषविनिर्मुक्तमित्यादिप्रकारेण जानीयादित्यर्थ इत्युक्तं भवति ॥

ननु मन्त्राणामुक्तार्थस्थापनाय अवश्यकरणीयस्य अपव्याख्याननिराकरणस्य भाष्येऽकरणात् न्यूनतेत्यतः तां परिहरिष्यन् ज्ञानकर्मसमुच्चयवादिनामपव्याख्यानमनुवदति- **केचिदिति** ॥ केचिज्ज्ञानकर्मणोः समुच्चयस्य प्रतिपादकमाद्यमन्त्रत्रयं इति मन्यन्त इत्यन्वयः । किं मायावादिवत् स्वर्गादिसाधनत्वेनेत्यत उक्तम्- **मोक्ष इति** ॥ तादर्थ्ये सप्तमी । मोक्षार्थं मोक्षसाधनत्वेनेति यावत् । एवं स्वर्गादौ इत्येतदपि व्याख्येयम् । नन्वाद्यमन्त्रे समुच्चयस्य साधनत्वप्रतिपादकपदाभावात् कथं तत्प्रतीतिरित्यत आर्थिकप्रतीत्यङ्गीकारान्न दोष इत्याशयेनोक्तमेकैकं

निन्दयति । ननु अर्थादपि न ज्ञानकर्मसमुच्चयसिद्धिः । अविद्यामात्रस्य विद्यामात्रस्य च निन्दितत्वेन अविद्याज्ञानसमुच्चयस्यैव सिद्धेः इत्यतः उक्तम्- **विद्यापदं कर्मवाचकं मत्वेति** ॥ अधुना मायावादिनामपव्याख्यानमनुवदति- **अन्ये त्विति** ॥ **विद्यापदमिति** ॥ अविद्यापदं कर्मवाचकं मत्वेति पूर्वन्यायेन सिद्धत्वान्नोक्तम् । किं तार्किकादिवत् मोक्षसाधनत्वेनेत्यत उक्तम्- **स्वर्गादाविति** ॥ **इदमिति** ॥ आद्यमन्त्रत्रयमित्यर्थः ॥

**उत्तरं तु इति** ॥'अन्धंतमः प्रविशन्ति येऽसम्भूतिमुपासते' इत्याद्युत्तरमन्त्र-त्रयं तु सत्यलोकादिप्राप्तौ प्राप्त्यर्थम् । तदुपासनयोः हिरण्यगर्भप्रकृत्युपासनयोः । समुच्चयस्य प्रतिपादकमिति प्रतिपन्ना इति सम्बन्धः । हिरण्यगर्भप्रकृतिवाचक-पदाभावात् कथमेतदित्यत उक्तम्- **सम्भूत्यसम्भूतिपदयोरित्यादि** ॥ यथोक्तं परेण । अधुना व्याकृताव्याकृतोपासनयोः स्वर्गादौ समुच्चिचीर्षया प्रत्येकं निन्दा क्रियत इत्यादि । एवमनूदितं व्याख्यानद्वयं निराकर्तुं प्रतिजानीते- **तदेतदिति** ॥ **पुराणवाक्येनैवेति** ॥ अतो न भाष्यकारस्य अपव्याख्याननिराकरणाभावप्रयुक्ता न्यूनतेति भावः । उभयसाधारणं दोषमुक्त्वा समुच्चयवादिनामसाधारणं दोषमाह- **नान्यः पन्थेत्यादीति** ॥ अयनाय मोक्षाय ज्ञानान्यः पन्थाः कर्मादिर्न विद्यत इति कर्मणो मोक्षसाधनताया निषिद्धत्वात् कर्मसमुच्चयपक्षः श्रुतिविरुद्ध इत्यर्थः । समुच्चयपक्षे प्रधानप्रमेयानुपपत्तिमभिधाय 'ततो भूय इव ते तमो य उ विद्यायां रताः' इति वाक्यार्थानुपपत्तिमप्याह- **केवलकर्मिण इति** ॥

एवं हि परेण व्याख्यातम् । ये अविद्यां कर्मोपासते ते अन्धंतमः सुखदुःखपुण्यपापात्मकं संसारं प्रविशन्ति ये विद्यायामेव ज्ञान एव रताः ते ततः केवलकर्मिप्राप्यसंसाराद् भूयो अधिकं तमः संसारं प्राप्नुवन्तीति । तदेतद्व्याख्यानं 'कामकारेण चैके' इत्यादिसूत्रेण तद्गृहीतया 'कामचाराः कामभक्षाः कामवादाः कामेनैवेमं देहमुत्सृज्य अथ परात्परमीयुरनारम्भणम्' इति श्रुत्या च विरुद्धम् । तत्र केवलज्ञानिनः संसारनिवृत्तेः उक्तत्वेन अधिकसंसारस्य दूरापास्तत्वात् । मायावादिपक्षेऽपि असाधारणं दोषमाह- **आत्मज्ञानेति** ॥ अत्र अस्यामुपनिषदि ॥ **निर्णीतत्वादिति** ॥ अत्राद्येन मन्त्रेण सर्वेषणापरित्यागेन आत्मज्ञाननिष्ठ-तोक्तेत्यादिना ग्रन्थेन परेण निर्णीतत्वादित्यर्थः। यद्वा भाष्यकारेण

निर्णीतत्वादित्यर्थः । सर्वेषामपि मन्त्राणां प्रमाणेन भगवत्परतया व्याख्यानेन आत्मज्ञाननिष्ठायाः निर्णीतत्वलाभात् । आत्मज्ञाननिष्ठायामुपक्रमादिकमपि यथायथं ज्ञातव्यम् । ननु देवताज्ञानस्य प्रकरणाननुगुणत्वेऽपि न काम्यकर्मणः प्रकरणाननुगुणत्वम् । 'कुर्वन्नेव' इति मन्त्रे तस्य प्रकृतत्वादित्यत आह- **कुर्वन्नेवेति मन्त्रस्यापीति** ॥ दूषणान्तरमाह- **सम्भूतिं चेति** ॥

कुतः कस्मादापतित इति अत्यन्तासङ्गतिज्ञापनाय परिहासः । अस्मत्पक्षे आद्यमन्त्रे सम्भूत्यामेवेति अवधारणेन द्वितीयमन्त्रे असम्भवशब्देन प्रकृतस्य संहर्तृत्वस्य अत्र मन्त्रे विनाशशब्देन अनुवादसम्भवेऽपि परेण मन्त्रत्रयस्य हिरण्यगर्भप्रकृतिपरत्वाङ्गीकारेण अत्र तदुभयग्रहणाय 'सम्भूतिश्चासम्भूतिश्च' इति वक्तव्यत्वेऽपि 'विनाशश्च' इति वचनमत्यन्तासङ्गतमित्यर्थः । विनाशग्रहणस्य प्रकृतोपयोगमाशङ्कते- **विनाशधर्मकत्वादिति** ॥ इदं च लक्षणबीजशक्य-सम्बन्धप्रदर्शनायोक्तम् ॥ **अव्याकृतोक्तीति** ॥ प्रकृत्युक्तीत्यर्थः । नन्वसम्भूति-शब्देन अव्याकृताकाशग्रहणान्न अव्याकृतोक्त्यभावो नापि पौनरुक्त्यम् । न च असम्भूतिशब्दाश्रवणं दोषः असम्भूतिशब्दगताकारलोपे सम्भूतिशब्दस्यैव असम्भूतिशब्दत्वादित्यत आह- **अकारलोपेनेति** ॥ यथोक्तं परेण । 'सम्भूतिश्च विनाशश्च' इत्यत्र अवर्णलोपेन निर्देशो द्रष्टव्यः' इति ॥ **व्याकरणकौशलमिति** ॥ व्याकरणस्य व्याख्यानस्य कौशलमपूर्वमिति वा । व्याकरणशास्त्रे कौशलमपूर्वमिति वा परिहासः ॥ १४ ॥

## उपनिषत्

**[१]हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।**
**तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥ १५ ॥**

---

१. सूर्यमण्डलनाम्ना तु पात्रेण स्वमुखं हरिः ।
पिधायैव जगत्सर्वं पश्यत्यमितविक्रमः ॥
उदकं पीयते तेन तमसस्त्रायते जगत् ।
यतोऽतः पात्रमुद्दिष्टं विद्वद्भिः सूर्यमण्डलम् ॥ इति ॥ (बृ.भा.७.१५.१)

## भाष्यम्

पात्रं हिरण्मयं सूर्यमण्डलं समुदाहृतम् ।
विष्णोः सत्यस्य तेनैव सर्वदाऽपिहितं मुखम् ।
तत्तु पूर्णत्वतः पूषा विष्णुर्दर्शयति स्वयम् ।
सत्यधर्माय भक्ताय ॥ १५ ॥

**टीका-** एवं प्राप्ताधिकारं शिष्यं प्रति परमात्मस्वरूपं निरूप्य तत्साक्षात्कारो मोक्षसाधनमिति अतीतग्रन्थेनोक्तम् । स च ईश्वरसाक्षात्कारो न श्रवणादिमात्रेण भवति । नापि मोक्षः साक्षात्कारमात्रेण । किन्तु भगवत्प्रसादादेवेत्यतोऽनुष्ठितश्रवणादिकेनापि साक्षात्कारार्थं प्राप्तसाक्षात्कारेणापि च मोक्षार्थं यथा भगवत्प्रार्थनं कार्यं तत्प्रकारप्रदर्शनार्थः 'हिरण्मयेन पात्रेण' इत्याद्युत्तरो ग्रन्थः । तत्र सगुणब्रह्मप्राप्त्यर्थमेकर्षिप्रभृतिशब्दाभिधेयमादित्यं प्रति मार्गयाचनमनेन क्रियत इत्याद्यन्यथाप्रतीतिनिरासाय तद्व्याख्यानरूपां स्मृतिं तावदुदाहरति- **पात्रमिति** ॥ 'सत्यस्य' इत्यनूद्य 'विष्णोः' इति व्याख्यातम् । 'मुखम्' इति समस्तविग्रहोपलक्षणम् । यद्यपि मन्त्रे 'अपावृणु' इति प्रार्थनम् । अत्र तु 'दर्शयति' इति स्वरूपकथनम् । तथापि मन्त्रतात्पर्यमात्रोक्तिरियमिति न दोषः । 'पुष पुष्टौ' इत्यतः पूर्णत्वेन पूषेत्युक्तम् । 'सत्यधर्माय' इत्यनूद्य 'भक्ताय' इति व्याख्यानम् ॥ १५ ॥

**वामन-** अथेदानीं न केवलं विद्यया मोक्षः । किन्त्वपरोक्षदर्शनादेवेत्यभिप्रायेण तद्दर्शनोपायं प्रार्थयति- **हिरण्मयेनेति** ॥ तदभिप्रायं 'पात्रम्' इत्यादिब्रह्माण्डवचनेन प्रपञ्चयति । जगतः पातृत्वात् पात्रम् । श्रोतृत्वाच्छ्रोत्रमितिवत् । उदकं पिबति त्राति च जगदिति वा पात्रं तदुच्यते । हितं चेदं रमणीयं चेति हिरण्मयम् । सद्रूपं जगन्नियच्छतीति सत्यो विष्णुः । सुखपूर्णत्वात् पूषा च । तत् मुखं सूर्यमण्डलेन अपिहितम् । सत्यधर्माय त्वद्भक्ताय त्वन्मुखावरकं तत् मण्डलं त्वमेवापावृणु । तस्य त्वन्मुखदृष्टये ॥ १५ ॥

**वादि-** 'दर्शयतीति स्वरूपकथनम्' इत्यत्र प्रार्थनार्थकलोटोऽभावात् स्वरूपसङ्कीर्तनमात्रमित्युक्तम् । इदमप्युपलक्षणम् । 'अपावृणु' इति पदस्य फलितकथनं चेत्यपि द्रष्टव्यम् ॥ १५ ॥

**श्रीनि**- मोक्षार्थं यद्यपि अपरोक्षज्ञानात् लिङ्गभङ्गरूपो मोक्षो नियतः । तथापि आनन्दाभिवृद्धिरूपमोक्षार्थमिति ज्ञेयम् । पिबति रसान् वसन्तादिकाले स्वरश्मिभिः भूरसान् पिबति, अन्धकाराख्यतमोनाशनेन जगत् त्रायते रक्षतीत्यर्थः । यथोक्तं बृहद्भाष्ये सप्तमाध्याये आदित्यब्राह्मणे-

उदकं पीयते तेन तमसस्त्रायते जगत् ।
यतोऽतः पात्रमुद्दिष्टम्................. ॥ (बृ. भा ७-१५)

इति व्याख्याने सत्यधर्मेति पदस्येति शेषः । पूषन् पुष्टिः पूर्णता, स्वरूपतः । नित्यत्वस्वातन्त्र्यादिसङ्ग्रहः ॥ १५ ॥

**छलारी**- ननु 'अपावृणु' इत्यस्य 'तद्भगवत्स्वरूपं दर्शयति' इति तात्पर्यकथनमिति भावः ॥ **पुष पुष्टाविति** ॥ 'श्वन्नुक्षन्पूषन्मघवन्' इति उणादिसूत्रेण कनिन्प्रत्ययान्त उपधादीर्घश्च पूषन्शब्दो निपातित इति भावः ॥१५॥

**नृसिंह- अतीतग्रन्थेनेति** ॥ 'आत्मन्येवानुपश्यति' इत्यनेन 'दृशिर् प्रेक्षणे' इति धातुव्याख्यानादित्यर्थः । श्रवणादेरव्यक्तस्वभावेश्वरसाक्षात्काराङ्गत्वमात्म-तत्त्वोपदेशेनैव ज्ञायते । अन्यथा साक्षात्कारस्यैव मुक्तिहेतुतया तेनैव तल्लाभे उपदेशनैष्फल्यादिति बोध्यम् ॥ **उत्तरो ग्रन्थ इति** ॥ 'अग्ने नय' इत्यतः प्राग्दर्शनार्थं भगवत्प्रार्थनं तेन च मन्त्रेण मोक्षार्थमिति ज्ञातव्यम् ॥ **मुखमितीति** ॥ 'यत्ते रूपं कल्याणतमम्' इति उत्तरत्र वक्ष्यमाणत्वादिति भावः ॥ १५ ॥

**रघु**- ननु हिरण्मयेनेत्यादिमन्त्रस्यैव व्यर्थत्वात्तद्व्याख्यानपरं भाष्यं सुतरामनर्थकमित्यत उक्तार्थानुवादेन सङ्गतिकथनपूर्वकमुत्तरमन्त्रसन्दर्भ-प्रतिपाद्यमाह- **एवमित्यादिना** ॥ **अतीतग्रन्थेनोक्तमिति** ॥ 'यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति' इत्याद्यतीतग्रन्थेनेत्यर्थः ॥ **न श्रवणादिमात्रेणेति** ॥ अव्यक्तस्वभावस्य भगवतः प्रयत्नशतेनापि साक्षात्कर्तुमशक्यत्वस्य 'अपि संराधने प्रत्यक्षानुमानाभ्याम्' (ब्र.सू.३.२.२४) इत्यादौ उक्तत्वादिति भावः ॥ **नापि मोक्ष इति** ॥ राजादिसाक्षात्कारमात्रेण निगडमोक्षादर्शनादिति भावः । तर्हि साक्षात्कारशास्त्रस्य मोक्षशास्त्रस्य च अप्रामाण्यं स्यादित्याशयेन शङ्कते-

**किन्त्वति** ॥ उत्तरमाह- **भगवदिति** ॥ 'अतोऽनन्तेन तथा हि लिङ्गम्' (ब्र.सू.३.२.२७) इत्यादौ प्रसादस्य साक्षात्कारसाधनतायाः 'ततो ह्यस्य बन्धविपर्ययौ' 'भवपाशाच्च मोचकः' 'यस्य प्रसादात्' इत्यादौ प्रसादस्य मोक्षसाधनतायाश्च प्रमितत्वादिति भावः ॥ **उत्तरो ग्रन्थ इति** ॥ 'अग्ने नय' इत्यनेन मोक्षार्थं प्रार्थनमितरेण साक्षात्कारार्थमिति विवको द्रष्टव्यः ॥ **तत्रेति** ॥ मन्त्रस्यावश्यकत्वे सिद्धे इत्यर्थः ॥ **एकर्षिप्रभृतिशब्दाभिधेयमिति** ॥ यद्यपि पूषन्नित्यादिशब्दाभिधेयमिति वक्तव्यं मन्त्रे तस्यैव आदित्वात्, परेणापि जगतः पोषणात् पूषा रविरित्युक्तत्वाच्च । तथापि तस्य आदित्यवाचकतायाः प्रसिद्धत्वात् अनुपादानम् । यद्वा पूषञ्छब्दस्य आदित्ये प्रसिद्धत्वेन कथञ्चित् तच्छब्दाभिधेयत्वसम्भवेऽपि एकर्ष्यादिशब्दाभिधेयत्वमादित्यस्य अप्रामाणिकमिति दूषणसूचनायातदादित्वेन ग्रहणं कृतमिति द्रष्टव्यम् ॥ **इत्याद्यन्यथाप्रतीतीति** ॥ मन्त्रप्रतिपाद्यान्यथाप्रतीतिरियम् । आदिशब्देन मन्त्रगतसत्यादिपदार्थान्यथाप्रतीतिर्ग्राह्या । स्ववचनेनापि व्याख्यास्यमानत्वात् तावदित्युक्तम् । विष्णुविशेषणत्वप्रतीतिनिरासायाह- **सत्यस्येत्यनूद्येति** ॥ अनेन सत्यस्य आदित्यमण्डलस्येति व्याख्यानं निरस्तं भवति । मुखमात्रस्य अपिहितत्वानुपपत्तेः 'यत्ते रूपं कल्याणतमम्' इत्युत्तरग्रन्थानुरोधाच्च आह- **समस्तविग्रहोपलक्षणमिति** ॥ अनेन मुखं द्वारमिति व्याख्यानमपाकृतं वेदितव्यम् । अत्र सूर्यमण्डले साक्षात्कारयोग्यानां तदमुख्यमावरणम् । मुख्यं तु अविद्यादिकमेव । अत एव 'तत्त्वं पूषन्नपावृणु' इत्यनेन सूर्यमण्डलाख्यावरणापगमं प्रार्थयित्वा 'व्यूह रश्मीन् समूह तेजः' इति स्वरूपज्ञानादिविस्तारप्रार्थनेन अविद्याद्यावरणापगमप्रार्थनमुपपद्यते । अन्यथा तस्य व्यर्थत्वात् । अत एव च उत्तरटीकायां रश्मितेजःशब्दौ स्वरूपज्ञानादिपरत्वेन व्याख्यातौ । सूर्यमण्डलस्यैवावरणत्वे तु तद्व्याख्यानं विरुद्ध्येतेति । पूर्णत्वलाभाय धातुसूत्रं पठति- **पुष पुष्टावितीति** ॥ पुष पुष्टावित्यतः कनिन् प्रत्यये कित्वाद्गुणाभावे निर्वचनत्वे धातोः दैर्घ्ये पूषन्निति भवति । अनेन जगतः पोषणात् पूषेति व्याख्यानमपास्तम् । भक्तविशेषणत्वभ्रान्तिं परिहरति- **सत्यधर्मायेत्यनूद्येति** ॥ १५ ॥

उपनिषत्

[1]पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् समूह तेजः। यत्ते रूपं कल्याणतमं तत्ते पश्यामि ॥ १६ ॥ (योऽसावसौ पुरुषः सोऽहमस्मि) ॥ १६ ॥

भाष्यम्

............प्रधानज्ञानरूपतः।
विष्णुरेकऋषिर्ज्ञेयो यमो नियमनाद् हरिः ॥
सूर्यस्स सूरिगम्यत्वात्प्राजापत्यः प्रजापतेः ।
विशेषेणैव गम्यत्वात् ॥ १६ ॥
...............अहं चासावहेयतः ।
अस्मि नित्यास्तितामानात्सर्वजीवेषु संस्थितः ।
स्वयं तु सर्वजीवेभ्यो व्यतिरिक्तः परो हरिः ।
स क्रतुर्ज्ञानरूपत्वात् अग्निरङ्गप्रणेतृतः ॥

सत्यं ब्रह्म हृदये धारयतीति सत्यधर्मा । एकः असौ शब्दः प्राणे स्थित इति ॥ १६ ॥

**टीका-** एकशब्दस्य प्रधानवाचकत्वात् 'ऋष ज्ञाने' इत्यतश्च प्रधानज्ञानरूपत्वत एकर्षिरित्युक्तम् । प्राधान्यं च ज्ञानस्य सर्वविषयत्वादिना ज्ञातव्यम् । नियमनात् 'सर्वस्य' इति शेषः । 'सूर्यस्स सूरिगम्यत्वात्' इत्यनेन

---

१. पूषा पूर्णत्वतो विष्णुः दृष्टये विष्णुधर्मिणः।
स्वमुखं प्रकाशयेदेकं नान्यथा तु कथञ्चन ॥
नान्यो यत्तादृशो ज्ञाता तस्मादेकऋषिर्हरिः ।
यमो नियमनात्प्रोक्तः सूर्य ऊरीकृतेरयम् ॥
ज्ञेयः प्रजापतेरेव प्राजापत्यस्ततः स्मृतः ।
प्राणे स्थितो यः पुरुषः सोऽसावहमिति स्मृतः ॥
अहेयत्वादसुत्वाच्च मेयत्वाच्चास्मिनामकः । (बृ.भा.७.१५.२)

**सूरिशब्दोपपदस्य याते रूपमिदमित्युक्तं भवति । प्रजापतेः हिरण्यगर्भस्यायं प्राजापत्य इत्यभिसन्धाय सम्बन्धो दर्शितः ॥ प्रजापतेः गम्यत्वादिति ॥ तर्हि 'सूर्यः' इत्यनेन गतार्थत्वमित्यत उक्तम्- विशेषेणैवेति ॥ एतेन प्रजापतेरपत्यमिति व्याख्यानं निरस्तं भवति ॥ १६ ॥**

**वामन-** स्वभक्तान् पुष्णातीति च पूषा । प्राजापत्यः विरिञ्चगम्यः । मण्डलस्यापावरणप्रकारः कथमित्याकाङ्क्षायामाह- **व्यूहेति** ॥ तस्य रश्मीन् इतस्ततो व्यूह विभज । यत् तेजोरूपं मण्डलं तत् समूह मध्यतो निर्भिन्धि । यत् कल्याणतमं त्वद्रूपं तत् त्वदनुग्रहादेव पश्यामि । योऽसौ विष्णुरसुशब्दिते मुख्यप्राणे स्थितः । पूर्णषड्गुणत्वात् पुरुषाख्यः । स भगवान् अहेयत्वादहंनामा । अस्तीत्येव नित्यं प्रमितत्वादस्मिनामकश्च । किञ्च अहमिति वेद्येषु जीवेषु नियामकत्वेन स्थितत्वाच्च 'अहमस्मि' इति व्यवहारो विष्णावुपपन्न इत्यभिप्रायेणाऽह- **सर्वजीवेषु संस्थित इति** ॥ अमुष्मिन्नमुष्मिन् स्थितत्वाच्च 'असावसौ' इति स उच्यते । तस्मात् सर्वजीवगतत्वं चात्रैवोक्तम् । 'अहं स पुरुषोऽस्मि' इति जीवेशैक्यमाशङ्क्य परिहरति- **स्वयं त्विति** ॥ जीवेशभेदे युक्तिमाह- **पर इति** ॥ स्वातन्त्र्यादिभिरत्यन्तविलक्षणत्वात् परश्चेत्यर्थः । नच जीवसाम्यमीशस्याऽशङ्क्यम् । परो हरिः इत्युत्तमत्वेन विशेषणात् ॥ १६ ॥

**वादि-** 'सर्वविषयत्वादिना' इत्यत्र निरवधिकसर्वविषयत्वेनेत्यर्थः । 'सूरिशब्दोपपदस्य' इत्यत्र निरुक्तत्वादिकारलोपः । अन्यथा सूरियः इति स्यादिति ज्ञेयम् ॥ १६ ॥

**श्रीनि- यातेरिति** ॥ तथा च सूरिशब्दोपपदात् 'या प्रापणे' इत्यस्मात् कप्रत्यये ककारलोपे कित्वात् 'आतो लोप इटि च' (सि.कौ.२३७२) इति धात्वाकारलोपे छान्दसत्वादिकारलोपे सूर्येति रूपम् ॥ **गतार्थमिति** ॥ सूर्यपदेन सूरिगम्यत्वोक्तेः । प्रजापतेरपि सूरिशब्दोक्तज्ञान्यन्तःपातित्वेन तद्गम्यत्वमपि प्राप्तमेवेत्यर्थः ॥ १६ ॥

**छलारी- एकशब्दस्येति** ॥ 'एकं तु केवले श्रेष्ठे' इति विश्वोक्तेः ॥ **सूरिशब्दोपपदस्येति** ॥ 'धीमान् सूरिः कृती कृष्टिः' इत्यमरोक्तेः । 'विद्वदर्थकस्य' इति शेषः । तथा च 'या प्रापणे' इत्यत औणादिककप्रत्यये

'आतो लोप इटि च' इत्याकारलोपे पृषोदरादित्वात् सूरिशब्दान्तलोपे सूर्येति रूपमिति भावः ॥ **अयं प्राजापत्य इति** ॥ 'तस्येदम्' (सि.कौ.१५००) इत्यधिकारे 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः'(सि.कौ.१०७७) इति पत्युत्तरपदात् ण्यप्रत्यय इति भावः ॥ १६ ॥

**नृसिंह**- सर्वविषयत्वादिनेत्यत्र 'परमतस्सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः' (ब्र.सू.३.२.३२) इत्यधिकरणार्थपर्यालोचनया आदिशब्दार्थः सुगम एव । निरतिशयस्पष्टत्वं चादिशब्दार्थ इति ज्ञातव्यम् । प्रजापतिगम्यत्वं प्राजापत्यशब्दारूढं न प्रतीयते । अत आह- **प्रजापतेरिति** ॥ १६ ॥

**रघु- प्रधानज्ञानरूपत्वत इति** ॥ अनेन भावप्रधानो निर्देश इत्युक्तं भवति । एतेन एक एव ऋषतीत्येकर्षिरित्यपास्तम् । रमादिव्यावृत्त्यर्थं प्राधान्यं व्याचष्टे- **प्राधान्यं चेति** ॥ आदिपदेन निरतिशयस्पष्टत्वादेः ग्रहणम् । प्रसिद्धयमस्यापि यत्किञ्चिन्नियामकत्वादाह- **सर्वस्येति शेष इति** ॥ **सूरिशब्दोपपदस्य यातेरिति** ॥ तृतीयान्ते सूरिशब्दे उपपदे 'या प्रापणे' इत्यस्मात् 'आतोऽनुपसर्गे कः'(सि.कौ.२९१५) इति कर्मणि कप्रत्यये 'आतो लोप इटि च' इत्याकारलोपे निर्वचनत्वादुपपदेकारलोपे सूर्य इति रूपमित्यर्थः । ननु 'आतोऽनुपसर्गे कः' इति सूत्रस्य काशिकायामाकारान्तेभ्योऽनुपसर्गेभ्यः कर्मण्युपपदे कप्रत्ययो भवतीति व्याख्यातत्वादत्र कर्मण उपपदस्याभावात् कथमनेन कप्रत्ययः । किञ्च 'कर्तरि कृत्' (सि.कौ.२८३२) इति परिभाषया कर्तर्येव कप्रत्ययस्य गां ददातीति गोद इत्यादाविव सम्भवेऽपि इह सूरिगम्यत्वादिति भाष्यानुसारेण कर्मणि तदयोगादिति चेत्सत्यम् । छन्दस्त्वेनात्र उपाधिद्वयव्यभिचारस्यादोषत्वात् । सम्मतश्चैतट्टीका-कारस्य । द्वितीयाध्याये 'आ नो भज परमेषु'(ऋ.सं.१.२७.५) इत्यस्यामृचि 'अन्ते मोक्षे मितत्वेन ज्ञानमन्तममुच्यते' इति भाष्यव्यख्यानावसरे अन्ते संसारस्येति शेषः । तस्यार्थो मोक्ष इति तादर्थ्ये सप्तमी । मोक्षसाधनतयेति यावत् । मितत्वेन प्रमितत्वेन । 'आतोऽनुपसर्गे कः' इति टीकायामुक्तत्वात् । तत्र हि सप्तम्यन्ते अन्तशब्दे उपपदे 'माङ्माने' इत्यस्मात् कर्मणि कप्रत्ययोऽभिमतः । न च असौ उक्तोपाधिद्वयस्याव्यभिचारित्वे सम्भवतीति ।

यद्वा 'सुपि स्थः' (सि.कौ.२९१६) इति सूत्रव्याख्यानावसरे काशिकायामत्र योगविभागः कर्तव्यः । सुपि आकारान्तेभ्यः कप्रत्ययो भवति । द्वाभ्यां पिबतीति द्विप इत्युक्तत्वादत्रापि योगविभागेनाकर्मणि सूरिशब्दे उपपदे यातेः कर्मणि कप्रत्यये बाधकाभावात् । न च योगविभागाश्रयणेन उपपदनियमाभावेऽपि 'कर्तरि कृत्' इति परिभाषया कर्तर्येव कप्रत्ययः प्राप्नोति न कर्मणीति वाच्यम् । योगविभागस्य इष्टसिद्ध्यर्थत्वेन कर्तरीत्यननुवृत्त्या कर्मण्यपि तत्सम्भवात् । अथवा 'ग्रहवृदृनिश्चिगमश्च' (सि.कौ.३२६४) इत्येतत्सूत्रीयात् घञर्थे कविधानमिति वार्तिकादिह कर्मणि कप्रत्ययाङ्गीकारात् । न च घञर्थे कविधानमित्युक्त्वा स्थास्नागापाव्यधिहनियुध्यर्थम्' इत्युक्तत्वेन वार्तिकस्यापि स्थास्नादिषु नियमितत्वात् कथं तेनापि यातेः कप्रत्यय इति वाच्यम् । अभियुक्तप्रयोगानुसारेणास्यापि तत्रोपसङ्ख्येयत्वात् । अत एव सुधायां 'मायामात्रमिदं द्वैतम्' (मां.उ.१.१७) इत्येतद्व्याख्यानावसरे घञर्थे कविधानमिति कर्मणि कप्रत्यय इत्युक्तमिति ध्येयम् । एतस्यैव सूर्यशब्दस्य 'सूर्य ऊरीकृतेरयम्' इति बृहद्भाष्ये कृतस्य व्याख्यानान्तरत्वान्न दोषः । ननु 'प्रजापतेः गम्यत्वात्प्राजापत्यम्' इति व्याख्यानमयुक्तम् । 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इति प्राग् दीव्यतीयेषु विहितस्य ण्यप्रत्ययस्य सम्बन्धार्थे विधानेऽपि गम्यत्वार्थे अविधानादित्यतः तात्पर्यार्थत्वेन भाष्यं योजयति- **प्रजापतेरिति** ॥ **अभिसन्धायेति** ॥ सम्बन्धार्थे ण्यप्रत्ययमभिप्रेत्येत्यर्थः ॥ **तर्हीति** ॥ सूर्यशब्देन सूरिमात्रगम्यत्वोक्त्या हिरण्यगर्भगम्यत्वस्यापि प्राप्तत्वादिति भावः ॥ १६ ॥

## उपनिषत्

## योऽसावसौ पुरुषः सोऽहमस्मि ॥ १६ ॥

## भाष्यम्

**...............अहं चासावहेयतः ।**
**अस्मि नित्यास्तिततामानात्सर्वजीवेषु संस्थितः ।**
**स्वयं तु सर्वजीवेभ्यो व्यतिरिक्तः परो हरिः ।**
**स क्रतुर्ज्ञानरूपत्वादग्निरङ्गप्रणेतृतः ॥**

**सत्यं ब्रह्म हृदये धारयतीति सत्यधर्मा । एकः असौ शब्दः प्राणे स्थित इति ॥ १६ ॥**

**टीका-** अहेयतः अहेयत्वतः । न हीयत इत्यहमित्यर्थः । **नित्यास्तितामानादिति** ॥ नित्यसत्त्वेन प्रमितत्वादित्यर्थः । अनेन 'अस भुवि' 'माङ् माने' इत्येतयोरिदं रूपमित्युक्तं भवति । अहमस्मिशब्दोक्तत्वेऽपि न जीवैक्यं हरेराशङ्कनीयमित्याह- **स्वयं त्विति** ॥ सर्वजीवेभ्यो व्यतिरिक्तोऽपि अहेयत्वादियोगेनैव अहमस्मिशब्दाभ्यामुच्यत इत्यर्थः । एतेन 'नाहं त्वां भृत्यवद्याचे किं नाम योऽसावादित्ये पुरुषः सोऽहमस्मि' इत्यपव्याख्यानमित्युक्तं भवति । अहमस्मिशब्दाभिधेयत्वे हरेर्मूर्तिनियमोऽपि अस्तीत्याह- **सर्वजीवेष्विति** ॥ उपासकेष्वित्यर्थः । उपलक्षणं चैतत् । पूषादिशब्दैरपि आदित्याद्यन्तर्गत एवोच्यते । अधिकारियोग्यताभेदेन खलु नानाप्रतीकेषु भगवदापरोक्ष्यमत्र प्रार्थ्यते । 'क्रतुर्मतिर्मनीषा' इत्यभिधानात् 'स क्रतुर्ज्ञानरूपत्वात्' इत्युक्तम् । अङ्गं शरीरं अप्रधानं जगद्वा नयतीत्यग्निरित्यर्थः । एवं पुराणवाक्येन तात्पर्यतो व्याख्यातान् मन्त्रानिदानीं स्ववाक्येन विशदयन् सत्यधर्मपदं कथं भक्तस्य वाचकमित्यतः तन्निर्वक्ति- **सत्यमिति** ॥ 'भक्त उच्यते' इति शेषः अत्र सत्यं ब्रह्म धारयतीति सत्यधर्मेत्युक्ते कथमनाधारं ब्रह्मायं धारयतीति शङ्का स्यात्तन्निवृत्यर्थं हृदये धारयतीत्युक्तम् । हृदये ब्रह्मधारणञ्च आदरनैरन्तर्योपेतं तद्ध्यानादिकमेव । तच्च भक्तस्यैव सम्भवतीति भावः । सत्यस्य च 'यथाभूतस्य धर्मस्य अनुष्ठाता' इति व्याख्याने 'सत्यस्यापिहितम्' इति प्रकृतपरित्यागो दोषः ॥ १६ ॥

(हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥)

ततश्चायमर्थः । हिरण्मयमिव हिरण्मयं ज्योतिर्मयम् । पिबति रसान् त्रायते च जगदिति पात्रम् । तेन हिरण्मयेन पात्रेण सूर्यमण्डलेन । सत्यस्य सद्गुणपूर्णस्य आदित्यमण्डलान्तर्गतस्य तव । मुखं पिहितमस्ति । हे पूषन् तद्वपुः त्वं सत्यधर्माय त्वद्विषयध्यानादिमते । मह्यं दृष्टये मम त्वद्दर्शनसिद्ध्यर्थमिति यावत् । अपावृणु अपगतावरणं कुरु ॥

(पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन्समूह ।
यत्ते रूपं कल्याणतमं तत्ते पश्यामि ॥)

**हे पूषन् एकर्षे यम सूर्य प्राजापत्य मदीयान् रश्मीन् व्यूह । तेजश्च समूह । स्वरूपं बाह्यञ्च मदीयज्ञानं विस्तारयेति यावत् । तथा च यत्ते रूपं कल्याणतमं तत् ते प्रसादादहं पश्यामीति । आदित्यरश्म्यादीनामपगमनादिना तदन्तर्गतब्रह्मप्रतीत्यसम्भवात् आदित्यरश्म्यादिविषयं व्याख्यानं न युक्तम् ॥**

**(योऽसावसौ पुरुषः सोऽहमस्मि ॥)**

**योऽसावसौ पुरुष इत्यत्र द्विरसाविति किमर्थमित्यत आह- एक इति ॥ असौ शब्दोऽसाविति शब्दः । इति 'वक्ति' इति शेषः । यद्यसुः प्राणः तस्मिन्नित्यर्थः स्यात् तर्हि अस्यान्वयो नास्ति । क्रियापेक्षत्वात् अधिकरणस्य इत्यतः क्रियाध्याहारेणान्वयं दर्शयति- स्थित इति ॥ असावसाविति वीप्सार्थतया किं न व्याख्यायत इति चेन्न । एवं व्याख्याने प्राणाख्यप्रतीकान्तरस्यापि उक्तिलाभात् । एकेनापि शब्देन वीप्सासिद्धेः। तथा च योऽसौ प्रसिद्धोऽसौ प्राणेस्थितः पुरुषः स एव अहेयत्वनित्यसत्ता-मानाभ्यामहमस्मिशब्दाभिधेयः । तं च पश्यामीति वाक्यार्थः । अथवा पूषादिशब्दैः उपलक्षणया प्राणाद्यनेकप्रतीकस्थत्वं विष्णोरुक्तम् । तत्र भेदशङ्कायामिदमाह सर्वप्रतीकेषु स्थित एक एवेत्यर्थः ॥ १६ ॥**

**वादि**- 'सोहऽमस्मीत्यपव्याख्यानम्' इत्यत्र एवमभेदपरतया व्याख्याने जीवब्रह्मणोरैक्यमेकस्मिन् प्रार्थ्यप्रार्थकभावायोगाद्युक्तिविरुद्धम् । इदानीं व्यावहारिकभेदोऽस्ति, मुक्तौ ऐक्यप्राप्तेः उभयोपपत्तिरिति तु अस्मीति लटा विरुद्ध्यते । तस्य वर्तमानैक्यप्रतिपादकत्वात् 'वर्तमाने लट्' । एतेन 'अहं ब्रह्मास्मि' 'तत्त्वमसि' इत्यादावपि अनुपपत्तिर्दर्शिता । किञ्च जीवस्य स्वदेहपाते सति यः श्वासनियामको वायुः, अनिलं अकाराख्यः परमात्मा निलं निलयनं आधारो यस्य तदनिलम्, तस्य वायोः स्वरूपम्, अमृतमिति वायोरमृतत्वमुक्त्वा तदाधारतया अनिलमित्यत्र अकारपदेनोक्तस्य तदाधारस्य हरेः सुतराममृतत्वञ्चार्थत उक्तम् । अथ मरणानन्तरं इदं मम शरीरं भस्मान्तं भवतीति स्वस्य मृतत्वोक्तेश्च कथं मृतामृतयोः ऐक्यं स्यात् ?

प्राक् ब्रह्मणो 'अकायमव्रणम्' इति 'शुद्धमपापविद्धम्' इति च प्राकृतदेहो-पेताशुद्धपापविद्धजीवेभ्यो वैलक्षण्योक्तेश्च कथमभेदः ? 'यत्ते रूपं कल्याणतमम्'

इति कल्याणतमपदेन भगवतो जीवेषु असम्भावितज्ञानादिगुणभरितातिशोभन-दिव्यदेहकथनाच्च कथमभेदः? 'तद्धावतोऽन्यानत्येति तिष्ठत्' इति भगवतः सर्वगतत्वस्य अनन्तमूर्तिग्रहणाख्याचिन्त्यशक्त्या एकमूर्त्या स्थितेः बहुमूर्तिभिश्च परितो धावत्सकलजीवात्ययनाख्यविचित्रसामर्थ्यस्य च कथनात् । अणुभ्योऽ-समर्थेभ्यश्च जीवेभ्यो महासमर्थस्य सर्वगतस्य हरेः कथमभेदो भवेत्? न हि कुण्डलिनामधीश्वरोऽनन्तः डुण्डुभो भवति । नापि घटो गगनं भवति । अपि च तस्मादन्यदेजति तन्नेजतीत्युपक्रम एव भयाभयाख्यविरुद्धधर्मकथनाच्च कथमेकता स्यात्?

न हि भवति भीरुहरिणशिशुः क्वापि भयरहितो हर्यक्षः । तस्मादुपनिषद-भिमानिनी सकलजगतो माता मङ्गलदेवता लक्ष्मीः 'यो नः पिता' इत्यादिश्रुत्यु-क्तसकलजगत्पितुः स्वकमितुः 'शम्भोः पितामहो ब्रह्मपिता शक्राद्यधीश्वरः' इत्यादिना तत्पुत्रपौत्रदासत्वादिनोक्तब्रह्मादिजीवसमुदायैक्यं कथं ब्रूयात्? किन्तु एवं पूर्वोत्तरमजानन् विपरीतश्च जानन् कुवाद्येव बलीवर्दो वा गर्दभो वा श्वा वा कपिर्वेत्येतादृशमिथ्याज्ञानात् दुर्योनिषु पततः स्वस्यैव हीनजीवैक्यं वदेत् । तथा च श्रुतिः 'त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा यद्यद्भवति तत्तदा भवति'(छा.उप.६.९.३) ॥

कस्तर्हि 'योऽसावसौ पुरुषः सोऽहमस्मि' इति वाक्यस्यार्थ इति चेत् । सत्यम् । ब्रूमः तस्यार्थम् । सावधानेन श्रूयताम् । उक्तविधया अनेकविरुद्धधर्मिणोः ऐक्यायोगादादौ त्वद्दत्तधनभोक्तृत्वेनोक्तो योऽसौ पुरुषः, तदनन्तरं त्वद्विषयकपूजा-रूपनिष्कामकर्मकर्तृत्वेनोक्तो योऽसौ पुरुषः, तदनु सूर्यस्थित भगवदपरोक्षज्ञानं प्रार्थयमानो योऽसौ पुरुषः, अन्ते 'अग्ने नय' इति मोक्षं प्रार्थयमानो योऽसौ पुरुषः सोऽहमेतदुपनिषदधिकारी जीव एवास्मि । त्वद्दत्तधनभोक्तृत्वात् त्वद्दर्शनका-मुकत्वात् त्वत्तः परमपुमर्थमोक्षमर्थयमानत्वाच्च न तु उपनिषत्प्रतिपाद्यदेवता त्वमेवास्मि । दातृप्रतिग्रहीत्रोः, पूज्यपूजकयोः, शिष्याचार्ययोः, द्रष्टृदृश्ययोः, मोच्यमोचकयोः, अधिकारिविषययोश्च भेदावश्यम्भावात् इत्यनुपमृद्यपदमहिम्नैव जीवब्रह्मणोः अत्यन्तभेदाख्यार्थसिद्धेः प्रतिवादिनो मुखमुद्रणमेवेति । नहि याचको दरिद्रः याच्यमानमहाराजं प्रति त्वमेवाहमस्मीति कश्चिद् ब्रूते । तस्मात्

तत्प्रकरणानुकूलत्वात् अस्मदीयार्थ एव प्रेक्षावद्भिः आदरणीयः । न तु प्रकरणविरुद्धः परकीयोऽर्थ इति सन्तोष्टव्यमायुष्मता ॥

किञ्च 'वायुरनिलममृतम्' इति वाक्यशेषे वायोः प्रस्तूयमानत्वात् योऽसावसौ वायौ पुरुषः वायुहृदि स्थितो नारायण इत्यर्थः । सोऽहं रुद्रादिवदसुरवेधाभावात् रुद्रादिदेवैः वा, धात्रा वा, तेन वायुना वा कदाऽपि अहेयत्वादविस्मर्यमाणत्वादिति यावत् । अहमित्युच्यमानं परं ब्रह्म । 'नामानि सर्वाणि यमाविशन्ति' इति च श्रुतेः । तथा प्रलयेऽपि अविलुप्तज्ञानवत्वेन अस्तित्वोपलक्षितसकलगुणवत्तया तेनैव वायुना सदा प्रमितत्वादस्मीति पदेनापि उच्यमानं परं ब्रह्म । अत एव यो विष्णुः तस्य अकारवाच्यस्य परमात्मनः वायुः निलं निलयनं सन्निधानपात्रीभूतं रूपम् । अथ जीवमरणानन्तरमपि अमृतं मृतिरहितम् । नित्यामृतश्रीहरेः सन्निधानात् जीवानां मरणावस्थायामापि आब्रह्मलयं मृतिरहितमिति भावः । इदं जीवानां शरीरं मरणे सति वारं वारं दह्यमानं भस्मान्तं भस्म भस्मीभावः अन्ते अवसाने यस्य तत्तथोक्तम् । 'अनावृत्तिर्देहिनां देहपाते तस्माद्वायुर्देवदेवो विशिष्टः' इति भारते । एवं च देहिनां देहपातेऽपि मरणाभावेन सर्वजीवोत्तमत्वात् नित्यापरोक्षज्ञानित्वेन हरेरतिप्रियत्वात् कल्यादीनां वेधविधुरत्वेन कदाऽपि हरौ वैमुख्याभावाच्च वायुप्रतीकमेव वागादिसकलप्रतीकेभ्योऽपि अधिकतमं, एकऋष्यादिपदवाच्य हे हरे तस्मिन् वायौ क्रियमाणहरिध्यानादेः कल्याद्यसुरकृतविघ्नाभावात् तत्रैव त्वामुपास्य 'यत्ते रूपं कल्याणतमं तत्ते पश्यामि' इति पूर्वेणान्वयः । अत एव छन्दोगानामुपनिषदपि 'य एवायं मुख्यप्राणस्तमुद्गीथमुपासाञ्चक्रिरे तं हासुरा ऋत्वा विदध्वसुः' इति निरन्तरायोपास्तिं वायावाह ॥

एवं च उपनिषदभिमानिनी रमा हनुमदवतारे स्वोपकारकं स्वज्येष्ठपुत्रं मुख्यप्राणं मानयन्ती हरिं स्तौतीत्येकवाक्यतया मनोहरार्थाख्यामृतलाभे कः प्रेक्षावान् विषसम्पृक्तान्ने रतिं कुर्यात् । कश्च प्रेक्षावानुपनिषत्प्रतिपाद्य-देवतास्तुतिप्रस्तावे 'निन्दामि च पिबामि च' इति न्यायेन तमौपनिषदं महापुरुषं नीचतमेन जीवेनैकीभूतं वदेत् । तस्मान्न परकृतेयं व्याख्या किन्तूपनिषदां प्रत्याख्यैवेति युक्तमुत्पश्यामः । इदश्च स्वोक्ततत्त्वोपोद्बलनं 'दशार्थाः सर्ववेदेषु' इति निरूपयतो, मम हृदि स्थित्वा मामनुदिनं प्रेरयतः 'अयमिह सुमतिं वायुदेवो

विदध्यात्' इति मया स्तूयमानस्य पवनस्य गुरोरेव अभिसन्धिरित्यनुसन्धेयम् । यथाभूतस्य धर्मस्यानुष्ठात्रे इत्यत्रोपनिषदुपक्रमे तेन त्यक्तेनेति ज्ञानिनः सकलकर्मत्यागमुक्त्वा इदानीं यथास्थितधर्मस्य अनुष्ठात्रे इति कथने स्ववचनविरोधश्चेत्यपि द्रष्टव्यम् । आदित्यरश्म्यादिविषयं व्याख्यानम् इत्येतदुदयेऽ-स्तमये च तव मते प्रतिबन्धकत्वाभिमतरश्मिरहितमण्डले ब्रह्मदर्शनप्रसङ्गानुपपन्नम् । सौरं तेजः 'सूर्यकोटिप्रतीकाशम्' इति स्मृतेः अनन्तसूर्यप्रकाशेभ्योऽपि अधिकभगवत्प्रकाशं, सूर्यतेजोभिभूतो दीपः स्वाभिभावकसौरं तेज इव कथं विरुन्ध्यात् । न हि भवति तरक्षोः मृगीशावः प्रतिबन्धकः । किन्तु स्वाव्यक्तत्वशक्त्यैव भगवान् तत्र न प्रतीयते, श्रवणादिना प्रसन्नः सन् प्रतीयत इत्येव वक्तव्यम् ॥

तस्मात् परोदीरितव्याख्या अपव्याख्यैव । एकेनापि शब्देन विप्सासिद्धेः इत्यत्र यो धूमवानसौ वह्निमानित्युक्तेऽपि वीप्साफलव्याप्तिसिद्धेः । अत एव श्रुतिः 'ब्राह्मणो न हन्तव्य' इत्येवाह । न तु यो यो ब्राह्मणः असावसौ न हन्तव्य इत्याह । नानाप्रतीकेषु स्वदर्शनं प्रार्थयमानस्य उपासकस्य ॥ १६ ॥

**श्रीनि- अनेनेति** ॥ तथा च 'अस भुवि' 'माङ् माने' अस्मात् क्विप्रत्यये ककारलोपे कित्वात् 'आतो लोप इटि च' इति द्वितीयधात्वाकारलोपे अस्मीति रूपम् ॥ **प्रकृतेति** ॥ अत्र सत्यपदेन ब्रह्मणः प्रकृतत्वादिति भावः । व्यूह वर्धय । समूह सम्यक् वर्धय । नन्वत्र ब्रह्मप्राप्त्यर्थं आदित्यं प्रति मार्गयाचनं तावत् क्रियते । तत्र रश्मीन् व्यूह । व्यूहनं सङ्कोचनं कूरु । अपसारयेति यावत् । इत्येवं व्याख्येयमित्यत आह- **आदित्य इति** ॥ अन्धकारे ब्रह्मप्रतीत्ययोगादिति भावः । शब्देन असाविति शब्देन। तर्हि योऽसाविति वाक्यं व्यर्थमित्यत आह- **तत्रेति** ॥ प्रतीकभेदेन तत्रत्यभगवतोऽपि भेदः प्राप्त इत्यर्थः ॥ नन्वनेन वाक्येन प्राणजीवान्तर्गतमूर्त्योरभेदप्राप्तावपि सर्वप्रतीकस्थभगवतो न प्राप्त इत्यत आह- **सर्वप्रतीकेष्विति** ॥ तथा च इदं वाक्यमुपलक्षकमिति भावः ॥१६॥

**छलारी- न हीयत इत्यहमितीति** ॥ नञ्पूर्वात् 'ओहाक् त्यागे' इत्यतः कर्मण्यौणादिकः कप्रत्यय इति भावः ॥ **एतयोरिदं रूपमितीति** ॥ अस्तेः कर्तरि क्विप् । भावप्रधानश्चायम् । 'माङ् माने' इत्यतः कर्मण्यौणदिको डिप्रत्ययः

तत उभयोः तृतीयातत्पुरुषः । तथा च असू अस्तित्वं तेन मितं अस्मि ब्रह्मेत्यर्थ इत्युक्तं भवति ॥ **हरेः मूर्तिर्नियम इति** ॥ जीवहृद्गतबिम्बमूर्तिः अहमस्म्यादि-शब्दवाच्येति भावः । सर्वजीवेषु इत्यस्य पराक्चैतन्यव्यावृत्यर्थमाह- **उपासकेष्वितीति** ॥ प्रत्यक्चैतन्यरूपे उपासकान्तर्यामिण्येव अहमस्मी-त्यादिशब्दप्रयोगः । न तु पराक्चैतन्य इति । पराक्चैतन्यस्थपरमात्मनि 'तत्त्वमसि' इत्यादित्वमादिशब्दप्रयोग एवेति भावः । उपासनाप्रसङ्गात् उपासकेष्वित्युक्तम् । उपासकस्य जीवस्य उपास्यान्तर्यामिभेदसिद्धावपि उपास्यविष्णोः पूषादिदेवताभिः अभेदप्राप्तेराह- **उपलक्षणश्चैतदिति** ॥ तत्प्रार्थनायाः अपरोक्षज्ञानार्थत्वात् स्वबिम्बप्रार्थनयैव अपरोक्षज्ञानसम्भवेन 'पूषन्नेकर्षे' इत्यादिना सूर्याद्यन्तर्गतमूर्ति-प्रार्थनायाः क्रियमाणायाः वैयर्थ्यमित्यत आह- **योग्यताभेदेनेति**॥ केषाञ्चिदुपासकानां सूर्यादिप्रतिमान्तर्गतभगवत्प्रार्थनमिति भावः ॥ **अङ्गं शरीरमप्रधानमिति** ॥ 'अङ्गं गात्रान्तिकोपायप्रतीकेष्वप्रधानके' (गद्विकम्-१४) इति विश्वोक्तेरिति भावः ॥ **सत्यधर्मेत्युक्त इति** ॥ श्रुतौ 'सत्यधर्माय' इति धर्मशब्दोऽकारान्तः। 'धृ धारणे' इत्यतः 'अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदि-यक्षिनीभ्यो मन्' इत्युणादिसूत्रे मन्प्रत्ययविधानात् । 'धर्मादनिच्केवलात्' इत्यत्र अनिच्प्रत्ययः । समासान्तस्तु नास्ति । तस्मिन् सूत्रे बहुव्रीहेः अनिच् विधानात् । 'सत्यधर्माय' इत्यत्र सत्यं धारयतीति द्वितीयातत्पुरुषस्याश्रयणात्, भाष्ये सत्यधर्मेति प्रतिपदम् ॥ 'धृ धारणे' इत्यतः 'आतो मनिन् क्वनिब्वनिपश्च' इत्यत्र 'अन्येभ्योऽपि दृश्यते' इत्युक्तमनिन् प्रत्ययान्तम् । न तु समासान्तानिच्प्रत्ययान्तम् ॥ **प्रकृतपरित्यागो दोष इति** ॥ उपलक्षणञ्चैतत् । सत्यधर्मायेति षष्ठ्यर्थकबहुव्रीह्याश्रयणेन षष्ठ्यर्थस्य अनुष्ठातृत्वरूपसम्बन्धत्वे अङ्गीक्रियमाणे 'धर्मादनिच्केवलात्' इत्यनिच्प्राप्तेः । बहुव्रीह्यनङ्गीकारे तु कर्मधारयमङ्गीकृत्य तदनुष्ठातरि लक्षणा अङ्गीकार्या स्यादित्यपि द्रष्टव्यम् ॥ १६ ॥

॥ **पिबति रसानिति** ॥ अत्र रसशब्दो जलवाची । 'रसो गन्धे रसे स्वादे देहधात्वन्तपारद' इति विश्वोक्तेः । 'सत्यधर्माय दृष्टये' इत्येतत् स्वस्यैव अपरोक्षेणोक्तिरिति भावेन तात्पर्यमाह- **मह्यमिति** ॥ **यावदिति** ॥ **रश्मीन् व्यूह तेजश्च समूहेति** ॥ 'ऊह वितर्के' इत्यतो लोटि व्यत्ययेन परस्मैपदे सिद्धे

'सेर्ह्यपिच्च' इत्यादेशे 'अतो हेः' इति हेर्लुक् । तस्य वीति समिति चेत्युपसर्गबलात् विस्तरार्थकत्वमिति भावः । तत्र रश्मिशब्दः स्वरूपज्ञानार्थः । तेजःशब्दः मनोवृत्तिरूपज्ञानार्थ 'इति भावेनोक्तम्- **स्वरूपं बाह्यश्च** ॥ **मदीयज्ञानमिति** ॥ **ब्रह्मप्रतीत्यसम्भवादिति** ॥ आदित्यप्रकाशस्य पदार्थप्रतीत्युपयोगित्वेन तदभावे ब्रह्मप्रतीत्यभावात् । ब्रह्मणः स्वप्रकाशरूपत्वे दीपादिवत् ब्रह्मज्ञाने सौरालोकापेक्षा नास्तीति न च वाच्यम् । निर्गुणब्रह्मणोऽवेद्यत्वाङ्गीकारेण तस्य प्रकाशासम्भवादिति भावः ॥ १६ ॥

असौ शब्द इत्यत्र शब्दपदार्थकत्वसिद्ध्यर्थमिति शब्दमध्याहृत्य योजयति- **असाविति शब्द इति** ॥ **इति वक्तीति शेष इति** ॥ इयं शेषोक्तिः स्थित इति पदानन्तरं ज्ञेया । ननु भाष्ये असावित्यस्य प्राण इति व्याख्याने कर्तव्ये प्राणे स्थित इति कथं व्याख्यानमित्यतः तद्योजयितुमाह- **यद्यसुरिति** ॥ **प्रतीकान्तरस्येति** ॥ पूषादिप्रतिमावत् सर्वोत्तममुख्यप्राणनामकप्रतिमान्तरस्येत्यर्थः ॥ **एकेनापि शब्देन वीप्सासिद्धिरिति** ॥ यो धूमवानसावग्निमानितीत्यादौ विप्सार्थकत्वस्य दृष्टत्वादिति 'एकोऽसौ शब्दः' इति भाष्यवाक्यं प्रकारान्तरेण योजयति- **अथवेति** ॥ तथाचैवं योजना । प्राणे स्थित उपलक्षणोक्तिः । असौशब्दः असाविति शब्दः । प्राणे स्थितो विष्णुः पुरुषादिस्थितश्च विष्णुः एक एवेति । वक्तीति शेष इति ॥ १६ ॥

**सत्य**- नानाप्रतीकेषु भगवदापरोक्ष्यप्रार्थनाभिप्रायमाह- **योग्यताभेदेनेति** ॥ तत्तदुपासकयोग्यताभेदेनेत्यर्थः ॥ **क्रतुर्मतिर्मनीषेत्यभिधानादिति** ॥ यद्यपि 'धृतिर्मतिर्मनीषा' इत्येव श्रुतिपाठः, तथापि क्रतुरसुरित्युपरिश्रुतक्रतुशब्दसम्बन्धेन एवमुदाहृतम् । 'सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति' इत्युत्तरवाक्यानुसारेण अभिधानादित्युक्तम् । उपलक्षणमेतत् । वेदनिघण्टौ 'केतः क्रतुः' इत्याद्येकादश-प्रज्ञानामसु क्रतुशब्दस्य पठितत्वादित्यपि द्रष्टव्यम् । 'रश्मीन् व्यूह तेजः समूह' इति वाक्यद्वयस्यापव्याख्यामपवदति- **आदित्यरश्म्यादीनामिति** ॥ आदिपदेन तेजसो ग्रहणम् । अप्रत्यक्षस्वभावस्य हरेरनुग्रहमन्तरा सहस्रेणापि प्रयत्नानां प्रत्यक्षीकर्तुमशक्यत्वादिति भावः ॥ **भेदशङ्कायामिति** ॥ स्थानभेदेन हरेरपि भेदशङ्कायामित्यर्थः ॥ **इदमाहेति** ॥ 'योऽसावसौ पुरुषः' इत्येतदाहेत्यर्थः ॥१६॥

**नृसिंह- उपासकेष्वित्यर्थ इति** ॥ उपासकानामेव भगवदापरोक्ष्यप्रतीकत्वादिति भावः । अत्रान्तर्यामिविवक्षा कुतोऽवगम्यत इत्यत आह- **योग्यतेति** ॥ तत्तत्प्रतीकान्तर्गतस्यैव विष्णोरापरोक्ष्यप्रार्थनादेवं ज्ञायत इति भावः । एकस्याधिकारिणः अनेकप्रतीकेषु दर्शनं कथं सम्भवतीत्यतो योग्यताभेदेनेत्युक्तम् । उत्तमाधिकारिलक्षणयोग्यतावैलक्षण्यादिति भावः । मन्दाधिकारिणां हि तन्न सम्भवति । नानाप्रतीकेषु यज्ञनाम्नो विष्णोरापरोक्ष्यं प्रार्थयतः स्वायम्भुवस्य मनोः उत्तमाधिकारिदेवेष्वपि उत्तमत्वेनैतद्युक्ततरमेवेत्याशयः । अत एव पूर्वमपि 'सर्वभूतेषु चात्मानमनुपश्यति' इति सर्वान्तर्गतपरमात्मदर्शनस्यैव फलत्वमुक्तमिति । यद्वा अधिकारिणां योग्यताभेदेन तत्र तत्र प्रतीके दर्शनयोग्यत्वात् तत्तत्कटाक्षेण नानाप्रतीकेषु मन्त्रद्रष्टा भगवदापरोक्ष्यं प्रार्थयते । अधिकारिकटाक्षस्तु प्राक् भुञ्जीथा इत्यादिमध्यमपुरुषप्रयोगादिनैव ज्ञायत इत्यर्थः । प्रतीके सदापरोक्ष्यप्रार्थनमिति कुतः प्रतीतमिति चेत्, नारायणकृष्णाद्यसाधारणनामानि विहाय तत्तद्देवतावाचिशब्दोपादानादेव अवगतमिति जानीहि ।'योऽसावसौ पुरुषः' इत्यत्र प्राणस्य स्फुटं प्रतीकत्वोक्तेश्च ॥ **प्रकृतपरित्याग इति** ॥ ननु 'अनिर्देश्यं परमं सुखम्' इत्यत्र 'तेषां सुखं शाश्वतं नेतरेषाम्' इति ज्ञानिसुखस्य प्रकृतत्वेऽपि तद्विहाय सुखशब्दस्य विष्णुविषयतोक्तेरत्रापि प्रकृतं परित्यज्य एवं व्याख्याने को दोष इति चेत् मैवम् । तत्र ज्ञानिसुखग्रहणे सूर्यादीनां तदधीनप्रकाश्यत्वादिबाधकवदत्र तदभावात् । निर्निमित्तं चैवं सति प्रकरणेन कुत्रापि तात्पर्यावगतिर्न स्यादिति भावः । पौनरुक्त्यपरिहाराय स्वरूपं बाह्यं चेत्युक्तम् । ते प्रसादादिति द्वितीयवारमुपात्तस्य त इत्यस्यार्थः । अनेनैकेन चारितार्थ्यादपरं व्यर्थमिति परिहृतम् ॥ **आदित्येति** ॥

ननु रश्म्याद्यपगमनमात्रेण मण्डलान्तर्गतप्रतीत्यसम्भवेऽपि हिरण्मयेनेत्यत्र तस्यापि अप्रतिबन्धकताप्रार्थनाप्रतीतिः सम्भवतीति चेन्मैवम् । संराधनेऽप्यव्यक्तस्वभावस्य ब्रह्मणः आवरणनिवृत्तिमात्रेण अपगतावरणघटादिवद्दर्शनासम्भवादित्याशयात् । अन्यथा तदन्तर्गतप्रतीत्यसम्भवादित्येवावक्ष्यत् । अस्मत्पक्षे तु परमादरोपेतपरोक्षावबोधविस्तृतौ सत्यां प्रसन्नोऽनन्तशक्तिश्च परमात्मा अव्यक्तमपि स्वात्मानं दर्शयति ।

अत एव भगवत्तमो बादरायणः 'प्रकाशश्च कर्मण्यभ्यासात्' (३.२.२३) 'अतोऽनन्तेन तथा हि लिङ्गम्' (३.२.२७) इत्यभाणीदिति न काप्यनुपपत्तिरिति भावः । सामानाधिकरण्यभ्रान्तिं वारयितुमुक्तम्- **असाविति** ॥ प्रणे स्थित इतीत्यत्र इतिशब्दान्वयाप्रतीतेराह- **इति वक्तीति** ॥ ननु असाविति शब्दः प्राणे स्थित इत्यर्थं कथं वक्ति? असावित्यस्य प्रथमान्तताप्रतीतेः । अदःशब्दार्थाभिधेयत्वेऽपि पदस्य प्रतिविशेषनिरूपितान्वयस्य पदान्तरसमभिव्याहारलभ्यत्वदिति चेत् सत्यम् । स्थित इत्यस्याध्याहारमभिप्रेत्य एवमुक्तत्वादित्यशयेनाह- **यद्यसुरिति** ॥ इदमुक्तं भवति । असौ शब्दः प्राणे स्थित इति वक्तीत्येव सम्बन्धः । स्थित इति अन्वयप्रदर्शनाय अध्याहारप्रदर्शनमिति । ननु एकत्र प्राणाख्यप्रतीकान्तरलाभः । अन्यत्र तु वीप्सासिद्धिरित्युभयत्रापि अविशेष एव । अतः कथमेकत्र पक्षपात इत्यत आह- **एकेनेति** ॥ अयं भावः । न हि वयं मुख्यप्राणस्य प्रतीकत्वलाभायैवं व्याचिनुमः । किं नाम, एकस्य असाविति शब्दस्य वैयर्थ्यभयादपि, वीप्सालाभार्थं तदिति चेन्न । योऽल्पसुखः सोऽस्वतन्त्र इत्यादिवदेकेनापि शब्देन वीप्सासिद्धेः, तथा च वीप्सापरत्वेऽपि अस्य वैयर्थ्यानिस्तारादेवमेव व्याख्यानमिति । ननु भगवदापरोक्ष्यप्रार्थनावसरे प्रकृतासङ्गतमिदं किमुच्यते । कथं च प्राणस्य दर्शनप्रतीकतालाभ इत्यतः पश्यामीत्यस्यानुवृत्तिमभिप्रेत्य वाक्यार्थमाह- **तथा चेति**॥ अनेन भवत्पक्षेऽपि एकस्य वैयर्थ्यमिति निरस्तम् । एकस्य प्रसिद्ध्यर्थतास्वीकारात् । यः प्राणे स्थितः स एव सर्वजीवेषु स्थित्वा अहमस्मिशब्दाभ्यां उच्यत इत्यर्थः । पश्यामीत्यनुवृत्तिं विना प्रकारान्तरेण वाक्यं सङ्गमयति- **अथवेति** ॥ **भेदशङ्कायामिति** ॥ नानास्थानेषु स्थितस्य परमेश्वरस्य स्थानभेदेन भेदे हि अनेकस्थानेषु तदापरोक्ष्याशंसनमयुक्तं स्यात् । स्वप्राप्यरूपदर्शनस्यैव प्रार्थनीयत्वात् । अन्यविद्यया अन्यगतेरयोगात् । किञ्च अनेजदित्यादिना यदेकत्रावास्थितस्यैव भगवद्रूपस्य सर्वत्रावस्थानादिरूपाचिन्त्यमाहात्म्यमुक्तम् । तदप्यसमञ्जसमापद्येत । परमेश्वररूपाणां परस्परं भेदे हि अनुग्राह्यानुग्राहकभावप्रसक्त्या सर्वत्र निर्दोषाशेषगुणपरिपूर्णत्वं च न स्यात् । अतोऽनेकप्रतीकतोक्तया प्राप्तभेदशङ्कानिरासाय इदमाहेत्यर्थः । कथमनेन तन्निरास इत्यतः तात्पर्यमाह- **सर्वेति** ॥

इदमनेनोक्तं भवति । योऽसौ प्रसिद्धोऽसौ मुख्यप्राणादिसर्वप्रतीकेषु स्थितः परमेश्वरः स एव मदादिसर्वजीवेषु संस्थितोऽहमस्मिशब्दाभ्यां उच्यत इति । एतच्च 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' (३.२.११) इत्यादिना भगवतैव सप्रपञ्चमुपपादितमवगन्तव्यम् । सोऽहमस्मीत्यस्य सार्थक्यमप्यनेनोक्तं भवति । पूर्वव्याख्याने तु फलितार्थमादायोक्त्यभाव इत्यादि स्वारस्यं द्रष्टव्यम् ॥ १६ ॥

**कल्ला**- पूषादिशब्दैरादित्याद्यन्तर्गत एवोच्यते । योग्यताभेदेन नानाप्रतीकेषु भगवदापरोक्ष्यमत्र प्राथ्र्यत इति टीका । इदञ्च मध्यमाधिकारिविवक्षया । तेषामेव स्वस्मिन् देवताविशेषे च भगवदुपासनस्य विहितत्वादिति ॥

...............................अहश्चासावहेयतः ।
अस्मि नित्यास्मितामानात्सर्वजीवेषु संस्थितः ॥ इति ॥

अत्र टीका अहमस्मिशब्दाभिधेयत्वे हरेर्मूर्तिनियमोऽप्यस्तीत्याह- सर्वजीवेष्विति ॥ उपासकेष्वित्यर्थ इति ॥ इदञ्चोपलक्षणमित्यतः पूर्वं योजनीयम् । 'योऽसावसौ पुरुषः' इत्यत्र भाष्ये एकोऽसौ शब्दः प्राणे स्थित इति । अत्र टीका वक्तीति शेषः । असावसाविति वीप्सार्थतया किं न व्याख्यायत इति चेत् । एवं व्याख्याने प्राणस्य प्रतीकान्तरस्याप्युक्तिलाभात् । एकेनापि वीप्सासिद्धेः । तथाच योऽसौ प्रसिद्धः प्राणे स्थितः पुरुषः स एवाहेयत्वनित्यसत्तामानाभ्यां अहमस्मि-शब्दाभिधेयः । तञ्च पश्यामीति वाक्यार्थः । अथवा पूषादिशब्दैरुपलक्षणया प्राणप्रतीकत्वं विष्णोरुक्तमिति । एतच्च मध्यमाधिकारिषूत्तमपरम् । सत्यलोक-योग्यस्यैव प्राणप्रतीके स्वस्मिन् भगवदुपासकत्वात् । नतु सर्वेषां प्राणे भगवदुपासनायाः पूषादिवत्प्रतीकत्वोक्तेः । योग्यताभेदेन नानाप्रतीकेषु भगवदापरोक्ष्यमत्र प्राथ्र्यत इति पूर्वोक्तेश्च । एवञ्च 'विशते ब्रह्मधाम' इत्याथर्वणवाक्यं अधिकारिविशेषाभिप्रायकमिति भाति ॥ १६ ॥

**रघु**- 'अहेयत्वादहं नामा' इति प्रमाणानुसारेण भावप्रधानो निर्देश इत्याह- **अहेयत्वत इति** ॥ अहं शब्देन अहेयत्वलाभप्रकारं सूचयति- **न हीयत इति** ॥ अनेन नञ्पूर्वात् 'ओहाक् त्यागे' इत्यस्मात् कर्मणि घञर्थे कविधानमिति वार्तिकेण कप्रत्यये कित्त्वात् 'आतो लोप इटि च' इत्याकारलोपे अहमिति

रूपनिष्पत्तिः इत्युक्तं भवति । यद्यपि अस्मदादेशभूतस्य अहमित्यस्य रूढत्वान्न निर्वचनीयत्वम् । तथापि हरौ तद्वृत्तौ न जीवाभेदो निमित्तमिति प्रतिपादनाय प्रयोजनवशात् निर्वचनं कृतमिति ज्ञातव्यम् । ननु अहमिति प्रथमैकवचनस्य उक्तनिर्वचनलब्धाहेयत्वेन निमित्तेन भगवति प्रवृत्तिसम्भवेऽपि द्विवचनबहुवचनयोः द्वितीयादिविभक्तीनां च कथमहेयत्वेन निमित्तेन भगवति प्रवृत्तिः । तत्र न हीयत इति निर्वचनासम्भवात् । न च भगवति द्विवचनादिवृत्तिः न अहेयत्वेन किन्तु निमित्तान्तरेण । अतो नैतन्निर्वचनगवेषणप्रयास इति वाच्यम् । अस्मच्छब्द-गतसप्तविभक्तीनां सर्ववचनानामपि अहेयत्वेनैव भगवति वृत्तेः प्रमाणसिद्धत्वात् भगवत्पादवचनसिद्धत्वाच्च । यथोक्तं बृहद्भाष्ये 'मे सर्वाहेयस्य विष्णोः, 'अस्मच्छब्दगतैः विष्णुः वाच्यः सप्तविभक्तिभिः । सर्वाहेयत्वतस्त्वेकः' इत्यादि । सर्वाहेयत्वेन अहमिति प्रथमान्तशब्दवाच्यत्वसम्भवेऽपि मे इति षष्ठ्यन्तशब्द-वाच्यत्वं कथमित्यतः तत्र प्रमाणमाह- **अस्मदिति** ॥ इति भावबोधेऽवतरितत्वा-च्चेति चेत् । अस्यार्थस्य प्रमाणज्ञेयत्वेऽपि निर्वचनाज्ञेयत्वात् । निर्वचनस्यापि महाव्याकरणरीत्या सम्भवेऽपि आधुनिकरीत्या असम्भत्वात् । अहंशब्दे तु प्रसिद्धव्याकरणरीतिसम्भवात् निर्वचनं कृतमिति भाति । अधिकं तु विचार्यम् । 'अस्तितामानात्' इत्यत्र अस्तितया मानादिति तृतीयातत्पुरुषः । तृतीया च प्रकारे । मानशब्दः प्रमापरः । निर्विशेषस्य मुख्यार्थत्वात् । सत्त्वेन प्रमितत्वस्य वस्तुमात्रसाधारणत्वादसाधारण्याय नित्येति योग्यतया सम्बध्यते इत्याशयेन व्याचष्टे- **नित्यसत्त्वेनेति**॥ अस्मिशब्दात् सत्त्वेन प्रमितत्त्वं कथं लभ्यत इत्यत आह- **अनेनेति** ॥ 'अस भुवि' 'माङ् माने' इत्याभ्यां डिप्रत्यये द्वितीयधातोष्टिप्रत्यये अस्मीति रूपमिति भावः । ननु कथं धातुद्वयादेकः प्रत्ययः । 'परश्च' (सि.कौ.१८१) इति सूत्रात् 'धातोः' इति पञ्चम्या च धातोरव्यवहितोत्तरमेव कार्यं भवतीति विधानात् । धातोरित्येकवचनादपि न धातुद्वयादेकप्रत्ययोत्पत्तिरिति चेत् मैवम् । धातुद्वयादपि प्रत्ययोत्पत्तेः 'अदिभूभ्यां डुतच्' इत्युणादिसूत्रे उक्तत्वात् । 'अद भक्षणे' 'भू सत्तायाम्' इति धातुद्वयात् डुतच्प्रत्यये टिलोपे च सति अद्भुतमिति रूपसिद्ध्यङ्गीकारात् । न च प्रसिद्धोणादिवृत्तौ 'अदि भुवो डुतच्' इति सूत्रं पठित्वा अद्युपपदे भुवोधातोः

डुतच् भवतीति सूत्रस्य व्याख्यातत्वात् कथं धातुद्वयात्प्रत्ययो भवतीति अत्रैतत्सूत्रोदाहरणमिति वाच्यम् । मूलकोशेषु अदिभूभ्यामित्येव पाठदर्शनात् । वृत्त्यन्तरे 'अदिभूभ्याम्' इत्येव पठित्वा व्याख्यातत्वाच्च । धातुव्यतिरिक्त-स्यादीत्युपपदस्य अभावेन 'अदि भुव' इति पाठस्यायुक्तत्वाच्च । निघण्टुभाष्ये वेदभाष्ये च धातुसमुदायादेकप्रत्ययस्य बहुशोऽभिहितत्वाच्च । तस्मात् धातुद्वयात् प्रत्ययाङ्गीकारो युक्त इति ॥

**एतेनेति** ॥ अहेयत्वादिना अहमादिशब्दवाच्यताकथनेनेत्यर्थः ॥ **मूर्ति-नियमोऽपीति** ॥ न केवलमहेयत्वादिप्रवृत्तिनिमित्तनियम इत्यपेरर्थः । ननु सर्वजीवेषु संस्थित इत्ययुक्तम् । भगवदुपासकैरेव साक्षात्कारार्थमहमस्मिशब्द-वाच्यतया भगवतः प्रार्थ्यमानत्वेन उपासकान्तर्गतस्यैव अहमादिशब्दवाच्यताया वक्तुमुचितत्वादित्यत आह- **उपासकेष्वित्यर्थ इति** ॥ विशिष्योक्त्या अहमस्मिशब्दवाच्यत्व एव मूर्तिनियमो न तु पूषादिशब्दवाच्यत्व इति प्रतीतिः स्यादत आह- **उपलक्षणं चैतदिति** ॥ एतत् अहमस्मिशब्दाभिधेयस्य हरेः मूर्तिनियमकथनमुपलक्षणमित्यर्थः । उपलक्षणीयं दर्शयति- **पूषादिशब्दैरपीति** ॥ यद्यपि अत्र पूषादिशब्दैः पूषाद्यन्तर्गत एवोच्यत इति वक्तव्यम् । तथापि पूष्णोऽपि द्वादशादित्यान्तर्गतत्वादादित्यान्तर्गत इत्युक्तमिति ज्ञेयम् । अत्र आदित्याद्यन्तर्गत एवोच्यत इत्येव पाठः । मूलकोशेषु तथैव दर्शनात् । एकर्षियमादिशब्दवाच्य-त्वोपपादनाय आदिशब्दस्य आवश्यकत्वाच्च । योग्यताभेदेन इत्याद्युत्तरवाक्यानु-गुण्याच्च । आदित्यान्तर्गत इति क्वाचित्कपाठे आदित्यशब्दस्य उपलक्षणत्वेन आदित्याद्यन्तर्गत एवोच्यत इति व्याख्यातव्यम् । अन्यथा आदित्यान्तर्गतस्य पूषसूर्यशब्दवाच्यत्वसम्भवेऽपि एकर्षियमादिशब्दवाच्यत्वासम्भवात्, उत्तरवाक्य-वैगुण्याच्च । ननु आदित्यान्तर्गतभगवत्साक्षात्काराय अनेकप्रतीकेषु भगवत्प्रार्थन-मसङ्गतमित्यतः तस्याभिप्रायमाह- **योग्यताभेदेनेति** ॥ अतो युक्तं नानाप्रतीक-गतभगवत्प्रार्थनमिति भावः । ननु क्रतुशब्दस्य यज्ञवाचित्वेऽपि ज्ञानवाचिताया अप्रसिद्धत्वात् कथं 'स क्रतुर्ज्ञानरूपत्वात्' इति व्याख्यानमित्यतो गीताभाष्योदा-हृताभिधानपठनेन तद्धटयति- **क्रतुर्मतिर्मनीषेत्यभिधानादिति** ॥ यथोक्तं गीताभाष्ये 'आत्ममायया आत्मज्ञानेन । 'केतुः केतश्चितिश्चित्तं क्रतुर्मतिर्मनीषा

मायाः' इति हि अभिधानम्' इति । इति प्रज्ञाया नामधेयानीति वाक्यशेषाग्नि प्रमेयदीपिकायामुक्तत्वात् ज्ञाननामधेयत्वं गम्यते । न च 'मेधा दृष्टिः धृतिः मनीषा जूतिः स्मृतिः सङ्कल्पः क्रतुरसुः' कामो वशः' इत्यैतरेयश्रुतेः (३.२) । प्रकृतोपयुक्तसम्बन्धाभिप्रायेण अयमनुवादः । प्रज्ञानस्य नामधेयानि भवन्तीत्युक्तत्वात् अभिधानादित्युक्तमिति व्याख्यानं किं न स्यादिति वाच्यम् । स्पष्टं भगवत्पादोदाहृताभिधानसद्भावे उक्तकुसृष्ट्याश्रयणस्यानुचितत्वात् ।

..................मतिर्मायासुततत्त्वतः ।
मनुनाम्नामजादीनां मनीषेशो यतो हरिः ।

क्रतुः स सर्वकर्तृत्वात्..................॥

इत्यादिना ऐतरेयभाष्ये क्रतुमतिमनीषाशब्दानां प्रकारान्तरेण व्याख्याततया ज्ञानपरत्वाभावेन तदुदाहरणस्य अत्यन्तासङ्गतत्वाच्च । तस्मादुक्तमेव व्याख्यानं युक्तमिति ॥

किं तदङ्गं कथं च तत्प्रणेतृत्वमग्निशब्दार्थ इत्यत आह- **अङ्गं शरीरमिति ॥** अनेन अङ्गशब्दोपपदात् 'नीञ् प्रापणे' इत्यस्मात् कर्तरि डिप्रत्यये निर्वचनादुप-पदानुस्वाराकारयोर्लोपे अग्निरिति रूपमित्युक्तं भवति । अनन्वयशङ्कायां सत्यधर्माय भक्तायेति प्रमाणानुसारेण शेषं पूरयति- **भक्त उच्यत इति शेष इति ॥**

ननु ब्रह्माधारकत्वस्य भक्ताभक्तसाधारणत्वात् विशिष्य भक्त उच्यत इति शेषपूरणमयुक्तम् । न च अध्याहृतहृदयपदमहिम्ना एतल्लभ्य इति वाच्यम् । हृदयपदाध्याहारस्यैवाकर्तव्यत्वात् । कर्तव्यत्वेऽपि तेन भक्तलाभासम्भवादित्यतो हृदयपदाध्याहारस्य आवश्यकत्वप्रदर्शनपूर्वकं तेन भक्तलाभप्रकारं च दर्शयति- **अत्र सत्यमित्यादि ॥ अनाधारमिति ॥** 'स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि' (छा.उ.७.२४.१) इति अनन्याधारत्वश्रुतेरिति भावः । अनेन अपव्याख्यानं निरस्तमित्याह- **सत्यस्येति ॥ इति प्रकृतपरित्याग इति ॥** इत्यत्र सत्यशब्देन प्रकृतपरित्याग इत्यर्थः । परेण सत्यस्यादित्यमण्डलस्येति व्याख्यातत्वादस्माभिः परमात्मन इति व्याख्यातत्वात् पक्षद्वयेऽपि परस्य प्रकृतपरित्याग इति भावः ॥

उदकं पीयते तेन तमसस्त्रायते जगत्

यतोऽतः पात्रमुद्दिष्टं विद्वद्भिः सूर्यमण्डलम् ॥ (बृ.भा.५.१५.१)

इति बृहद्भाष्योदाहृतप्रमाणं मनसि निधाय व्याचष्टे- **पिबति रसानिति ॥ सूर्यमण्डलेनेति** ॥ तदुपलक्षिताज्ञानादिना चेत्यर्थः ॥ १५ ॥

॥ **स्वरूपं बाह्यं चेति** ॥ रश्मिशब्दव्याख्यानम्- **स्वरूपं ज्ञानमिति** ॥ तत्त्वप्रदीपे 'अहं तत्तेजो रश्मीन्नारायणम्' इत्येतद्व्याख्यानावसरे 'रतिः शं च मितमस्येति रश्मिर्जीवः' इति व्याख्यातत्वेन जीववाचकस्य रश्मिशब्दस्य तत्स्वरूपज्ञाने लक्षणामभिप्रेत्य इदं व्याख्यानमिति द्रष्टव्यम् । तेजःशब्दस्य व्याख्यानम्- **बाह्यं ज्ञानमिति** ॥ वृत्तिरूपं ज्ञानमित्यर्थः । इदं च अन्तःकरणस्य तैजसत्वेन तत्परिणामरूपवृत्तेरपि तेजःशब्दवाच्यत्वात् । 'एवं तेजः प्रातिभाख्यं बाह्यं चेति द्विधामतम्'(छा.भा.७.४.१४) इति प्रमाणानुसाराच्च उपपद्यत इति भावः । द्वितीयस्य त इत्यस्य पश्यामीत्यनेन साक्षादन्वयासम्भवात् रूपमित्यनेन च आद्यस्य अन्वितत्वात् अपेक्षिताध्याहारेण अन्वयमाह- **ते प्रसादादिति** ॥ रश्मितेजःशब्दौ स्वरूपबाह्यज्ञानपरतया स्वयं व्याख्याय यत्परेण व्याख्यातं 'रश्मीन् स्वान् व्यूह विगमय । तेजस्तावकं समूह एकीकुरु उपसंहर' इति तद्दूषयति- **आदित्यरश्म्यादीनामिति** ॥ आद्येनादिशब्देन तेजसो द्वितीयेन उपसंहरणस्य च सङ्ग्रहः ॥ **ब्रह्मप्रतीत्यसम्भवादिति** ॥ श्रवणादिसाधनपरिपाकमव्यक्तस्वभावस्य ब्रह्मणोऽनुग्रहं च विना रश्म्याद्यपगममात्रेण साक्षात्कर्तुमशक्यत्वादिति भावः ॥१६॥

ननु- प्रातिपदिकमात्रस्य शब्दत्वेन व्यवहारे इतिशब्दानपेक्षायामपि विभक्त्यन्तस्य तु तत्त्वेन व्यवहारे अस्तीतिशब्दापेक्षा । तथैव सांव्यवहारिकत्वात् । प्रकृते च न प्रातिपदिकमात्रग्रहणम् । तथात्वे एकोऽसुशब्द इति वा अदस् शब्द इति वा स्यात् । किन्तु विभक्त्यन्तस्य । तथात्वेऽसाविति शब्द इति वक्तव्यम् । तत्कथमसौशब्द इत्युक्तमित्यतः सत्यम् । अत्रापि 'इति' शब्दाध्याहारात् न दोष इत्याशयेनाह- **असौशब्दोऽसाविति शब्द इति** ॥ यद्वा यः कश्चनासावेकः शब्दः प्राणे इत्यर्थभ्रान्तिनिरासायाह- **असौशब्दोऽसाविति शब्द इति** ॥ असुशब्दस्य सप्तम्यन्तमिदमिति ज्ञापनाय भाष्ये प्राण इति सप्तमीप्रयोग इत्याशयेन

कथं तेन तज्ज्ञापनमित्यतोऽपेक्षितमध्याहरति- **इति वक्तीति शेष इति** ॥ एवं च असाविति शब्दः प्राणे इत्यर्थं वक्तीत्युक्त्या सप्तम्यन्तोऽयमसुशब्दः प्राणप्रतिपादक इति भाष्यार्थः सम्पद्यते । शेषपूरणाभावे तु एकोऽसाविति प्रथमान्तः शब्दः प्राणे वर्तते प्राणविषयतया व्याख्यातव्य इति भाष्यार्थः प्रतीयेतेति भावः । भाष्ये प्राण इत्यतःपरं श्रूयमाणस्य स्थित इत्यस्य वैयर्थ्यशङ्कायां पूर्वभाष्यार्थविवरणपूर्वकं तद्व्यावर्त्यां शङ्कां उत्थापयति- **यद्यसुः प्राण इति** ॥ असुशब्दः प्राणवाचकः । तस्य सप्तमी असाविति । ततश्चासौ प्राणे । इत्यर्थो यदि स्यादित्यर्थः ॥ **अस्येति** ॥ असाविति सप्तम्यन्तस्येत्यर्थः । कुत इत्यत आह- **क्रियापेक्षत्वादिति** ॥ असावित्यधिकरणसप्तमीत्वात् क्रियाश्रययोः कर्तृकर्मणोराधारस्य च अधिकरणत्वात् क्रियापेक्षत्वमधिकरणस्येत्यर्थः ॥ **क्रियाध्याहारेणेति** ॥ क्रियाश्रयकर्तृवाचकस्थितपदाध्याहारेणेत्यर्थः । अत्र टीकायां स्थित इतीत्येव प्रतीकग्रहणमुचितम् । तस्यैवोक्तशङ्कानिवर्तकत्वात् । भाष्येऽपि प्राणे इत्यतः परं स्थित इति पाठदर्शनात् 'प्राणे स्थितो यः पुरुषः सोऽसावहमिति स्मृतः'(बृ.भा.७-१५) इत्येतन्मन्त्रव्याख्यानरूपे बृहद्भाष्योदाहृत-प्रमाणे प्राण इत्यतःपरं स्थित इति क्रियाध्याहारस्य स्पष्टत्वेन तदनुसारेण अत्रापि भाष्ये प्राण इत्यतःपरं स्थित इति पाठस्यावश्यकत्वाच्च । यस्मिन्निततीति प्रतीकग्रहणं तु प्रकृतानुपयुक्तत्वादयुक्तम् । उत्तरत्र अवतारिकापूर्वकं तस्य व्याख्यास्यमानत्वाच्च । न च यस्मिन्निति वाक्यगतस्य स्थित इत्यस्य प्रकृतोपयोगाभिप्रायेण तत्प्रतीकग्रहणमिति वाच्यम् । तस्य प्रागध्याहृतानुवाद-रूपत्वेऽपि स्वयमध्याहाररूपत्वाभावेन क्रियाध्याहारेण अन्वयं दर्शयतीति टीकाया अस्वारस्यप्रसङ्गात् । भाष्ये प्राण इत्यतःपरं स्थित इति पाठस्य मूलकोशेषु दर्शनाच्चेति । भाष्यकृद्व्याख्याने असावसाविति शब्दयोरेकत्र श्रुतयोः वैरूप्यं स्थित इत्यध्याहारं च असहमानः प्रकारान्तरमाशङ्कते- **असावसावितीति** ॥ **वीप्सार्थतयेति** ॥ प्रयोक्तुर्व्याप्तिविषया इच्छा वीप्सा तदर्थतया इत्यर्थः । यो यो धूमवानसावसावग्निमानित्यादौ दृष्टत्वादिति भावः । किमध्याहारादिरेव भाष्यकृद्व्याख्याने दोष उत वीप्साया असिद्धिः । आद्ये आह- **एवं व्याख्यान इति** ॥ प्रतीकान्तरस्य सर्वप्रतीकोत्तमत्वं सूचयितुं प्राणाख्येत्युक्तम् । महार्थलाभादध्याहारादिः गुण एव न दोषः । न हि मृगभायात् बीजानामनवापः

सम्भवतीति भावः । द्वितीयं दूषयति- **एकेनापि शब्देनेति** ॥ असाविति शब्देनेत्यर्थः । यो यो धूमवानितिवद्यो धूमवानसावग्निमान् इतीत्युदाहरण-वाक्यस्यापि सांव्यवहारिकत्वात् । अन्यथा तत्र वीप्साया असिद्धिप्रसङ्गादिति भावः । ननु एकेन शब्देन वीप्सासिद्ध्यङ्गीकारे 'नित्यवीप्सयोः' (सि.कौ.२१४०) इत्येतत्सूत्रविरोधः । नित्यवीप्सयोः सर्वस्य द्वे इत्यनुवर्तते । नित्यमाभीक्ष्ण्यं वीप्सा व्याप्तिप्रतिपादनेच्छा नित्ये वीप्सायां च अर्थे तद्वर्तते तस्य द्वे भवतः । नित्ये पचति पचतीत्यादि । वीप्सायां ग्रामो ग्रामो रमणीयः, वृक्षं वृक्षं सिञ्चतीत्यादि । अत्र वीप्सायां द्विर्भावस्य विहितत्वादिति चेत् मैवम् । 'ब्राह्मणो न हन्तव्यः' इत्यादौ व्यभिचारेण नित्यवीप्सयोरित्यस्यानित्यताया दुर्घटवृत्त्यादौ उक्तत्वेन अत्र द्विर्भावाभावसम्भवादित्याशयात् ॥

ननु दर्शनप्रार्थनप्रकरणे योऽसावित्यादिस्वरूपप्रतिपादनमसङ्गतमित्यतः पश्यामीति पूर्वेणान्वयमङ्गीकृत्य श्रुतियोजनाप्रकारं दर्शयति- **तथा चेति** ॥ एवं योऽसावित्यादेः पूर्वेण एकवाक्यत्वमङ्गीकृत्य तं च पश्यामीति पूर्वेण सम्बन्धो दर्शितः । तस्मिन् पक्षे भगवद्रूपेषु भेदशङ्कानिवर्तकस्यान्यस्याभावात् । तन्निवर्तकतयाभिन्नवाक्यतामङ्गीकृत्य योजनान्तरमाह- **अथवेति** ॥ अयमत्र योजनाक्रमः । अथवा तत्र भेदशङ्कायामिदमाहेत्यन्वयः । तत्र प्राणाद्यनेक-प्रतीकस्थभगवद्रूपेषु भेदशङ्कायामधिष्ठानभेदप्रयुक्तभेदशङ्कायामिदमाह । योऽसावित्यादिवाक्यमभेदप्रतिपादनायाहेत्यर्थः । ननु पूर्वं भगवतः पूषाद्यनेक-प्रतीकस्थत्वोक्तावपि प्राणादिस्थत्वानुक्तेः कथं तत्र भेदशङ्केत्यत उक्तम्- **पूषादिशब्दैरुपलक्षणयेत्यादि** ॥ विशिष्य लक्षणायां नियामकाभावात् पूषादिशब्दैरित्युक्तम् । अजहल्लक्षणेति सूचनायोपलक्षणयेत्युक्तमिति । नन्वेवमपि योऽसावित्यादिपरिहारवाक्यासङ्गतिरेव । तत्र योऽसौ प्रसिद्धोऽसौ प्राणे स्थितः पुरुषः । स एव अहेयत्वनित्यास्तितामानाभ्यामहमस्मिशब्दवाच्यतया उपासकेषु स्थित इति योजनया प्राणप्रतीकस्थस्य उपासकप्रतीकस्थस्य च विष्णोरभेदोक्तावपि पूषादिप्रतीकस्थस्य तदनुक्तेरित्यतः तद्वाक्यतात्पर्यमाह- **सर्वप्रतीकेष्विति** ॥ एक एवेति वदता श्रुतौ तदध्याहर्तव्यमिति सूचितम् । ततश्च योऽसौ प्रसिद्धः असौ प्राणे स्थितः । यश्चाहमस्मिशब्दवाच्यतया उपासकेषु स्थितः । उपलक्षणमेतत् ।

कथं तेन तज्ज्ञापनमित्यतोऽपेक्षितमध्याहरति- **इति वक्तीति शेष इति** ॥ एवं च असाविति शब्दः प्राणे इत्यर्थं वक्तीत्युक्त्या सप्तम्यन्तोऽयमसुशब्दः प्राणप्रतिपादक इति भाष्यार्थः सम्पद्यते । शेषपूरणाभावे तु एकोऽसाविति प्रथमान्तः शब्दः प्राणे वर्तते प्राणविषयतया व्याख्यातव्य इति भाष्यार्थः प्रतीयेतेति भावः । भाष्ये प्राण इत्यतःपरं श्रूयमाणस्य स्थित इत्यस्य वैयर्थ्यशङ्कायां पूर्वभाष्यार्थविवरणपूर्वकं तद्व्यावर्त्यां शङ्कां उत्थापयति- **यद्यसुः प्राण इति** ॥ असुशब्दः प्राणवाचकः । तस्य सप्तमी असाविति । ततश्चासौ प्राणे । इत्यर्थो यदि स्यादित्यर्थः ॥ **अस्येति** ॥ असाविति सप्तम्यन्तस्येत्यर्थः । कुत इत्यत आह- **क्रियापेक्षत्वादिति** ॥ असावित्यधिकरणसप्तमीत्वात् क्रियाश्रययोः कर्तृकर्मणोराधारस्य च अधिकरणत्वात् क्रियापेक्षत्वमधिकरणस्येत्यर्थः ॥ **क्रियाध्याहारेणेति** ॥ क्रियाश्रयकर्तृवाचकस्थितपदाध्याहारेणेत्यर्थः । अत्र टीकायां स्थित इतीत्येव प्रतीकग्रहणमुचितम् । तस्यैवोक्तशङ्कानिवर्तकत्वात् । भाष्येऽपि प्राणे इत्यतः परं स्थित इति पाठदर्शनात् 'प्राणे स्थितो यः पुरुषः सोऽसावहमिति स्मृतः'(बृ.भा.७-१५) इत्येतन्मन्त्रव्याख्यानरूपे बृहद्भाष्योदाहृत-प्रमाणे प्राण इत्यतःपरं स्थित इति क्रियाध्याहारस्य स्पष्टत्वेन तदनुसारेण अत्रापि भाष्ये प्राण इत्यतःपरं स्थित इति पाठस्यावश्यकत्वाच्च । यस्मिन्निनतीति प्रतीकग्रहणं तु प्रकृतानुपयुक्तत्वादयुक्तम् । उत्तरत्र अवतारिकापूर्वकं तस्य व्याख्यास्यमानत्वाच्च । न च यस्मिन्निति वाक्यगतस्य स्थित इत्यस्य प्रकृतोपयोगाभिप्रायेण तत्प्रतीकग्रहणमिति वाच्यम् । तस्य प्रागध्याहृतानुवाद-रूपत्वेऽपि स्वयमध्याहाररूपत्वाभावेन क्रियाध्याहारेण अन्वयं दर्शयतीति टीकाया अस्वारस्यप्रसङ्गात् । भाष्ये प्राण इत्यतःपरं स्थित इति पाठस्य मूलकोशेषु दर्शनाच्चेति । भाष्यकृद्व्याख्याने असावसाविति शब्दयोरेकत्र श्रुतयोः वैरूप्यं स्थित इत्यध्याहारं च असहमानः प्रकारान्तरमाशङ्कते- **असावसावितीति** ॥ **वीप्सार्थतयेति** ॥ प्रयोक्तुर्व्याप्तिविषया इच्छा वीप्सा तदर्थतया इत्यर्थः । यो यो धूमवानसावसावग्निमानित्यादौ दृष्टत्वादिति भावः । किमध्याहारादिरेव भाष्यकृद्व्याख्याने दोष उत वीप्साया असिद्धिः । आद्ये आह- **एवं व्याख्यान इति** ॥ प्रतीकान्तरस्य सर्वप्रतीकोत्तमत्वं सूचयितुं प्राणाख्येत्युक्तम् । महार्थलाभादध्याहारादिः गुण एव न दोषः । न हि मृगभायात् बीजानामनवापः

सम्भवतीति भावः । द्वितीयं दूषयति- **एकेनापि शब्देनेति ॥** असाविति शब्देनेत्यर्थः । यो यो धूमवानितिवद्यो धूमवानसावग्निमान् इतीत्युदाहरण-वाक्यस्यापि सांव्यवहारिकत्वात् । अन्यथा तत्र वीप्साया असिद्धिप्रसङ्गादिति भावः । ननु एकेन शब्देन वीप्सासिद्ध्यङ्गीकारे 'नित्यवीप्सयोः' (सि.कौ.२१४०) इत्येतत्सूत्रविरोधः । नित्यवीप्सयोः सर्वस्य द्वे इत्यनुवर्तते । नित्यमाभीक्ष्ण्यं वीप्सा व्याप्तिप्रतिपादनेच्छा नित्ये वीप्सायां च अर्थे तद्वर्तते तस्य द्वे भवतः । नित्ये पचति पचतीत्यादि । वीप्सायां ग्रामो ग्रामो रमणीयः, वृक्षं वृक्षं सिञ्चतीत्यादि । अत्र वीप्सायां द्विर्भावस्य विहितत्वादिति चेत् मैवम् । 'ब्राह्मणो न हन्तव्यः' इत्यादौ व्यभिचारेण नित्यवीप्सयोरित्यस्यानित्यताया दुर्घटवृत्त्यादौ उक्तत्वेन अत्र द्विर्भावाभावसम्भवादित्याशयात् ॥

ननु दर्शनप्रार्थनप्रकरणे योऽसावित्यादिस्वरूपप्रतिपादनमसङ्गतमित्यतः पश्यामीति पूर्वेणान्वयमङ्गीकृत्य श्रुतियोजनाप्रकारं दर्शयति- **तथा चेति ॥** एवं योऽसावित्यादेः पूर्वेण एकवाक्यत्वमङ्गीकृत्य तं च पश्यामीति पूर्वेण सम्बन्धो दर्शितः । तस्मिन् पक्षे भगवद्रूपेषु भेदशङ्कानिवर्तकस्यान्यस्याभावात् । तन्निवर्तकतयाभिन्नवाक्यतामङ्गीकृत्य योजनान्तरमाह- **अथवेति ॥** अयमत्र योजनाक्रमः । अथवा तत्र भेदशङ्कायामिदमाहेत्यन्वयः । तत्र प्राणाद्यनेक-प्रतीकस्थभगवद्रूपेषु भेदशङ्कायामधिष्ठानभेदप्रयुक्तभेदशङ्कायामिदमाह । योऽसावित्यादिवाक्यमभेदप्रतिपादनायाहेत्यर्थः । ननु पूर्वं भगवतः पूषाद्यनेक-प्रतीकस्थत्वोक्तावपि प्राणादिस्थत्वानुक्तेः कथं तत्र भेदशङ्केत्यत उक्तम्- **पूषादिशब्दैरुपलक्षणयेत्यादि ॥** विशिष्य लक्षणायां नियामकाभावात् पूषादिशब्दैरित्युक्तम् । अजहल्लक्षणेति सूचनायोपलक्षणयेत्युक्तमिति । नन्वेवमपि योऽसावित्यादिपरिहारवाक्यासङ्गतिरेव । तत्र योऽसौ प्रसिद्धोऽसौ प्राणे स्थितः पुरुषः । स एव अहेयत्वनित्यास्तितामानाभ्यामहमस्मिशब्दवाच्यतया उपासकेषु स्थित इति योजनया प्राणप्रतीकस्थस्य उपासकप्रतीकस्थस्य च विष्णोरभेदोक्तावपि पूषादिप्रतीकस्थस्य तदनुक्तेरित्यतः तद्वाक्यतात्पर्यमाह- **सर्वप्रतीकेष्विति ॥** एक एवेति वदता श्रुतौ तदध्याहर्तव्यमिति सूचितम् । ततश्च योऽसौ प्रसिद्धः असौ प्राणे स्थितः । यश्चाहमस्मिशब्दवाच्यतया उपासकेषु स्थितः । उपलक्षणमेतत् ।

यश्च पूषादिशब्दवाच्यतया पूषादिषु स्थितः । स सर्वोऽप्येक एव । नाधिष्ठानभेदप्रयुक्तभेदवान् । 'सर्वेषु भूतेषु एतमेव ब्रह्मेत्याचक्षते' (ऐतरेयारण्यकं) इति श्रुतेरिति योजनोक्ता भवतीति ॥ १६ ॥

### उपनिषत्

**[1]वायुरनिलममृतमथेदं भस्मान्तं शरीरम् ।**
**ओम् क्रतो स्मर कृतꣳ स्मर ओम् क्रतो स्मर कृतꣳ स्मर ॥१७॥**

**भाष्यम्**- यस्मिन्नयं स्थितः सोऽप्यमृतः किमु परः । अः ब्रह्मैव निलयनं यस्य वायोः सोऽनिलम् ।

अतिरोहितविज्ञानाद्वायुरप्यमृतः स्मृतः ।
मुख्यामृतः स्वयं रामः परमात्मा सनातनः॥
इति रामसंहितायाम् ॥ १७ ॥

**टीका**- 'वायुरनिलममृतम्' इत्येतद्वाक्यं 'मरिष्यतो वायुः प्राणोऽध्यात्मपरिच्छेदं हित्वा अधिदैवमात्मानमनिलममृतं प्रपद्यताम् । अथेदं शरीरमग्नौ हुतं भस्मान्तं भूयात्' इति केचिद्व्याचक्षते । तदसत् । अवश्यम्भाविन्यर्थे प्रार्थनानुपयोगात् । प्रकरणादपि उपपत्तेर्बलीयस्त्वात् । अतो लिङ्गव्यत्ययेन विभक्तिव्यत्ययेन वा समानाधिकरणान्येतानि पदानि । ननु तर्हि प्रकृतासङ्गतानि स्युः । 'वायुरनिलम्' इति पुनरुक्तिः स्यादित्यत आह- **यस्मिन्निति** ॥ यस्मिन् वायौ अयं परमेश्वरः सोऽपि वायुरपि अमृतः किमु परोऽमृत इति 'वक्तव्यम्' इति शेषः । ननु अस्मिन् वाक्ये वायुरमृत-

---

१. अदोषत्वाद इत्युक्तो वायुस्तन्निलयो यतः ।
अनिलं तत एवासावमृतश्चेति कीर्त्यते ॥
तदाश्रयोऽपि ह्यमृतः किमु साक्षात्स्वयं हरिः ।
क्रतुश्च ज्ञानरूपत्वात्स एव हि जनार्दनः ॥

मित्येवोच्यते । न तु यस्मिन् वायौ अयं परमेश्वरः स्थित इति तत्कुतः कैमुत्यं लभ्यते । न हि वायोरमृतत्वमात्रेण ईश्वरामृतत्वसिद्धिरिति चेत् मैवम् । अस्यार्थस्य अनिलपदेन उक्तत्वात् । तत्कथमित्यतः तात्पर्यतो व्याख्यातं तदिदानीं निर्वक्ति- **अः ब्रह्मैवेति** ॥ निलं निलयनमाश्रयः । यथाश्रुतस्य अनुवादो अयमित्यतो अनिलमित्युक्तम् । अनेन पुनरुक्तिरपि परिहृता भवति । ननु यस्मिन्नयं स्थित इत्यनेन वायुरीश्वराश्रय इत्युक्तम् । अनेन निर्वचनेन ईश्वरो वायोराश्रय इति लक्ष्यते । तत्कथमनिलपदार्थोऽसाविति चेन्मैवम् । यस्मिन्नयं स्थित इत्यनेनापि यस्मिन् वायौ अयं परमेश्वरो नियामकत्वेन स्थित इति वायोरीश्वराश्रितत्वस्यैव कथितत्वात् । अथवा यस्मिन् परमेश्वरे अयं वायुः स्थितः । यदधीनो वर्तत इति यावत् । स वायुरपि यदा अमृतः तदा किमु वक्तव्यं स परोऽमृत इति व्याख्येयम् ।

ततश्चेदमुक्तं भवति । सोऽहमस्मीति जीवान्तर्गतस्य परमेश्वरस्य नित्यास्तित्वं कल्याणतमरूपत्वश्चोक्तम् । तन्न युक्तम् । प्रत्यक्षत एव देहस्य भस्मान्तत्वदर्शनात् । देहनाशे च तदन्तर्गतस्य परमेश्वरस्य जीववन्मरणाद्यवश्य-म्भावादित्याशङ्क्येदमुक्तम्- **वायुरनिलमिति** ॥ अयमर्थः । यद्यपीदं शरीरं भस्मान्तम् । तथापि तदन्तर्गतस्य परमेश्वरस्य न मरणादिदोषप्रसङ्गः । कुतः? अनिलः परमेश्वराश्रितः वायुरपि यदा अमृतः अथ तदा परमेश्वरः किं वक्तव्य इति तदमृतत्वस्य कैमुत्यसिद्धत्वादिति ॥

ननु संसारिणो वायोः कथममृतत्वं सम्भवति । यद्युपचारेण तर्हीश्वरस्यापि किं तथाविधममृतत्वमस्तीत्याशङ्कां स्मृत्यैव परिहरति- **अतिरोहितेति** ॥ देहनाशेऽपि तत्कार्यविज्ञानतिरोभावाभावसादृश्यादित्यर्थः । 'अतिरोहित-विज्ञनात्' इति भावप्रधानो निर्देशः । मुख्यामृतः देहनाशादिरहितः । परमात्मा सनातन इति तत्र युक्तिद्वयम् ॥ १७ ॥

**वामन**- सर्वसंस्थस्यापि हरेः प्राणे विशेषस्थितिरुच्यते- **वायुरिति** ॥ आत्मसंस्थस्य हरेः अखण्डितदर्शनात् वायुरप्यमृतः । अत्र पुनः कैमुत्यन्याया-दर्थान्तरं च सिद्ध्यतीत्याह- **यस्मिन्निति** ॥ अनिलशब्दार्थं व्युत्पादयति- **अ इति** ॥ 'अ इति ब्रह्म' इति श्रुतिः । अस्मिन्नर्थे रामसंहितावचनं प्रमाणमाह- **अतिरोहितेति** ॥ बिम्बापरोक्षमात्रं हि ध्यातव्यभावे लभ्यत इत्यविरोधः ।

अतिरोहितज्ञानस्यापि देहसम्बन्धसिद्धेः तद्विनाशेनैव विमोक्ष इति ज्ञापयंस्तत्प्रकारमाह- **अथेति** ॥ इदं वाय्वधिष्ठितमचिच्छरीरं परमात्माग्नौ भस्मीभावेन विनश्यति। एवं लिङ्गशरीरभङ्गात् स्वरूपानन्दाभिव्यक्तिर्भवतीति भावः। अन्येषामप्येवं मोक्षप्रकार इति सिद्धम् ॥ १७ ॥

**वादि-** विभक्तिव्यत्ययेन इत्यत्र वायुरिति प्रथमायाः 'सुपां सुलुक्' इति वचनात् द्वितीयाकरणे वायुमनिलममृतमाहुरिति योजनासम्भवात् । लिङ्गव्यत्यासे तु वायुरनिलः अमृत इति योजनासम्भवादिति भावः । प्रकृतासङ्गतानीत्यत्र भगवत एव प्रकृतत्वेन वायोः कथनं कथं सङ्गच्छत इति शङ्कितुरभिप्रायः ॥ १७ ॥

**श्रीनि-** अध्यात्मपरिच्छेदं देहसम्बन्धम् । ननु प्रार्थनापरतया व्याख्यानमुपयुक्तमेव । अपावृण्विति ज्ञानिप्रार्थनप्रकरणादित्यत आह- **प्रकरणादपीति** ॥ एतन्न प्रार्थ्यं अवश्यम्भावित्वादिति युक्तेरित्यर्थः । अनिलममृतमिति यदि नपुंसकलिङ्गं, तर्हि अनिलः अमृतः इति नपुंसकलिङ्ग-व्यत्ययः कार्यः । यदि वा पुल्लिङ्गस्य द्वितीयाविभक्तिः, तर्हि द्वितीयाविभक्तेः प्रथमान्तत्वेन व्यत्ययः कार्य इत्यत आह- **अत इति** ।। पुनरुक्तिः पर्यायत्वादिति भावः । अस्य अर्थस्य 'यस्मिन्नयं स्थितः' इत्यर्थस्य व्याख्यानं यस्मिन्नयमित्यनेनेति शेषः । ननु भाष्ये अनिल इति वक्तव्यमित्यत आह- **यथाश्रुतस्येति** ॥ श्रुत्युक्तस्य अनिलपदस्य इत्यर्थः । तथा च श्रुतावनिल-मित्युक्तत्वादिति भावः ॥ **अनेनेति** ॥ अनिलपदस्य योगवृत्त्या अर्थकल्पनेन इत्यर्थः । तथा च वायुशब्दो रूढः । अनिलशब्दश्च यौगिक इति न पुनरुक्तिदोष इति भावः ॥ **तत्कार्येति** ॥ देहकार्येत्यर्थः । तथा च अमृतः अमृतसदृश इत्यर्थः । प्राणे तत्र देहनाशाभावः उत्तमचेतनत्वात्, नित्यदेहत्वाच्चेत्यर्थः ॥१७॥

**छलारी- प्रकृतासङ्गतानीति** ॥ तथा च पूर्ववाक्ये ब्रह्मणः प्रकृतत्वात् वायुप्रतिपादकानामेषां पदानां ब्रह्मणि अन्वयाद्यभावादिति भावः । वाय्वनिलशब्दयोः पर्यायत्वादिति भावः ॥ **यस्मिन्वायाविति** ॥ 'नियामकतया स्थितः' इति शेषः । स नियम्य एव वायुः यदा अमृतः तदा नियामको विष्णुः अमृत इति किं वाच्यमिति । विष्णोरेव अमृतत्वप्रतिपादकत्वार्थं वाय्वादिपदत्रयोक्तिरिति प्रकृतविष्णावेव सङ्गतेः न प्रकृतासङ्गतिरिति भावः ॥

**निलं निलयनमाश्रय इति** ॥ निपूर्वात् 'लीङ् श्लेषणे' इत्यस्मात् अधिकरणे औणादिके निलशब्दोऽधिकरणार्थ इति भावः । ननु वायुविशेषणत्वादनिलशब्दस्य पुल्लिङ्गता स्यात् । तथा च भाष्ये 'सोऽनिलम्' इति वचनमयुक्तमित्यत आह- **यथाश्रुतस्येति** ॥ उपनिषदुक्तस्येत्यर्थः॥ **पुनरुक्तिश्चेति** ॥ वायुरनिलशब्दयोः पर्यायत्वेन प्राप्तेरिति शेषः । सादृश्यादर्थ इत्यनेन वायौ अमृतशब्दस्य गौणीवृत्तिरित्युक्तं भवति ॥ १७ ॥

**सत्य**- ननु स्तुतिप्रकरणत्वादित्थं व्याख्यायत इत्यत आह- **प्रकरणादप्युपपत्तेरिति**॥ अवश्यम्भाविन्यर्थ इत्युक्तोपपत्तेरित्यर्थः ॥ **प्रकृतासङ्गतानीति** ॥ वायुरित्यादिपदानि वायुस्वरूपनिरूपणपराणीति चेत् प्रकृतविष्णुस्वरूपनिरूपणासङ्गतानि स्युरित्यर्थः॥ **तात्पर्यतो व्याख्यातमिति** ॥ 'यस्मिन्नयं स्थित इत्यनेन' इति शेषः ॥ १७ ॥

**नृसिंह**- प्रार्थनाप्रकरणत्वेन तत्परतयैव व्याख्यानं युज्यत इत्यत आह- **प्रकारणादिति** ॥ **ननु तर्हीति** ॥ ततश्च पूर्वपक्ष्यभिहितार्थे एतद्दोषद्वयाभावात् स एव युक्त इवाभातीति भावः ॥ **नहीति** ॥ यस्य कस्यचित् अमृतत्वमात्रेण अन्यस्यामृतत्वसिद्धावीश्वरस्य नित्यमुक्तत्वादिना अन्यस्यापि तत्प्रसङ्ग इति भावः ॥ **तात्पर्य इति** ॥ यस्मिन्नयं स्थित इत्यनेनेति भावः । ननु मूले 'सोऽनिलः' इति वक्तव्ये कथं 'सोऽनिलम्' इत्युक्तिरित्यत आह- **यथाश्रुतस्येति**॥ **अनेनेति** ॥ अनिलपदस्य यौगिकत्वाश्रयणेनेत्यर्थः । ननु अनेन प्रकृतासाङ्गत्यं कथं परिहृतमित्यत आह- **ततश्चेति** ॥ 'सोऽहमस्मि' इत्यनेन नित्यास्तित्वं 'सोऽहमस्मि' इति सर्वप्रतीकान्तर्गतपरमेश्वरस्य ऐक्योक्त्या जीवान्तर्गतस्य कल्याणतमरूपत्वञ्चोक्तमिति भावः ॥ **देहनाशे चेति** ॥ नाशप्रसक्त्यैव जरादिदोषप्रसक्त्या कल्याणतमरूपत्वं चायुक्तमिति भावः । नन्वेवमपि 'अथेदं भस्मान्तम्' इत्यनन्वितं प्रतीयत इत्यतो वाक्यं योजयितुमाह- **अयमिति** ॥ **देहनाशेऽपीति** ॥ स्वीयदेहनाशेऽपि इत्यर्थः । तत्कार्यो देहनाशकार्यो यो विज्ञानतिरोभावः, तदभावरूपसादृश्यादित्यर्थः ॥ **परमात्मेति** ॥ वायोर्गौणामृतत्वमङ्गीकृत्य तर्हि तदमृतत्वेन कैमुत्यलभ्यमीश्वरामृतत्वमपि तादृशमेव स्यादित्याशङ्क्य विष्णोर्मुख्यामृतत्वे युक्तिद्वयमुच्यत इत्यर्थः ॥

अयमभिप्रायः । सकलशरीरान्तर्गतस्य परमेश्वरस्य शरीरनाशादिना मरणादिदोषो नाशङ्कनीयः । कुतः ? यतः परमेश्वराश्रितस्य मुख्यवायोः तत्प्रसादेन स्वीयप्राकृतशरीरनाशेऽपि अमृतत्वमेवोच्यते । तदा किमु वक्तव्यम् । पूर्णशक्तिचिदानन्दमूर्तेरप्राकृतविग्रहस्य परमोत्कृष्टचेतनस्यानादेः भगवत इतरसर्व-शरीरेषु नियामकत्वेनास्थितस्य स्वतन्त्रस्य तन्नाशादिना मरणाद्यवद्यगन्धलेशो नास्तीति । अत एव भगवान् 'नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः'(ब्र.सू.२.३.१७) इति मुख्यनित्यतामेवाह । अत एव सर्वशरीरगस्य विष्णोर्जीववद्दुःखादिदोषप्रसङ्गः । तथा च शुक्रमित्यादिविशेषणानि अयुक्तानीति च परास्तम् । अत एव 'सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्' (ब्र.सू.१.२.८.) इत्यनेनाशेषाम्नायाधिपतिः बादरायणोऽपि सर्वत्रोच्यमानस्य नारायणस्य जीवेन सह शरीरेऽवस्थितौ समानभोगप्राप्तिमाशङ्क्य सामर्थ्यवैशेष्यादिना निराचकार-

सर्वज्ञाल्पज्ञताभेदात्सर्वशक्त्यल्पशक्तितः ।
स्वातन्त्र्यपारतन्त्र्याभ्यां सम्भोगो नेशजीवयोः ॥

(१.२.८)इति च भाष्यम् ॥

शरीरोत्पत्तौ तदन्तर्गतस्य भगवतः जनिप्रसङ्ग इत्यप्यनेन न्यायेन परास्तम् । 'स प्राणमसृजत' (प्र.उ.६.४) इत्यादिना देहत उत्पत्तिमत्तया प्रमितस्यापि वायोः 'सा वा एषा देवतानादिर्येयं पवते' इत्यादिना यदा ज्ञानाविस्मृतेर्हेतोरनुत्पत्तिरेवोक्ता । तदा किं वाच्यम् ? स्वतन्त्रस्य परमात्मनः कथमपि जनिर्नास्तीति । अत एव शारीरकमीमासायां 'एतेन मातरिश्वा व्याख्यातः' (ब्र.सू.२.३.८) इति सूत्रेण वायूत्पत्त्यनुत्पत्तिश्रुत्योर्देहोत्पत्तिज्ञानाविस्मृतिभ्यां व्यवस्था कृता भगवता । यथाह भगवान् भाष्यकारः 'ज्ञानाविस्मृत्या वा वायावपि व्यवस्थेत्यतिदेशः' इति । बह्‌वृचोपनिषदि 'स एष मृत्युश्चैवामृतं च तदुक्तमृषिणा अपाङ् प्राङेति स्वधया गृभीत' (ऐ.उप.२.१.८) इत्यादिना महिदासाभिधेन प्रभुणोदाहृतमन्त्रव्याख्याना-वसरे 'अमर्त्योऽमर्त्येनासयोनिः' इत्यंशोऽमरशीलशरीरैः सहावस्थिता वायुदेवता अमृतेत्येवं परतया वृतः' । तथा च भाष्यम् 'अमर्त्यस्तत्प्रसादेन वायुर्देवैस्सह स्थितः' इति । तत्राप्यतिरोहितेत्युक्तन्यायेन शरीरकृतलेपाभावेनामृतत्वं बोध्यम् ॥१७॥

**कल्ला**- अतिरोहितविज्ञानाद्वायुरप्यमृतः स्मृतः।
मुख्यामृतः स्वयं रामः परमात्मा सनातनः ॥ इति ॥

अत्र टीका । देहनाशेऽपि तत्कार्यविज्ञानतिरोभावाभावसादृश्यादित्यर्थः । अतिरोहितविज्ञानात् इति भावप्रधानो निर्देशः । मुख्यामृतः देहनाशादिरहित इति । एतेन मुख्यप्राणस्य ज्ञानतिरोधानमस्ति नवा । आद्ये एतद्वचनविरोधः । द्वितीये देहत्यागकाले भगवज्ज्ञानापत्त्या 'यं यं वापि' इति न्यायेन भगवत्प्राप्त्यापत्त्या 'प्रकृतौ विलीनः संसारमेति' इति संसाराभावप्रसङ्गादिति शङ्का परास्ता । अत्रामृतशब्दस्य मरणाभावार्थकतया 'प्रलयेऽपि प्रतिभातपरावरः' इत्युक्तिसमानार्थस्य देहत्यागकाले प्रलयात्पूर्वं प्राणस्य भगवद्रूपविशेषस्मृत्यभावाङ्गीकाराविरोधात् । 'सम्भवाच्चाप्रकाशस्य परमेकमृते हरिम्' इत्युक्तेश्च इति ॥ १७ ॥

**रघु**- 'वायुरनिलममृतम्' इतिवाक्यस्य भाष्यकृद्व्याख्यानदृढीकरणाय अपव्याख्यानमनूद्य दूषयति- **वायुरनिलममृतमित्येतद्वाक्यमित्यादि** ॥ इत्येतद्वाक्यमित्यस्य इति केचित् व्याचक्षते इत्यनेनान्वयः ॥ **अवश्यम्भाविनीति** ॥ मरिष्यतः प्राणो वायुं प्रतिपाद्यत इत्यस्यार्थस्य प्रार्थनाभावेऽपि सिद्धत्वात् प्रार्थनानुपयोगः । कथञ्चित् तस्य देवतानुस्मरणरूपत्वेन प्रार्थनीयत्वेऽपि देहभस्मीभावस्यातथारूपस्य अवश्यम्भाविनः प्रार्थनानुपयोग एवेति भावः । ननु 'तत्ते पश्यामि' इति प्रार्थनाप्रकरणत्वात् इदमपि प्रार्थनापरत्वेन व्याख्यायते । अन्यथा प्रकरणविरोधप्रसङ्गादित्यत आह- **प्रकरणादपीति** ॥ **उपपत्तेरिति** ॥ प्रार्थनानुपयोगरूपोपपत्तेरित्यर्थः । 'वायविन्द्रः सोम आदित्यो बृहस्पतिः' (ब्र.सू.भा.४.२.६) इत्यत्र वायुशब्दस्य 'पृथिव्यामृभवो लीयन्ते वरूणेऽश्विनौ अग्नावग्नयः' इति भूतप्रकरणे पठ्यमानस्य भूतवायुपरत्वशङ्कायां इन्द्रादि-लयाधिकरणत्वरूपोपपत्तिविरोधेन प्रकरणं बाधित्वा मुख्यवायुपरतायाः 'भूतेषु तच्छ्रुतेः' (ब्र.सू.४.२.५) 'प्रधानवायुस्त्विह वायुनामा भूतेष्विति प्रोक्तगतेऽपि युक्त्या' इत्यादिना शास्त्रे व्यवस्थापितत्वेन प्रकरणादुपपत्तेः बलीयस्त्वमित्यर्थः । अपव्याख्याननिराकरणफलमाह- **अत इति** ॥ वायुरनिलं प्रपद्यतामिति वैयधिकरण्येन व्याख्यानस्यायुक्तत्वात् वायुरनिलममृतमित्येतानि पदानि समानाधिकरणानि प्रथमाविभक्तिमादायैकविभक्तिकानीत्यर्थः । ननु वायुरनिल-

ममृतमिति स्पष्टं व्यधिकरणत्वात् कथं समानाधिकरणानीत्यतः किं भिन्नलिङ्गत्वात् व्याधिकरणत्वमाशङ्कसे उत पुल्लिङ्गत्वेन समानलिङ्गत्वेऽपि भिन्नविभक्तिकत्वात् । नाद्यः । शब्दः प्रमाणमित्यादौ भिन्नलिङ्गानामपि विशेषणविशेष्यभावदर्शनात् ॥

ननु तत्रोभयोः नियतलिङ्गत्वेन भिन्नलिङ्गत्वस्य अदोषत्वेऽपि प्रकृते अनिलामृतशब्दयोः अनियतलिङ्गत्वात् अनियतलिङ्गानां विशेष्यनिघ्नत्वावश्यम्भावात् कथं भिन्नलिङ्गानां विशेषणविशेष्यभाव इत्यत उक्तम्- **लिङ्गव्यत्ययेनेति** ॥ अनिलममृतमिति नपुंसकयोः पुल्लिङ्गत्वेन व्यत्ययेनेत्यर्थः । न द्वितीय इत्याह- **विभक्तिव्यत्ययेनेति** ॥ अनिलममृतमिति द्वितीयायाः प्रथमात्वेन व्यत्ययेनेत्यर्थः । 'सुप्तिङुपग्रहलिङ्गनराणाम्' इति स्मरणादुभयव्यत्ययो-पपत्तिरिति भावः ॥ **प्रकृतासङ्गतानीति** ॥ भगवन्माहात्म्याप्रतिपादकत्वादिति भावः । यस्मिन्नित्यस्य पूर्वप्रकृतप्राणपरामर्शकत्वे यत्तदोः समानविषयत्वात् सोऽप्यमृत इत्यत्रापि प्राणपरामर्शो वाच्यः । न चासौ युक्तः । वायुरनिलममृतमिति श्रुतिविरोधापातात् । अतो व्याचष्टे- **यस्मिन् वायाविति** ॥ प्राणस्य वायुत्वाकारेण वा वायोरेव बुद्ध्या प्रकृतत्वाद्वा अयं परामर्श इति भावः । अयं वायुरिति भ्रमनिरासाय ब्रह्मशब्दप्रकृतस्य वा, बुद्ध्या प्रकृतस्य वा परामर्श इति भावेनाह- **अयं परमेश्वर इति** ॥ किमु पर इत्यस्य अनन्वयादपेक्षितं पूरयति- **अमृत इति वक्तव्यमिति शेष इति** ॥ अमृत इत्यस्यावृत्त्या किमु पर इत्यनेन सम्बन्धे इतीत्यादिकमेव शेष इति द्रष्टव्यम् ॥ **अस्यार्थस्येति** ॥ यस्मिन् वायौ अयं परमेश्वरः स्थित इत्यस्य अर्थस्येत्यर्थः ॥ **तात्पर्यतो व्याख्यातमिति** ॥ यस्मिन्नयं स्थित इत्यनेनेति शेषः । भाष्ये निलयनमिति एतच्छ्रौतानिलमित्यस्य व्याख्यानमिति ज्ञापनायाह- **निलं निलयनमिति** ॥ तद्व्याचष्टे- **आश्रय इति** ॥

ननु भाष्ये सोऽनिल इति वक्तव्यं वायुविशेषणत्वात् । न च श्रुत्यनुसारेण अनिलमित्युक्तिरिति वाच्यम् । लिङ्गविभक्तिव्यत्ययेन तत्रापि अनिल इति व्याख्यातव्यत्वस्य उक्तत्वादित्यत आह- **यथा श्रुतस्येति** ॥ लिङ्गादिव्यत्यय-रहितस्य इत्यर्थः । भाष्ये यथाश्रुतानुवादोऽपि-

अदोषत्वाद इत्युक्तो वायुः तन्निलयो यतः ।
अनिलं तत एवासावमृतं चेति कीर्त्यते ॥ (बृ.उ.भा.७.१५.३)

इति अन्यत्रोदाहृतप्रमणानुसारेणेति ज्ञातव्यम् । अत्र प्रमाणे अ इत्युक्त इत्यतःपरं हरिरिति शेषो द्रष्टव्यः ॥ **अनेनेति** ॥ अनिलशब्दस्य यौगिकत्वाश्रयणेन वायुरनिलमिति पुनरुक्तिः परिहृतेत्यर्थः ॥ **तत्कथमिति** ॥ यस्मिन्नयं स्थित इत्यादेरपि अनिलपदार्थत्वस्योक्तत्वात् । विरुद्धयोश्चैकपदार्थत्वासम्भवादिति भावः । अस्मिन् पक्षे नियामकत्वेन इत्यध्याहारो भवतीत्यतः तदाश्रयोऽपि हि अमृतः किमु साक्षात् स्वयं हरिः इत्यन्यत्रोदाहृतप्रमाणानुसारेण पक्षान्तरमाह- **अथवेति** ॥ ननु यच्छब्देन परमेश्वरपरामर्शे सोऽपि इति तच्छब्देन तस्यैव ग्रहणावश्यम्भावेन किमु पर इति कैमुत्योक्तिरयुक्ता स्यादित्यतः तात्पर्यार्थमाह - **यदधीन इति** ॥ अनेन यदाश्रयोऽपि इति प्रमाणस्यापि इदमेव तात्पर्यमित्युक्तं भवति ॥

ननु वायुरनिलममृतमिति विशेषणानाममृतत्वरूपभगवन्माहात्म्यप्रतिपादकत्वेऽपि तत्प्रतिपादनस्य का अपूर्वेण सङ्गतिः । 'अथेदं भस्मान्तं शरीरम्' इत्यस्य तु सर्वथा नोपयोगं पश्याम इत्यत आह- **ततश्चेदमुक्तं भवतीति** ॥ **कल्याणातमरूपत्वं चेति** ॥ इदं च अहेयत्वोक्तिलब्धमिति ज्ञातव्यम् । यद्वा आदित्यान्तर्गतस्योक्तं कल्याणरूपत्वं सर्वजीवान्तर्यामिसाधारणमित्यभिप्रेत्य इदमुक्तम्- **मरणादीति** ॥ आदिपदेन दुःखादिप्रयुक्तमकल्याणरूपत्वं द्रष्टव्यम् । तथापीत्यादिप्रसङ्गइत्यन्तं श्रुतौ शेषकथनम् ॥ **परमेश्वर इति** ॥ अचिन्त्यैश्वर्यवानित्यर्थः । अनेन जीववदिति दृष्टान्तवैषम्यमुक्तं भवति । यद्वा परमेश्वराश्रितस्य वायोरमृतत्वोक्त्यैव अचिन्त्यशक्तिमत्त्वेन जीववैषम्यमुक्तमिति ज्ञातव्यम् ॥

ननु एतत् शङ्कायाः पूर्वार्धेनैव परिहारात् उत्तरार्धवैयर्थ्यमित्यतः तव्द्यावर्त्यमाह- **यदीति** ॥ 'अतिरोहितविज्ञानात्' इत्येतद्वायोः अमृतशब्दवाच्यत्वे निमित्तकथनमिति भ्रमनिरासाय व्याचष्टे- **विज्ञानतिरोभावेति** ॥ अनेन नामृतशब्दस्य वायौ मुख्यवृत्तिः । येन संसारित्वविरोधः । किन्तु गौणी । तत्र योगप्रदर्शनाय अतिरोहितेत्यादिविशेषणमित्युक्तं भवति । विज्ञानं च न स्वरूपमित्याशयेनोक्तम्- **तत्कार्येति** ॥ देहकार्येत्यर्थः । वृत्तिरूपेति यावत् । अत्र विज्ञानतिरोभावाभाववत्त्वेनैव वायोः मुक्तसादृश्यम् । तच्च विज्ञानं मुक्तानां स्वरूपभूतं, वायोस्तु वृत्तिरूपमिति योज्यम् । ननु वृत्तिज्ञानतिरोभावाभाववत्त्वेनैव

सादृश्यम् । मुक्तेषु वृत्तिज्ञानप्रसक्तेरभावात् । ननु वृत्तिज्ञानतिरोभावाभावस्य रुद्रादिसाधारणत्वात् को विशेषो वायोरित्यत उक्तम्- **देहनाशेऽपीति** ॥ प्रलये देहनाशेऽपि इत्यर्थः । अत एवोक्तमन्यत्र भगवत्पादैः 'प्रलयेऽपि अविलुप्तज्ञानो वायुः' इति 'प्रलयेऽपि प्रतिभातपरावरः' 'मुख्यवायुर्नित्यसमः' इति च । रुद्रादीनां तु प्रलये वृत्तिज्ञानतिरोभाव एवेति भावः । अत्र वायोरिव भारत्या अपि प्रलये वृत्तिज्ञानतिरोभावाभावो ज्ञातव्यः । वियदधिकरणे 'अथ ह वाव नित्यानि पुरुषः प्रकृतिरात्मा कालः' इति । अथ यानि अनित्यानि प्राणः श्रद्धा भूतानि भौतिकानि इत्येतव्द्याख्यानावसरे तत्त्वप्रकाशिकायां 'आत्मा परमात्मा पुरुषादिपदैः जीवचैतन्यप्रकृतिस्वरूपकालप्रवाहा उच्यन्ते । तदभिमानिप्रकृतिश्च । प्राणो मुख्यवायुः, श्रद्धा तत्पत्नी । पुरुषपदेन गृहीतयोरपि अनयोः चैतन्यमात्रादधिकमपि नित्यमस्तीति दर्शयितुं पुनः सपरिकरयोः ग्रहणम्' इत्युक्तम् । चैतन्यमात्रादधिकञ्च वृत्तिज्ञानमेव । एतदुत्तराधिकरणान्ते तत्त्वप्रकाशिकायां 'अत्र वायोः परात्परनित्यत्वं स्वातन्त्र्यलक्षणं देहादेरपि नित्यत्वं च नास्त्येव। तथापि सम्यगनित्यताशून्येभ्यो वियदादिभ्यः स्वरूपातिरिक्तज्ञाननित्यत्वाभिप्रायेणातिशयेन नित्यतोच्यते' इत्युक्तत्वात् । ननु प्रलये वृत्तिज्ञानतिरोभावाभावे वायोः सुप्त्यनुपपत्तिः । वृत्त्युपरमस्यैव सुप्तित्वात् । नच नास्त्येव वायोः प्रलये सुप्तिरिति वाच्यम् । 'सुषुप्तिसंस्थान् ब्रह्मादिकान्' इति तदुक्तिविरोधापातात् । बह्मग्रहणेन वायोरपि गृहीतत्वात् । नच 'ब्रह्मादिकान्' इति अतद्गुणसंविज्ञानो बहुव्रीहिः । 'सुप्तास्तत्र यतो जीवाः सर्वे ब्रह्मशिवादिकाः' इति विशेषप्रमाणविरोधादिति चेन्मैवम् । यतस्तेषां सा अस्मत्स्वप्नावस्थासदृशी । मनोवृत्तेः सद्भावात् बाह्यव्यापाराभावाच्च । एवञ्च स्वप्नसुषुप्त्युभयसाधारणसुप्तिशब्दस्य तस्यामवस्थायां गौण्या वृत्त्या प्रयोगः । सुप्तिशब्दस्योभयसाधारणत्वं कुत इति चेत् । उक्तञ्च बृहद्भाष्ये स्वप्नसुषुप्त्युभयाभिप्रायेण तानि सुप्त इत्युक्तमिति । उक्तञ्च षट्प्रश्नभाष्यटीकायां 'स्वापोऽपि द्विविधः । स्वप्नः सुषुप्तिश्चेति'(४.१) इति । ततश्च वायोः वृत्तिज्ञानाविरोधिस्वप्न एव प्रमाणे सुप्तिशब्दार्थो नतु वृत्तितिरोभाव-रूपा प्रसिद्धा सुप्तिः अतो न कश्चिद्दोषः ॥

ननु प्रलये अन्येषामपि जीवानां मनोवृत्तिसद्भावेन कथं वायोरेवायं विशेषः । नच तत्र प्रमाणाभावः । 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' (का.उ.२.२.८) इति श्रुतेः परमेश्वरस्य स्वाप्नपदार्थस्रष्टृत्वे 'निर्मातारं..' (ब्र.सू.३.२.२) इति सूत्रभाष्ये प्रमाणत्वेनोपन्यासात् । एषु जीवेषु प्रलयादिषु सुप्तेषु इति काठकभाष्ये प्रलयपरत्वेन अस्या एव श्रुतेः व्याख्यातत्वाच्च । तदुभयपर्यालोचनया च प्रलये परमेश्वरस्य स्वाप्नपदार्थनिर्मातृत्वसिद्धिसम्भवात् । नच प्रलये निर्माणमात्रमत्रोच्यते । नतु तत्कालीनमिति वाच्यम् । 'भुञ्जानो नोत्सृजेद्वाचम्' इत्यादाविव प्रकरणप्राप्तत्वात् । स्वाप्नपदार्थज्ञानञ्च वृत्तिरूपमेवेति सिद्धे अन्येषामपि प्रलये वृत्तिसद्भाव इति चेन्मैवम् । सुप्तेषु इत्यत्र सुप्तिशब्देन इदानीन्तनसुप्तिविवक्षायां स्वाप्नपदार्थनिर्माणस्य प्रलयकालीनसुप्तिविवक्षायां ब्रह्मादिमनोवृत्तेः कालक्षणादेश्च निर्माणस्य श्रुत्यर्थतया विवक्षितत्वेन सर्वजीवानां प्रलये स्वाप्नपदार्थनिर्माणासिद्धेः । तस्मात्प्रलये वृत्तिज्ञानतिरोभावाभावो वायोरेवेति युक्तमिति ॥

ननु 'अतिरोहितविज्ञानात्' इत्यस्य बहुव्रीहित्वेन वायुपरत्वात् तेन सादृश्यं विरुद्धं तिरोभावाभावसादृश्यमित्यर्थ इति च अयुक्तमित्यत आह- **अतिरोहितविज्ञानादिति भावप्रधान इति** ॥ अतिरोहितविज्ञानस्य वायोर्भावः विज्ञानतिरोभावाभाव एव । अतो युक्तं तेन सादृश्यं उक्तं व्याख्यानञ्चेति भावः । परमात्मेत्यादिविशेषणद्वयस्य वैयर्थ्यं परिहरति- **परमात्मेति** ॥ रामः देहनाशादिरहितः परमचेतनत्वात् सनातनत्वाच्च इति । तत्र मुख्यामृतत्वे युक्तिद्वयमित्यर्थः । ननु सनातनत्वं नाम नित्यत्वं देहनाशादिरहितत्वमेवेति साध्यावैशिष्ट्यमिति चेन्मैवम् । नादेन सहितः सनादनः सनादन एव सनातनः । 'तृतीयो ऽतिशये' इति सूत्रात् । देहनाशादिरहितत्वेन श्रुतिप्रमित इति यावत् । अतो न साध्यवैशिष्ट्यम् । उक्तञ्च 'नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः' (गीता.२.२४) इत्यत्र नित्यपदेन पौनरुक्त्यमाशङ्क्य गीतातात्पर्यनिर्णये नादेन सह वर्तत इति सनादनः सनादन एव सनातनः इति ॥

ततश्च योऽसावित्यादिसार्धमन्त्रस्यायमर्थः । प्राणादिप्रतीकस्थं भगवन्तं प्रार्थयते- **योऽसावित्यादि** ॥ योऽसौ प्रसिद्धोऽसौ प्राणवाचकस्य असुशब्दस्य

सप्तम्यन्तमिदम् । प्राणे नियामकतया स्थितः पुरुषः स एव उपासकान्तर्गतः अहं अहेयत्वादहं शब्दवाच्यः । अस्मि नित्यास्तित्वेन प्रमितत्वात् अस्मिशब्दवाच्यः । तञ्च पश्यामि । अथवा पूषन्नित्यादिना पूषादिशब्दैः उपलक्षणया प्राणाद्यनेक-प्रतीकस्थत्वं विष्णोरुक्तम् । तत्र भगवतोऽधिष्ठानभेदप्रयुक्तभेदशङ्कायां योऽसावित्याद्यर्थः प्रवर्तते । योऽसौ प्रसिद्धोऽसौ प्राणे स्थितः । यश्चाहमस्मिशब्द-वाच्यतयोपासकेषु स्थितः । उपलक्षणमेतत् । यश्च पूषादिशब्दवाच्यतया पूषादिषु स्थितः स सर्वोऽप्येक एव । न अधिष्ठानभेदप्रयुक्त भेदवान् । ननु सोऽहमस्मि इति जीवान्तर्गतस्य नित्यास्तित्वम्, अहेयत्वेन कल्याणरूपत्वश्चोक्तम् । तन्न युक्तम् । प्रत्यक्षत एव देहस्य भस्मान्तत्वदर्शनात् । देहनाशे च तदन्तर्गतस्य जीववन्मरणाद्यवश्यम्भावादित्याशङ्कानिरासायोक्तम्- **वायुरनिलमित्यादि** ॥ यद्यपीदं शरीरं भस्मान्तं तथापि न तदन्तर्गस्य परमेश्वरस्य मरणादिदोषप्रसङ्गः । कुत इत्यतः कैमुत्येन परमेश्वरस्य अमृतत्वसिद्धिरित्याशयेनोक्तम्- **वायुरनिलममृतमिति** ॥ अनिलं व्यत्ययेन अनिलः । अः ब्रह्मैव निलं निलयनं आश्रयो यस्यासौ तथोक्तः । परमेश्वराश्रितो वायुरपि यदा अमृतं अमृतः अथ तदा परमेश्वरोऽमृत इति किमु वक्तव्यमिति ॥ १७ ॥

## उपनिषत्

**ओम् क्रतो स्मर कृतꣳ स्मर ओम् क्रतो स्मर कृतꣳ स्मर ॥१७॥**

## भाष्यम्

**भक्तानां स्मरणं विष्णोर्नित्यज्ञप्तिस्वरूपतः।**
**अनुग्रहोन्मुखत्वं तु नैवान्यत्किञ्चिदिष्यते ॥**

**इति ब्रह्मतर्के ॥ १७ ॥**

**टीका**- अथ प्रणवप्रतीकं प्रार्थयते- **ओमिति** ॥ ओतत्वादिगुणयुक्त क्रतो मां स्मर । मया कृतं ध्यानादिकं च स्मर इति । अभ्यासस्तात्पर्यार्थः । अत्र स्मरणं नाम प्रसिद्धमेवेति प्रतीतिं स्मृत्यैव परिहरति- **भक्तानामिति** ॥ भक्तकर्मकं यद्विष्णोः स्मरणं तदनुग्रहोन्मुखत्वमेव । विष्णौ यः स्मरणशब्दः प्रयुज्यते सः स्मरणकार्यानुग्रहोन्मुखत्व एव लक्षणया वर्तत इति यावत् । नैवान्यत्संस्कार-कारणकं ज्ञानमित्यर्थः । न केवलं भक्तविषय एव किन्तु

**सर्वत्रापीत्युक्तम्- क्वचिदिति ॥ कुतः? नित्यज्ञप्तिस्वरूपतः । स्मरणं हि अनुभवनाशे तज्जन्यसंस्कारसहकृतेन मनसा जायते । ईश्वरश्च नित्यज्ञप्तिस्वरूप इति तस्य स्मरणासम्भवाल्लक्षणाश्रयणमिति भावः ॥ १९ ॥**

**वामन**- एवं भगवन्तं स्तुत्वा प्रसादयन्ननुग्रहाय प्रार्थयति- **ओमिति** ॥ सर्वगुणैरोतत्वान्नारायण ओमित्युच्यते । तच्चोक्तं भगवतैवान्यत्र 'ओमशेषगुणाधार इति नारायणोऽप्यसौ' इति । व्यतिकरः कर्मणः । ततस्तारणशीलत्वात् क्रतुरिति ज्ञानमुच्यते । अतः क्रतो इति ज्ञानस्वरूपस्य हरेः सम्बोधनम् । 'स क्रतुर्ज्ञानरूपत्वात्' इति हि पुरस्ताच्चोक्तम् । हे यज्ञाख्य नारायण त्वत्पादैकसंश्रयानस्मान् अनुग्रहाय संस्मर । अस्माभिः कृतं त्वत्प्रार्थनमपि स्मर । अनुग्रहोन्मुखो भवेत्यर्थः । नहि स्मरणमात्रं तं प्रति प्रार्थनीयम् । सर्वज्ञस्य विस्मृतेरेवाभावात् । अत्र ब्रह्मतर्कवचनं चाऽह- **भक्तानामिति** ॥ १९ ॥

**श्रीनि**- प्रसिद्धं संस्कारजन्यज्ञानमित्यर्थः । कार्येत्युक्त्या लक्षणाबीज-सम्बन्धो दर्शितः । न केवलमित्यनन्तरं भक्तानां स्मरणमित्युक्तत्वादिति शेषः । एवेत्यनन्तरमिदं स्मरणशब्दवाच्यमित्येतावान् वाक्यशेषः मोक्षमुद्दिश्य इति शेषः ॥१९॥

**छलरी- ओतत्वादिगुणयुक्तेति** ॥ 'अव रक्षणे' इत्यादिना धातु-व्याख्यानेनोक्तगतिप्रवेशनाद्यर्थकस्य अवतेः 'अवतेष्टिलोपश्च' इत्युणादिसूत्रेण मन्प्रत्यये प्रत्ययटिलोपे च 'ज्वरत्वर...' इत्यादिना धातोरूठादेशे 'सार्वधातुकार्ध-धातुकायोः' इति गुणे ओमितिरूपम् । तथा च ओतत्वं रक्षकत्वम्। आदिशब्दात् गतिकान्तिप्रवेशनादियुक्तत्वं गृह्यत इति भावः ॥ **क्रतो इति** ॥ ज्ञानस्वरूपेत्यर्थः ॥ **प्रसिद्धमेवेति प्रतीतिमिति** ॥ संस्कारसहितमनोमात्रजन्य ज्ञानमित्यर्थः ॥ **अनुग्रहोन्मुखत्वमिति** ॥ अनुग्रहः प्रसादः तेन उन्मुखत्वं नाम अभिमुखत्वमित्यर्थः ॥ **सर्वत्रापीति** ॥ जरासन्धादिद्वेषिहननविषये कृष्णस्य यत्स्मरणं तदपि भीमादिष्वनुग्रहोन्मुखत्वमेवेति भावः ॥१९॥

**सत्य**- ननु स्मरणवाचकस्य स्मरणशब्दस्य कथमनुग्रहोन्मुखत्वपरत्वमित्यत आह- **विष्णौ यः स्मरणशब्द इति** ॥ स्मरणकार्येति शक्यसम्बन्धकथनम् ॥१९॥

**नृसिंह**- प्रणवस्यानेकार्थत्वात् ओतत्वादीत्यादिशब्दः । यथाह-

ओतत्वादवनान्मानादधिकोच्चत्वकारणात् ।
आनन्दादोजसश्चैव भरणादोमुदाहृतः ॥ इति ॥

'कृतं स्मर' इत्यत्र कृतं कर्मेत्यर्थाङ्गीकृतौ मोक्षस्य कर्मासाध्यत्वेन तदुक्तेः वैयर्थ्यं स्यादिति कृतमनुष्ठितं ध्यानमित्युक्तम् । 'नैवान्यत्' इति वाक्ये क्वचित् कुत्रापि भक्तविषयेऽन्यन्नैवेत्यर्थोऽवभासते, प्रकरणादिदश्चायुक्तम् । विष्णोः कुत्रापि विषये स्मरणाभावेन विशिष्योक्त्यसम्भवात् । अन्यथा नित्यज्ञप्तिस्वरूपत्वहेतोः अप्रयोजकतापातात् । अत एवाह- **न केवलमिति** ॥ ननु विष्णोः स्मरणशब्दस्य अनुग्रहोन्मुखत्वलक्षणायां मुख्यार्थानुपपत्तौ वाच्यायां 'नित्यज्ञाप्तिस्वरूपतः' इति किमुच्यत इत्यतो लक्षणाबीजानुपपत्तिसाधनायैव इदमित्याशयेनाह- **ईश्वरश्चेति** ॥ १९ ॥

**कल्श**- क्रतो स्मर कृतं स्मर इत्यत्र भाष्यम्,

भक्तानां स्मरणं विष्णोर्नित्यज्ञप्तिस्वरूपतः।
अनुग्रहोन्मुखत्वं तु नैवान्यत्किञ्चिदिष्यते ॥

इत्यत्र टीका भक्तकर्मकं यद्विष्णोः स्मरणं तदनुग्रहोन्मुखत्वमेव । विष्णौ प्रयुक्तः स्मरणशब्दः अनुग्रहोन्मुखत्वरूपकार्ये लक्षणया वर्तत इति यावत् । न केवलं भक्तविषय एव किन्तु सर्वत्रापीत्युक्तम्- **क्वचिदिति** ॥ कुतः नित्यज्ञप्तिस्वरूपतः। स्मरणं त्वनुभवनाशे तज्जन्यसंस्कारसहकृतेन मनसा जायते । ईश्वरश्च नित्यज्ञानस्वरूप इति तस्य स्मरणासम्भवाल्लक्षणाश्रयणमिति भाव इति ॥

अत्र शङ्का । एवं सति सुप्तस्यैतावन्तं कालं सुखं सुप्तोऽस्मि न किञ्चिदहमवेदिषमित्यौत्तरिकानुस्मृतिर्न स्यात् । सुषुप्तिकालीनानुभवनाशासम्भवात् । न चेष्टापत्तिः । जिज्ञासानयटीकादिविरोधादिति ॥

अत्रेदं समाधानम् । अत्र नाशशब्देन ध्वंसवदावृतत्वमपि विवक्षितम् । आवृतस्यापि स्वकार्याक्षमत्वात् । सुषुप्तेरन्यकाले स्वरूपसुखमावृतमिति तस्य ज्ञानमावृतमिति तत्कालीनसुखानुभवजन्यसंस्कारसहकृतेन मनसोत्तरकाले स्मृत्युपपत्तिरिति । नच तदानीं मनस उपरतत्वात्कथं संस्कारात्मना परिणाम इति

वाच्यम् । सुप्त्यवस्थोपरमस्य ज्ञानरूपवृत्त्यभावमात्रेणोपपत्त्या संस्काराङ्गीकारा-विरोधात् । अन्यथा स्मृतित्वानुपपत्तेरिति ॥

नच मुक्तानां संसारानुस्मरणमस्ति नवा । आद्ये मनसोऽभावेन संस्कारानुपपत्तिः । द्वितीये 'आजन्ममरणं स्मृत्वा मुक्ता हर्षमवाप्नुयुः' इति स्मृतिविरोध इति वाच्यम् । स्मृतिप्रकरणस्य विचार्यत्वात् । स्वरूपमनस्येव संस्काराख्योऽतिशयः सांसारिकवृत्तिरूपानुभवेन व्यक्तः मुक्तौ तिष्ठतीत्यप्याहुः । तथाच नित्यज्ञानस्वरूपत्वादित्यस्य नित्यानावृतज्ञानस्वरूपत्वादित्यर्थः ॥ १९ ॥

**रघु**- विशकलिततया टीकोक्तस्य मन्त्रार्थस्य बुद्ध्यारोहाय सङ्ग्रहान्न दोषः शङ्कनीयः । एवमन्यत्रापि । उत्तरं भाष्यमवतारयितुमोमित्यादिश्रुतिप्रतिपाद्यं तावदाह- **अथ प्रणवप्रतीकमिति** ॥ प्रणवप्रतीकमिति बहुव्रीहिः । 'भगवन्तम्' इति शेषः । अग्निप्रतीकं भगवन्तमिति वक्ष्यमाणत्वात् । ओंप्रतीकात्मकेति व्याख्यानं अकारवाच्येन तत्पदार्थेनोकारवाच्यस्य त्वंपदार्थस्याभेदो मकारेणोच्यत इति व्याख्यानं च अनुपपन्नमप्रामाणिकत्वात्, प्रमाणविरुद्धत्वाच्चेत्याशयेन 'ओतमत्र जगद्यस्मादों तस्मात् भगवान् हरिः' (मां.उ.१.१) इत्यादिप्रमाणं मनसि निधाय व्याचष्टे- **ओतत्वादिगुणेति** ॥ जगदाधारत्वादिगुणयुक्तेत्यर्थः ॥ **मां स्मरेति** ॥ अनेन श्रुतौ मामित्यध्याहर्तव्यमित्युक्तं भवति । ततश्च क्रतो स्मर । 'यन्मम कर्तव्यं तस्य कालोऽयं प्रत्युपस्थितः । अतः तत्स्मर' इति व्याख्यानमयुक्तम् । कृतश्रवणदिकेन मोक्षार्थं साक्षात्काराय भगवदनुग्रहस्य प्रार्थनीयत्वेऽपि स्वकर्तव्यस्मरणस्य अप्रार्थनीयत्वात् भगवतः स्मरणासम्भवेन तत्प्रार्थनानुपपत्तेश्चेति भावः ॥ **ध्यानादिकं चेति** ॥ अनेन 'अग्ने यन्मया बाल्यप्रभृति अनुष्ठितं कर्म तच्च स्मर' इति व्याख्यानमयुक्तमित्युक्तं भवति । भक्तानामिति कर्तरि षष्ठीति भ्रमनिरासायाह- **भक्तकर्मकमिति** ॥ अनेन कर्मणि षष्ठीत्युक्तं भवति ॥ **अनुग्रहोन्मुखत्वमेवेति** ॥ अनेन एवशब्दसम्बन्धो दर्शितः । ननु अनुग्रहोन्मुखत्वं न स्मरणाभिन्नम् । नापि तत्पदवाच्यम् । तत्कथं सामानाधिकरण्यमित्यत आह- **विष्णाविति**॥ शक्यसम्बन्धसूचनाय स्मरणकार्येत्युक्तम् । मुख्यार्थानुपपत्त्यभावात् न लक्षणाङ्गीकार्येत्याशयेन शङ्कते- **कुत इति** ॥ १९ ॥

## उपनिषत्

[1]अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम ॥१८॥

**भाष्यम्** - वयुनं ज्ञानम् । 'त्वद्दत्तया वयुनयेदमचष्ट विश्वम्' (भाग.४.१०.८) इति वचनात् । जुहुराणं अस्मानल्पीकुर्वत् । युयोधि वियोजय ।

यदस्मान्कुरुतेऽत्यल्पांस्तदेनोऽस्मद्वियोजय ।
नय नो मोक्षवित्तायेत्यस्तौद्यज्ञं मनुस्स्वराट् ॥ इति स्कान्दे ॥

'युयु वियोगे' इति धातुः । भक्तिज्ञानाभ्यां भूयिष्ठां नम उक्तिं विधेम ॥१८॥

**टीका**- साक्षात्कारप्रार्थनानन्तरं अग्निप्रतीकं भगवन्तं मोक्षार्थं प्रार्थयते- **अग्न इति** ॥ 'वयुनानि कर्माणि' इति केषाञ्चिद्व्याख्यानम् । तदसत् । मोक्षस्य कर्मसाध्यत्वाभावेन तदुक्तेर्वैयर्थ्यप्रसङ्गादित्यभिप्रेत्य वयुनशब्दार्थमाह- **वयुनमिति**॥ वयुनशब्दस्य ज्ञानवाचित्वं कुत इति चेत् प्रयोगं दर्शयति- **त्वद्दत्तयेति** ॥ 'जुहुराणं कुटिलं' इत्यन्यथाप्रतीतिनिरासायाह- **जुहुराणमिति** ॥ 'अस्मान्' इत्यन्वयसिद्ध्यर्थमावर्तितम् । 'युयोधि' इत्यप्रतीतार्थपदं व्याख्याति- **युयोधीति** ॥ कुतोऽयं पदद्वयार्थ इत्यतः समाख्यानादित्याह- **यदिति** ॥ युयोधीत्यस्य वियोगार्थत्वसिद्धये धातुसूत्रमपि पठति- **युयु वियोग इति धातुरिति** ॥ धातुव्याख्यानमित्यर्थः । नम उक्तेः भूयिष्ठत्वमभ्यस्तत्वम् । अतोऽभ्यधिकार्थं वदन् नमस्कारस्य कथमुक्तित्वमित्याशङ्कां परिहरति- **भक्तीति** ॥ ततश्चायमर्थः । हे अग्ने अस्मान् सुपथा पुनरावृत्तिवर्जितेनार्चिरादिमार्गेण । राये मोक्षाख्यवित्ताय नय । कुतः? हे देव अस्मदनुष्ठितानि विश्वानि सम्पूर्णानि मोक्षाय पर्याप्तानीति यावत् । वयुनानि ज्ञानानि । भवान् वेद । प्रारब्धकर्मभिर्बद्धस्य कथं मोक्ष

---

१. सोऽग्निरङ्गप्रणेतृत्वाद्विश्वज्ञानविदां वरः । इतिच । (बृ.भा.७.१५.४)

**इत्यत उक्तम्- युयोधीति ॥ अस्मान् जुहुराणं अल्पीकुर्वत् । संसारे परिवर्तयदिति यावत् । एनः पापम् । अनिष्टं कर्मेति यावत् । अस्मद्युयोधि अस्मत्तो वियोजय । वयं तुभ्यं भूयिष्ठां नम उक्तिं विधेम । नतु तत्प्रतिकर्तुं शक्नुम इति ॥१८॥**

**वामन-** कथं तर्हि विशेषप्रार्थनमित्यत आह- **अग्ने नयेति** ॥ अत्राग्निशब्दस्यार्थः पुरस्तादेवोक्तः 'अग्निरङ्गप्रणेतृतः' इति वचनात् । हे नारायणाग्ने, संसारे सुखदरिद्रान् अस्मान् सुपथा शोभनेन ज्ञानमार्गेण । राये मोक्षसुखाख्यवित्ताय । नय, विश्वानि सर्वपदार्थविषयाणि, सर्वजनाश्रयाणि वा । वयुनानि ज्ञानानि । विद्वान् । 'वयुनं ज्ञानम्' इति व्याचख्यौ । 'त्वद्दत्तया' (४.१०.८) इत्यादि भागवतवचनात् । यत् पुनरस्माभिरनादिकालतः कृतमेनःपुञ्जं तदस्मत्तो युयोधि वियोजय । 'युयु वियोगे' इति धातोरुद्धरिष्यमाणत्वात् । जुहुराणं अस्मानतीव ह्रासयत् अल्पीकुर्वदित्यर्थः । स्कान्दे चैतदुक्तमित्याह - **यदस्मानिति** ॥ स्वराण् मनुः स्वायम्भुवः । सोऽयं मनुर्मन्त्रान्ते 'नमो विष्णवे महते करोमि' इति शाखान्तरमनुस्मरन् तस्मा एव विष्णवे नमस्करोति - **भूयिष्ठां त इति** ॥ हे नारायण, त्वत्परायणा वयं ते तुभ्यं भक्तिज्ञानादिभिः भूयिष्ठां नम इति उक्तिं विधेम । नचायं 'तेशब्दस्ते वयमिति बहुवचनान्तः शङ्क्यः । अनुदात्तत्वात् । 'ते षष्ठ्यर्थोऽनुदात्तः स्यादुदात्तो बहुवाग्भवेत्' इति स्वयमेव भगवानन्यत्राह । 'अनुदात्तं सर्वमपादादौ' (सि.कौ.४०३) इति सूत्राद् युष्मदस्मच्छब्दयोरादेशरूपाणां ते मे इत्यादीनां सर्वेषामप्यनुदात्तत्वनियमाच्च । अपि च पादादौ वाक्यादौ चैतेषां प्रयोगनिषेधोऽपि नियमाद् बोद्धव्यः । अतस्तुभ्यं नमउक्तिं विधेमेत्येवात्र शब्दयोजना साध्वीति सिद्धम् । अपरथा नम्यानुक्तिप्रसङ्गाच्च ॥१८॥

**वादि-** मोक्षप्राप्तये 'तेऽर्चिषमभिसम्भवन्ति' इति श्रुत्युक्तार्चिर्नामकाग्निकुमारलोकस्य अग्निशिखाद्वारा प्राक्प्राप्यत्वात् । गजतुरगशिबिकादिना राजमन्दिरं गच्छतोऽपि नदीनिरोधपरिहाराय नद्युत्तारकपुरुषप्रार्थनवत्, राजान्तःपुरप्रवेशाय प्राक् प्रतिहारप्रार्थनवद्वा 'अग्ने नय' इत्यग्निस्थभगवत्प्रार्थनमिति भावेनाह- **अग्निप्रतीकमिति** ॥ यद्वा 'कुर्वन्नेवेह कर्माणि' इति कर्मानुष्ठानस्यो-

क्तत्वात् कर्मानुष्ठातृणाञ्च 'अग्नौ क्रियावतां विष्णुर्योगिनां हृदये हरिः' इति स्मृतेः अग्नेरपेक्षितत्वात् अग्निप्रार्थनमिति ज्ञातव्यम् ॥ १८ ॥

**श्रीनि- वयुनानि कर्माणि इति** ॥ तथा च अग्ने, राये मोक्षाय नय, यतः तत्साधनभूतानि कर्माणि त्वं वेदेत्यर्थः । तदुक्तेः वयुनानि वेदेत्युक्तेः॥ **अन्यथेति** ॥ न तच्छब्दार्थत्वेनेत्यर्थः । 'युयु' इत्यस्यैव धातुत्वेन 'वियोगे' इत्यस्य धातुत्वाभावादित्यत आह- **धात्विति** ॥ **अभ्यस्तत्वमिति** ॥ पुनःपुनरुक्तिरिति यावत् । नमस्कारस्य देहव्यापारविशेषस्य । उक्तित्वं शब्दत्वम् ॥ **नम उक्तिं विधेम इति** ॥ नमश्शब्दं उच्चारयाम इत्यर्थः । तत्प्रतिकर्तुं मोक्षदानादिरूपत्वदुक्तप्रकारस्य प्रत्युपकर्तुं इत्यर्थः ॥ १८ ॥

**छलारी- आवर्तितमिति** ॥ सुपथा रायेऽस्मान् नय इत्यत्र अन्वितमेव अस्मानिति पदं जुहुराणमिति पदस्य अल्पीकरणार्थकस्य प्रतियोगिसापेक्षितत्वेन अनन्वितत्वात् प्रतियोगिसमर्पकत्वेन अन्वयसिद्ध्यर्थं भाष्यकारैः आवर्तितमिति भावः ॥ **नमस्कारस्येति** ॥ श्रुतौ नमःशब्देनोक्तस्य शब्दत्वाभावादिति शेषः । भाष्ये इतिशब्दाध्याहारेण नमःशब्दस्योक्तित्वं समाहितमिति बोध्यम् ॥ १८ ॥

**सत्य- प्रयोगदर्शनादित्याहेति** ॥ 'वयुनमभिख्या' इत्येकादशप्रज्ञानामसु पठितत्वादित्यपि द्रष्टव्यम् । उपलक्षणमेतत् ॥ **अस्यानित्यस्यान्वयसिद्ध्यर्थमिति**॥ 'जुहुराणम्' इत्यस्यान्वयसिद्ध्यर्थं अस्मानित्येतदावर्तितमित्यर्थः ॥ **प्रारब्धकर्मप्रतिबद्धस्येति** ॥ **न** चैवं 'युयोधि' इति वियोगप्रार्थनमयुक्तम् । प्रारब्धानां भोगैकनाश्यत्वादिति वाच्यम् । प्रारब्धानां कर्मणामुपमर्दस्य विद्यमानत्वेन तदभिप्रायेण युयोधीति वियोगप्रार्थनोपपत्तेरिति । पापस्येवानिष्टपुण्यस्यापि मोक्षप्रतिबन्धकत्वादाह- **अनिष्टं कर्मेति यावदिति** ॥ १८॥

**नृसिंह**- विशिष्टमपि जुहुराणपदव्याख्यानमिति भ्रान्तिं वारयति- **अस्मानितीति** ॥ **अर्चिरादीति** ॥ ननु स्वायम्भुवमनोः देवोत्तमस्य कथमर्चिरादिप्राप्तिः येन तत्प्राप्तिप्रार्थनं सङ्गच्छेत । देवानां स्वोत्तमेषु देहलयादेव भगवत्प्राप्तेः अमरनिकरनिरन्तरपरमादरास्वादितरम्यचरणारविन्दसौन्दर्यमकरन्दसौरभेण भगवता बादरायणेन 'वाङ् मनसि दर्शनाच्छब्दाच्च' (ब्र.सू .४.२. १)

इति तथा निर्णयप्रणयनात् 'उत्क्रम्य मानुषा मुक्तिं यान्ति देहक्षयात्सुराः' (अणु. भा.४.४) इति भगवता भाष्यकृता भाषितत्वाच्चेति चेन्मैवम् । अंशावतरणे कथिततत्वात् सपरिवारस्य प्रार्थनाच्च । यद्वा 'सुपथा' इत्यनेन स्वप्राप्यदेवतायां देहक्षयलक्षणमार्गोऽभिमतोऽस्तु टीकायां ज्ञानिसाधारण्येनोक्तिरित्यादि बोध्यम् ॥ **अस्मद्युयोधीति** ॥ 'उपमर्दं च'(ब्र.सू.३.४.१६) इत्यादिन्यायोऽत्रानुसन्धेयः। योऽसावसाविति मुख्यप्राणास्य अत्यतिशयितत्वादेव हि तस्य मुख्यत एव भगवत्प्रतीकतया ग्रहणम् । इतरसर्वापेक्षयातिशयश्चेन्दिरारमणे प्रीत्यतिशययोगेनैव यथोक्तं 'तस्माद्विष्णवभिसम्बन्धात्पारावर्यं सुरेष्विदम्' इति 'वायुरनिलममृतम्' इत्यत्र च परं ब्रह्माख्यनारायणप्रसादात् संसारिण एव वायोरमृतत्वमभिहितम् । तादृशत्वं च न कुत्रापीति वायोर्नारायणो निरतिशयोपकारकश्चेति लभ्यते । अः ब्रह्मैव निलं निलयनं यस्य वायोरिति परमप्रियत्वं च द्योतितम् । ब्रह्मणः प्रमितं च बळित्थेत्यादिना गिरिशगरुडपुरन्दरगुरुतरणिवरुणाद्यमरवराराधितपादपङ्कजस्य वायोरंशभूतोऽयमानन्दतीर्थमुनिः सुजनेष्टचिन्तामणिरिति ॥ १८ ॥

**कल्ला-** 'अग्ने नय सुपथा राये ' इत्यत्र टीकां 'सुपथा पुनरावृत्तिशून्येनार्चिरादिमार्गेण इति' अत्र शङ्का । मन्त्रद्रष्टुः स्वायम्भुवमनोः देहलययोग्यत्वान्मार्गप्रार्थनानुपपत्तिरिति । अत्र समाधानम् । अस्यामुपनिषदि स्वायम्भुवमनोरिव प्रतीकालम्बनानामन्येषामप्यधिकारित्वात् । मनुस्तु परमन्त्रत्वेन कांश्चिन्मन्त्रान् दृष्टवान् । उक्तश्च टीकायां 'यद्यप्यसौ स्वपरमोक्षार्थं तुष्टाव' इति । तथा 'मन्वादीनामधिकारिणामिति च' इति । 'जुहुराणमेनः' इत्यत्र किमप्रारब्धं विवक्षितं किं वा प्रारब्धम् । नाद्यः । तस्य पूर्वमेव नाशात् । 'वयुनानि' इत्युक्त्या अस्य प्रार्थनस्य ज्ञानसम्पत्त्युत्तरकालीनत्वावगमात् । न द्वितीयः । तस्य भोगैकनाश्यत्वेन 'वियोजय' इति प्रार्थनायोगात् । अस्यैनसः प्रारब्धत्वं प्रारब्धकर्मभिः प्रतिबद्धस्य कथं मोक्षत्वमिति टीकायामेवोक्तम् । 'एनः पापमनिष्टं कर्मेति यावदिति च' इति । अत्राहुः । षट्प्रश्ने सूर्यलोके 'पाप्मना विसृज्यते' इत्युक्तत्वात् 'वैश्वानरे द्युनद्यां वा सूर्ये वा' इत्युक्तत्वाच्च तत्परमिदं प्रारब्धपापशेषस्यामुक्तस्यापि तत्र लयो भवतीति प्रार्थना युक्ता ।

'विरजातरणावधिः' इत्येतत्तु पुण्यप्रारब्धविषयम् । तस्य निवृत्तकर्मान्यत्वात् किञ्चिद्दुःखमिश्रसुखत्वाद्युक्तमालिङ्गलयं संसारानुवृत्तिरिति युक्तमिति ॥ १८ ॥

**इति श्रीमत्कल्लापुरीयश्रीनिवासार्यवर्यैः**

**लिखितोऽयं तत्कृतः ईशावास्यभाष्यवाक्यार्थः समाप्तः ॥**

**रघु**-'अग्ने नय' इति प्रार्थनस्य पूर्वेण सङ्गतिमाह- **साक्षात्कारेति** ॥ भाष्ये त्वद्दत्तयेत्येतद्भागवते भगवन्तं प्रति ध्रुवस्य वचनम् । ननु अस्मान् अल्पीकुर्वेदित्ययुक्तम् । अस्मानित्यस्य नयेत्यनेनान्वितत्वादित्यत आह- **अस्मानित्यन्वयसिद्ध्यर्थमावर्तितमिति** ॥ अस्मानिति आवर्तितमित्यन्वयः । आवर्तनप्रयोजनकथनमन्वयसिद्ध्यर्थमिति । जुहराणमित्यस्यान्वयसिद्ध्यर्थमित्यर्थः । अस्मानित्यस्य अन्वयसिद्ध्यर्थमावर्तितमिति पाठे । अस्य जुहुराणमित्यन्वयसिद्ध्यर्थमस्मानिति आवर्तितमिति योजना द्रष्टव्या ॥ **समाख्यानादित्याहेति** ॥ यद्यपि भाष्ये पूर्वार्धेनैव पदद्वयं व्याख्यातम् । तथापि समाख्यानत्वज्ञापनाय अस्मानित्यावृत्तेः प्रमाणिकत्वज्ञापनाय च उत्तरार्धोदाहरणमिति ज्ञातव्यम् ॥ **धातुसूत्रमिति** ॥ धातुव्याख्यानरूपं सूत्रमित्यर्थः । ननु युयु इत्यस्य धातुत्वेऽपि विशिष्टस्य तदभावात् धातुरित्ययुक्तमित्यत आह- **धात्विति** ॥ ॥ **अर्चिरादिमार्गेणेति** ॥ एतच्च उपलक्षणम् । स्वोत्तमदेवतासु लयेन चेत्यपि द्रष्टव्यम्। यथाश्रुते स्वायम्भुवादिदेवानामर्चिरादिमार्गरहितानां प्रार्थनानुपपत्तेः । **मोक्षाख्यवित्तायेति** ॥ अनेन 'राये धनाय कर्मफलभेगाय' इत्यर्थ इति व्याख्यानमपास्तं भवति । 'नय नो मोक्षवित्ताय' इति समाख्याविरुद्धत्वात् । एतदर्थं च उत्तरार्धोदाहरणं कृतम् । 'विश्वं पूर्णमिहोच्यते' इति प्रमाणानुसारेणाह- **सम्पूर्णानीति** ॥ भगवदितरेषामसम्पूर्णज्ञानत्वादाह- **मोक्षायेति** ॥ प्रारब्धपुण्यस्यापि मोक्षप्रतिबन्धकत्वात् पापमात्रग्रहणमयुक्तमित्यतो विशेषशब्दस्य सामान्ये लक्षणेत्यभिप्रेत्याह- **कर्मेति यावदिति** ॥ प्रारब्धपुण्यपापात्मकमित्यर्थः ॥ **अनिष्टमिति** ॥ परमपुरुषार्थविरोधीत्यर्थः । एतच्च स्वरूपकथनम् । सञ्चितेष्टनाशस्यापुरुषार्थत्वेन सञ्चितानिष्टपुण्यस्यैव नाश्यत्वेन सञ्चितपुण्ये इष्टानिष्टपुण्यविभागसद्भावेऽपि प्रारब्धे पुण्यमात्रस्य भोगनाश्यत्वेन

व्यावर्त्याभावादिति ज्ञेयम् ॥ **वियोजयेति** ॥ भोगेन नाशयेत्यर्थः ॥ **भूयिष्ठामिति** ॥ 'भक्तिज्ञानाभ्याम्' इति शेषः । तेन 'भूयिष्ठां बहुतराम्' इति व्याख्यानं निरस्तं भवति । नम उक्तिं नम इत्युक्तिम् । इति शब्दस्य ततश्चायमर्थ इत्यनेनान्वयः ॥१८॥

**भाष्यम्**

**पूर्णशक्तिचिदानन्दश्रीतेजःस्पष्टमूर्तये ।**
**ममाभ्यधिकमित्राय नमो नारायणाय ते ॥**

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं**
**ईशावास्योपनिषद्भाष्यं सम्पूर्णम् ॥**

**टीका- अथ समापितभाष्योऽपि भगवानाचार्यो 'यत्ते रूपं कल्याणतमं' 'योऽसावसौ पुरुषः' इत्यादिना प्रतिपादितं नारायणं स्तुतिनतिभ्यां प्रीणयति- पूर्णेति ॥ पूर्णशक्तिचिदानन्दश्रीतेजांस्येव मूर्तिर्यस्येत्युक्ते करचरणादिमान् विग्रहो नास्तीति प्रतीतिः स्यात् । अत उक्तम्- स्पष्टेति ॥ स्पष्टा प्रसिद्धा । करचरणादिमती इत्यर्थः । अभ्यधिकमित्रं निरतिशयोपकारकम् । अतिपरमप्रीतिविषयश्च इति ॥**

**कमलावदनाम्भोजराजहंसाय विष्णवे ।**
**नमो जगज्जनिस्थेमहेतवे परमात्मने ॥**

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य**
**ईशावास्योपनिषद्भाष्यस्य टीका श्रीमज्जयतीर्थभिक्षुविरचिता समाप्ता ॥**

**वामन-** अथेदानीं गुरूणां गुरुतमो भाष्यकारभट्टारको ग्रन्थावसानेऽपि स्वकृतसमर्पणपूर्वकं स्वेष्टदेवतायै नारायणाय नमस्करोति- **पूर्णेति** ॥

सृष्टिसंहारनियमज्ञापनादौ स्वशक्तयः ।
सम्पूर्णा यस्य सततं नारायण नमोऽस्तु ते ॥

उक्तशक्तिचिदानन्दश्रीतेजोबलपूर्वकाः ।
गुणाः सुसान्द्रा यन्मूर्तिर्नमो नारायणाय ते ॥

श्रीमदानन्दतीर्थार्यमहाचार्यस्य सन्मतेः।
अत्यन्ताधिकमित्राय नमः श्रीवल्लभाय ते ॥

यस्य त्रिरूपाण्युदितानि वायोर्वेदे बलज्ञानवतो बलादौ ।
दशप्रमत्याख्यतृतीयरूपी याज्ञीयभाष्यं कृतवान् रमेशे ॥

याज्ञीयमन्त्रोपनिषत्सुभाष्यटीकामिमां लेशत एव कृत्वा ।
भक्त्या हरावर्पयतीन्दिरेशे त्रैविक्रमार्यानुचरोऽस्य तुष्ट्यै ॥

वन्दे रमेशं विधिवायुवीन्द्रशेषेशशक्रादिसुरान् सभार्यान् ।
वन्दे पुनर्व्यासहयास्यमध्वान् जगद्गुरूनप्यथ मद्गुरूंश्च ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादविरचितयाज्ञीयमन्त्रोपनिषद्भाष्यटीका वामनपण्डिताचार्य(त्रैविक्रमार्यदास)विरचिता समाप्ता ॥**

**वादि-** नियुङ्क्ते देहिनो योऽन्तः स्वयं भुङ्क्ते सुखानि च ।
तदन्ते मुक्तिदस्तं ते भजन्ते चिन्तितार्थदम् ॥ १ ॥

ग्रन्थेनानेन भगवानिन्दिरारमणः प्रभुः ।
नन्दितीर्थमुनेर्बन्धुः स दद्यात्सकलेप्सितम् ॥ २ ॥

**॥ इति श्रीमत्कविकुलतिलकश्रीवादिराजपूज्यचरणविरचिता ईशावास्योपनिषद्भाष्यटीकाप्रकाशिका गुर्वर्थदीपिका समाप्ता ॥**

**श्रीनि-** भाष्योऽपीत्यपिशब्दात् मङ्गलभूतसमाप्तेर्जातत्वात् पुनः मङ्गलकरण-मयुक्तमिति सूचयति । तथाच अपि यद्यपि समापितभष्यस्तथापि आदरविशेषादिति शेषः ॥ **अभ्यधिकेति** ॥ असाविति प्राणस्थत्वोक्त्या अर्थादभ्यधिकमित्रत्वं लब्धमिति ध्येयम् ॥ कमला महालक्ष्मीः ॥

याज्ञीयोपनिषद्भाष्यटीकार्थोऽनुदितो मया।
तेनास्तु ज्ञानदो मह्यं श्रीनिवासो हरिः सदा ॥

**इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचिता याज्ञीयोपनिषद्भाष्यटीकाटिप्पणी समाप्ता ॥**

**छलारी- यत्ते रूपमिति** ॥ भाष्ये रूपमित्यस्य मूर्तये इति व्याख्यातम् । कल्याणतममित्यस्य पूर्णशक्तिरित्यादिकम् । 'योऽसावसौ पुरुषः' इत्यत्र असुशब्दस्य मुख्यप्राणवाचकत्वात् 'ममाभ्यधिकमित्राय' इति व्याख्यानमवगन्तव्यम् । समापितेशावास्यभाष्यटीको जयतीर्थवर्यः अन्तेऽपि नतिस्तुतिभ्यां हरिं प्रणमति- **कमलेति** ॥ जगज्जनिस्थेमहेतवे ॥ जगज्जन्मस्थितिकारणाय । स्थिरशब्दात् 'पृथ्व्यादिभ्यः'(सि.कौ १७८४) इति इमनिच्प्रत्यये स्थिरेति स्थादेशे 'यस्य..' (सि.कौ.३११) इत्यकारलोपे स्थेमेति नान्तं रूपमिति ज्ञेयम् ॥

रमाब्रह्मशिवेन्द्रादिदेवतावन्दितो विभुः ।
श्रीमध्वजयतीर्थादिपूजितः प्रीयतां मम ॥

ईशावास्योपनिषदो भाष्यटीका सुपञ्चिका ।
छलारिनरसिंहस्य कृतिः स्याद्विष्णुतुष्टये ॥

**॥ इति श्रीमच्छलारिनरसिंहाचार्यविरचिता**
**श्रीमदीशावास्योपनिषद्भाष्यटीकापञ्चिका समाप्ता ॥**

**सत्य**- अथ समापितयाज्ञीयमन्त्रभाष्यव्याख्यानोऽपि भगवान् टीकाकारः कमलाकामुकं नतिस्तुतिभ्यां प्रीणयति- **कमलेति** ॥ अनेन भगवती च वन्दिता भवति ॥

लोकमातृपतिं कञ्जजाततातं पितामहम् ।
मृडादिसुरवर्याणामीडे श्रीबादरायणम् ॥

**॥ इति श्रीमत्सत्यव्रतपूज्यपादशिष्येण सत्यप्रज्ञभिक्षुणा रचिता**
**ईशावास्यभाष्यटीकाभावप्रकाशिका सम्पूर्णा ॥**

**नृसिंह**- अथ भाष्यव्याख्यां समाप्य स्वग्रन्थस्य पुरुषार्थहेतुतालाभाय अन्ते परमात्मानं स्तुतिनतिभ्यां प्रीणयति- **कमलेति** ॥ विष्णवे नम इत्येतन्मात्रोक्तावस्याधिकृतत्वं न प्रतीयेत । आत्मैवेत्यत्रोच्यते । अतः परमात्मन इति विशेषणम् । आत्मशब्देन विष्णुरेवाभिप्रेयते । तस्यैव परमात्मत्वेन आत्मशब्दमुख्यार्थत्वादिति भावः । नम्यत्वोपपादकं याथातथ्यत इत्यादिनोक्तं तन्माहात्म्यमाह- **जगदिति** ॥

विष्णोर्जगत्सृष्ट्यादिप्रवृत्तिश्च नानन्दातिशयलाभार्थम्, किं नाम, आनन्दोद्रेकादेव कमलाभर्तृत्वेन पूर्णानन्दत्वावगमादित्याशयेनाह- **कमलेति** ॥ रमापतित्वमभिधाय तस्य जगत्कारणत्वोक्त्या अशेषजगदुत्पत्त्यादौ रमाया अङ्गत्वं योजयति । स्मर्यते च 'मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्' ( गीता.९.१०) इति, 'आकाश एव तदोतं च प्रोतं च' (बृ.उ.६.८.७) इति श्रुतिः । सकलवाङ्मनसविशिष्टायाः भाष्याधिदेवतायाः महालक्ष्म्या अपि तच्छेषतया वन्द्यत्वलाभाय च कमलेत्यादि-विशेषणम् । तदुपपादनाय तन्मुखाम्भोजविषये राजहंससाम्यं विष्णोरुक्तम् । एवञ्च इन्दिरायां निरतिशयप्रीतेर्लाभात् वन्दिता च सा परब्रह्मविषयिणीं रमणीयविद्यां सम्पूर्णं च भाग्यं प्रयच्छति महालक्ष्मीः ॥

नमो नमोऽस्तु हरये गुणसर्वस्वमूर्तये ।
इन्दिरामध्वहृदये वसतेऽभीष्टदायिने ॥ १ ॥

रमाभृङ्गवरालीढसौन्दर्यरससौरभम् ।
नवं नवं सदा विष्णोर्भाति श्रीमुखपङ्कजम् ॥ २ ॥

श्रीकेरेशमुखान्सर्वान् जयतीर्थपराभिधान् ।
नरसिंहार्यवर्यांश्च भक्त्या वन्दे निरन्तरम् ॥ ३ ॥

नारायणपदाम्भोजे भ्रमरायितमानसान् ।
पूर्णबोधगुरून् वन्दे सर्वविद्याविचक्षणान् ॥ ४ ॥

तच्छिष्याणां कनिष्ठेन नृसिंहाख्येन तुष्टये ।
विष्णोरत्यल्पमतिना कृतेयं भावदीपिका ॥ ५ ॥

**॥ इति श्रीपूर्णबोधाचार्यशिष्यनृसिंहायार्यकृतम्**
**याज्ञीयमन्त्रोपनिषद्भाष्यटीकादुर्गमवाक्यार्थविवरणं समाप्तम् ॥**

**रघु**- समापितभाष्योऽपीत्यपिपदेन न भगवतो भाष्यकारस्य समाप्त्युद्देशेन नत्याद्यनुष्ठानम्। येन समाप्त्यनन्तरं तद्व्यर्थमिति शङ्क्येत किन्तु स्वभाव इति सूचयति । भाष्ये पूर्णेत्यादिविशेषणद्वयोपादानस्य अभिप्रायमाह- **यत्ते रूपमित्यादि**॥ अत्र पूर्णशक्तीत्याद्येन विशेषणेन 'यत्ते रूपं कल्याणतमम्'

इत्येतत्प्रतिपादितस्य नारायणस्य स्तुतिः कृता भवति । रूपशब्दं मूर्तिपरतया व्याख्याय मूर्तेः कल्याणतमत्वस्य पूर्णशक्त्याद्यात्मकत्वकथनेन उपपादनात्। 'ममाभ्यधिकमित्राय' इति द्वितीयविशेषणेन 'योऽसावसौ पुरुषः' इति प्राणप्रतीकस्थतयोक्तनारायणस्य स्तुतिः कृता वेदितव्या । अधिकमित्रत्वोक्त्या प्रतीकान्तरे भगवदुपासनापेक्षया प्राणप्रतीके भगवदुपासनस्य भगवदतिप्रीतिहेतुत्वेनावश्यकत्वोपपादनादिति द्रष्टव्यम् ॥ **स्तुतिनतिभ्यामिति** ॥ नम इत्युक्तेः नतित्वं प्रागेव समर्थितं वेदितव्यम् । मूर्तेः पूर्णशक्त्यादिनिर्मितत्वादिप्रतीतिं निरस्यन् स्पष्टपदव्यावर्त्यमाह- **पूर्णशक्तीत्यादि** ॥ **करचरणादिमतीत्यर्थ इति** ॥ अत्र च 'सज्ज्ञानानन्दशीर्षोऽसौ' इत्यादिप्रमाणं पूर्वोदाहृतमनुसन्धेयम् ॥

ननु 'प्रत्युपकारनिरपेक्षयोपकारकृत् सुहृत्' 'क्लेशस्थानं निरूप्य निरूप्य यो रक्षां करोति स मित्रम्' इति गीताभाष्ये 'अनिमित्तस्नेहवान् तु सुहृज्ज्ञात्वोपकारकृत् मित्रम्' इत्यादिगीतातात्पर्ये च मित्रादिलक्षणमुक्त्वा 'सुहृदेषु विशिष्यते' इति सुहृदो मित्रापेक्षया आधिक्यस्य उक्तत्वादत्रापि ममाभ्यधिकसुहृदे इति वक्तव्यम् । तत्कथं मित्रायेत्युक्तमित्यतोऽभ्यधिकमित्रत्वोक्त्या सुहृत्त्वमेवोक्तं भवतीत्यभिप्रेत्य सुहृच्छब्दसमानार्थतया तत्पदं व्याचष्टे- **अभ्यधिकमित्रं निरतिशयोपकारकमिति।** निरतिशयोपकारश्च स्वस्य संसारावस्थायामेव वायुरनिलममृतमित्युक्तामृतत्वप्रदानरूपोऽतिविशदानादिसार्वज्ञप्रदानादिरूपश्च । यथोक्तं 'भक्तानुकम्पादतिशुद्धसंविद्दात्रे' इति । तव्द्याख्यातं सुधायां 'भक्ते मय्यनुकम्पात्' इति । 'प्रेयसे मे सुपूर्णाय' इत्यादिभगवत्पादोक्तिं मनसि निधाय प्रकारान्तरेण व्याचष्टे- **अतिपरमप्रीतिविषयश्चेति** ॥ इति शब्दः समाप्तौ ॥

अथ समापितभाष्यव्याख्यानो भगवांष्टीकाकारः 'मङ्गलान्तानि कार्याणि वीर्यवन्ति भवन्ति' इत्युक्तत्वादन्तेऽपि स्तुतिनतिभ्यां भगवन्तं प्रीणयति- **कमलेति** ॥ परमेष्टत्वाद्विष्णोरेव वन्द्यत्वमित्यभिप्रायेण कमलेत्याद्युक्तम् । अनेन कमलापि वन्दिता भवति । विशिष्टत्वाच्च तस्यैव तदित्याशयेन परमात्मन इत्युक्तम्। आत्मशब्दश्चेतनपर्यायः । विशिष्टत्वोपपादनायोक्तम्- **जगज्जनिस्थेमहेतव इति** ॥ स्थेम स्थितिः संहाराद्युपलक्षणमेतत् । केचित्तु न पालकत्वं भगवतोऽस्ति सृष्टिसंहारकर्तृत्वात्। सत्यां च सृष्टौ यावत्संहारं जगत्स्थितेः स्वत एव सिद्धेः।

संहर्तुः असंहारव्यतिरिक्तस्यैव रक्षादिरूपस्यायोगात् । अन्यस्य तु सृष्ट्यादिकर्तृत्वे सम्भवति निवारणादिव्यापारः ॥

एतेन अवान्तरोपद्रवनिवारणं च प्रत्युक्तम् । तत्रापि स्वयं कर्तृत्वात् । अतो न विष्णोः पालकत्वमिति वदन्ति । तन्न । असंहारव्यतिरिक्तस्य धारणपोषणादि-व्यापारस्य नैतावदेनापरो 'अन्यदस्त्युक्षा' 'स द्यावा पृथिवी बिभर्ति' इत्यादिश्रुतिसिद्धत्वेन पालकत्वस्य अवश्यमङ्गीकार्यत्वादित्याशयेन स्थेम्नः स्वशब्देनोपादानम् ॥

यद्यपि 'अजिरशिशिरशिथिलस्थिर' इत्युणादिसूत्रेण स्था धातोः किरच् प्रत्यये 'आतो लोप' इति धात्वाकारलोपे च निष्पन्नस्य दृढार्थस्थिरशब्दस्य दृढादित्वेन 'वर्णदृढादिभ्य' (सि.कौ.१७८७) इतीमनच्प्रत्यये 'प्रियस्थिर..' (सि.कौ.२०१६) इत्यादिना स्थादेशे निष्पन्नस्य स्थेमशब्दस्य दार्ढ्ये प्रसिद्धिः न तु स्थितौ । तथापि 'उणादयो बहुलम्' (सि.कौ.३१६९) इति बहुलग्रहणात् जनिमवेमेत्यादिवत् स्थाधातोः भावे इमनिच् प्रत्यये गुणे च निष्पन्नस्थेमशब्दस्य स्थित्यर्थत्वोपपत्तेः ॥

अखिलभुवनजन्मस्थेमभङ्गादिलीले
विनतविविधभूतव्रातरक्षैकदीक्षे ।
श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे
भवतु मम परस्मिन् शेमुशी भक्तिरूपा ॥

इति रामानुजः नान्दीश्लोके 'द्राघीयांसः संहतास्थेमभाज' इत्याद्यन्यत्रापि स्थितौ अभियुक्तप्रयोगाच्च । एतच्च स्थेम स्थितिः इति श्रुतप्रकाशिकाव्याख्यायां भावप्रकाशिकायां स्पष्टमिति ॥

रघुनाथेन याज्ञीयमन्त्रभाष्यस्य पञ्चिका ।
अनूदिता तत्सुकृतं मद्गुरूनेव गच्छतु ॥

॥ इति श्रीकञ्चीरघुनाथाचार्यविरचिता
ईशावास्यभाष्यटीकाविवृतिः सम्पूर्णा ॥

॥ श्रीकृष्णार्पणमस्तु ॥

# ईशावास्योपनिषत् खण्डार्थः

## उपनिषत्

**ईशावास्यमिदꣳ सर्वं यत्किञ्च जगत्यां जगत् ।**
**तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद् धनम् ॥१॥**

## अथ श्रीराघवेन्द्रयतिविरचितः श्रीमदीशावास्योपनिषत्खण्डार्थः

**श्रीप्राणपतिमानम्य पूर्णबोधादिदेशिकान् ।**
**ईशावास्योपनिषदः करिष्याम्यर्थसङ्ग्रहम् ॥**

**राघ-** अस्या उपनिषदः स्वायाम्भुवो मनुः ऋषिः । यज्ञनामा हरिर्देवता । अनुष्टुबादि यथायोग्यं छन्दो ज्ञेयम् । अनेजदित्यादिना तत्त्वं विवक्षुरुपदिष्टं तत्त्वं अधिकारिण एव हि हृद्यवतिष्ठते नान्यस्येति, एतदुपनिषदधिकारसिद्ध्यर्थं विच्छिन्नविषयतृष्णत्वं तावदाद्येन मन्त्रेण सयुक्तिकं विधत्ते- **ईशेति** ॥ यत्किञ्च जगदिदं तत्सर्वं प्रवृत्त्यर्थं आत्मनि ईशावास्यम् । आवासमर्हतीत्यावास्यं ईशस्य आवास्यं ईशावास्यं ईशानुप्रविष्टमित्यर्थः । 'तदेवानुप्राविशत्' इत्यादेः । अतोऽस्वतन्त्रमिति भावः । किञ्च जगत्यां प्रकृताविदं सर्वमाश्रितम् । सा च ईशायत्ताऽतोऽप्यस्वतन्त्रम् । ईश एव स्वतन्त्रः । तेन ईश्वरेण त्यक्तेन दत्तेन वित्तेन । यदृच्छालब्धेनेति यावत् । भुञ्जीथाः भोगं कुर्याः । कस्यस्वित् कस्यापि राजादेः सकाशात् धनं मा गृधः नाकाङ्क्षेथाः । ईशादन्यस्यास्वातन्त्र्येण तस्य दाने सामर्थ्याभावादीशदत्तेनैव वर्तेतेति भावः ॥ १ ॥

## अथ श्रीविद्याधीशतीर्थशिष्यनृसिंहभिक्षुविरचिता ईशावास्यखण्डार्थप्रकाशिका

**श्रीशं यज्ञाभिधं नत्वा जयार्योक्त्यवलम्बनात् ।**
**मन्त्रोपनिषदः काव्यमन्त्रार्थः सम्प्रकाश्यते ॥**

**नृ.भि-** इह हि सांसारिकविविधदुःखदर्शनेन शमदमादिमतो मुमुक्षोरधिकारिणोऽशेषदुःखनिवृत्तये परमानन्दावाप्तये च परमपुरुषविष्णुतत्त्वं

सम्यग्ज्ञापयितुं **काण्वी मन्त्रोपनिषत्प्रवृत्ता । तत्र भगवत्प्रसादार्थं** तत्स्तोत्रकाले तदसहमानैः राक्षसैः खादितुं प्राप्तो यज्ञेन रक्षितः स्वायम्भुवो मनुः स्वदौहित्रं यज्ञनामानं विष्णुं स्तौति समन्त्रोपनिषदा । तत्रादौ वैराग्यं विधत्ते- **ईशावास्यमिति** ॥

यत्किञ्च चेतनात्मकमिदं प्रमाणमिति तत्सर्वमीशावास्यम्, संरक्षणे स्वस्यास्वतन्त्रत्वात् । स्वतन्त्रेशस्य आवासार्हत्वादीशावास्यम् । ईशाधीनमित्यर्थः । किञ्च जगत्यां प्रकृतौ स्थितं ईशाधीनप्रकृत्यधीनमतोऽपीशाधीनम् । अत एव ईश एव स्वतन्त्रः । तेन कारणेन ईशेन त्यक्तेन दत्तेन धनेन भुञ्जीथा भोजनादिकं कुर्याः । यतश्चेशादन्यमस्वतन्त्रं तेन तस्य दाने सामर्थ्याभावात् । कस्यस्वित् कस्यापि राजादेः सकाशात् धनं मा गृधः नाकाङ्क्षेथा इति सज्जनं प्रति अस्य सम्बोधनम् ॥१॥

## अथ श्री अनन्तभट्टविरचिता याज्ञीयमन्त्रविवृतिः

**प्रणम्य नृहरिं पूर्णबोधश्च तदनुग्रहात् ।**
**याज्ञीयमन्त्रविवृतिं विधास्ये नातिविस्तरम् ॥**

परमपुरुषार्थभूतमोक्षसाधनपरमात्मप्रसादहेतुसाक्षात्कारकारणनिदिध्यासनस्य तत्तत्त्वज्ञानं विनाऽघटनादिष्टार्थबोधहेतूनामुपनिषदाञ्च तत्परत्वेन तदर्थमियमपि काण्वामन्त्रोपनिषत्प्रवृत्ता । अस्याः स्वायम्भुवो मनुः ऋषिः, देवता तु तद्दौहित्रो यज्ञनामा विष्णुः, छन्दस्तु यथाक्षरसङ्ख्यं द्रष्टव्यम् ।

तत्र तावत्स्वविवक्षितस्य तत्त्वज्ञानमधिकारिण एव हृदयेऽवतिष्ठत इति अधिकारसिद्ध्यर्थं विषयवैराग्यं विधत्ते- **ईशेति** ॥ यत्किञ्च सर्वं जगत् । स्वप्रवृत्तये ईशस्य आवास्यं स्वस्मिन्नावासमर्हतीति ईशावास्यम् । एतच्च 'तत्सृष्ट्वा तदेवानुप्राविशत्' इत्यादिश्रुतिसिद्धम् । किञ्च जगत्यां प्रकृतौ । इदमाश्रितम् । एतच्च आकाशे 'तदोतं प्रोतञ्च' इत्यादिश्रुतिसिद्धम् । प्रकृतिश्च विष्णवधीना । 'एतस्मिन्खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' इतिश्रुतेः । अतोऽपि जगदस्वतन्त्रमिति ज्ञायते । तेन ईशेतरस्यास्वतन्त्रत्वेन ईशेन चेत्यर्थः । त्यक्तेन दत्तेन वित्तादिना भुञ्जीथाः भोगादि कुर्याः । यतश्च ईशादन्यस्य अस्वातन्त्र्येण दानेऽसामर्थ्यात् कस्यस्वित् कस्यचिदपि राजादेः सकाशात् धनं मा गृधः नाकाङ्क्षेः ॥१॥

## अथ श्रीमद्वेदव्यासपादाराधकेन गुहपुरकृष्णशर्मणा कृता ईशावास्योपनिषत्प्रभा

**यः सदा शुकविख्यातं पुत्रं प्राप महायशाः ।**
**तं व्यासं मम तातं च वन्दे सन्देहधूतये ॥ १ ॥**

**व्यासं मध्वगुरुं टीकाकृतं व्यासयतिं तथा ।**
**श्रीराघवेन्द्रं वेदेशतीर्थं वन्देऽर्थसिद्धये ॥ २ ॥**

**गुरूणां करुणालम्बी करोत्युपनिषत्प्रभाम् ।**
**वाक्शुद्ध्यै मम चान्येषां झटित्यर्थान्वयाप्तये ॥ ३ ॥**

**क्वचित्क्वचिच्च भाष्योक्तस्मृतिग्रहणपूर्वकम् ।**
**पदच्छेदान्वयार्थांश्च स्पष्टीकुर्मो यथामति ॥ ४ ॥**

**कृष्ण**- अथ ईशावास्योपनिषदं व्याख्यास्यामः । अस्या उपनिषदः स्वायम्भुवो मनु ऋषिः । यज्ञनामा हरिर्देवता । यथायोग्यमनुष्टुबादीनि छन्दांसि ॥

'स्वायम्भुवः स्वदौहित्रं विष्णुं यज्ञाभिधं मनुः ।
ईशावास्यादिभिर्मन्त्रैः तुष्टावावहितात्मना' ॥ इति ब्रह्माण्डोक्तेः ॥

'अनेजत्' इत्यादिना तत्त्वं विवक्षुः उपनिषदुपदिष्टतत्त्वमधिकारिण एव हृद्यवतिष्ठत इति अधिकारं बोधयन् विच्छिन्नविषयतृष्णत्वमाद्येन मन्त्रेणाह- **ईशावास्यमिति** ॥ ईशावास्यम्, इदम्, सर्वम्, यत्किञ्च, जगत्याम्, जगत्, तेन, त्यक्तेन,भुञ्जीथाः, मा, गृधः, कस्यस्वित्, धनम् । इति पदच्छेदः ।

जगत्यां यत्किञ्च जगदिदं सर्वमीशावास्यं, तेन त्यक्तेन भुञ्जीथाः, कस्यस्वित् धनं मा गृध इत्यन्वयः ।

अथार्थः । जगत्यां प्रकृतौ । अधिकरणसप्तमी । प्रकृत्याश्रितमित्यर्थः । यत्किञ्चिज्जगत् यच्चराचरात्मकं जगत् इदं सर्वमीशावास्यम् । ईशानुप्रविष्टमित्यर्थः । 'तत्सृष्ट्वा तदेवानुप्राविशत्' ( तै.उ.२.६.१) इत्यादिश्रुतेः । तेन ईशेन त्यक्तेन दत्तेन वित्तेन, यदृच्छया लब्धेनेति यावत् । भुञ्जीथाः भोगं कुर्याः । कस्यस्वित् कस्यापि सकाशात् धनं मा गृधः मा काङ्क्षेथाः । तथा च ईशस्य प्रकृत्याश्रित-

सकलजगत्प्रविष्टत्वोक्त्या जगतोऽपि ईशाधीनत्वम्, ईशस्य स्वतन्त्रत्वं च लब्धम् । तस्मात् तादृशेश्वरेच्छया लब्धेनैव जीवेत्, नान्यं याचयेदिति भावः । तथा चोक्तं ब्राह्मे-

स्वतः प्रवृत्त्यशक्तत्वादीशावास्यमिदं जगत् ।
प्रवृत्तये प्रकृतिगं यस्मात्स प्रकृतीश्वरः ॥

तदधीनप्रवृत्तित्वात्तदीयं सर्वमेव यत् ।
तद्दत्तेनैव भुञ्जीथा अतो नान्यं प्रयाचयेत् इति ॥ १ ॥

## उपनिषत्

**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः ।**
**एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ २ ॥**

**राघ**- तृष्णाविच्छेदवत् स्वोचितकर्मानुष्ठानमपि ज्ञानार्थिनामावश्यकमित्याह- **कुर्वन्नेवेति** ॥ शतं समाः शतं वर्षाणि । 'कालाध्वनोरत्यन्तसंयोगे' (सि.कौ.५५९) इति द्वितीया । इह मानुषादिजन्मनि यावज्जिजीविषेत् जीवितुमिच्छेत् तावत् कर्माणि कुर्वन्नेव । आमरणं भगवत्पूजात्मकानि असङ्कल्पितफलानि स्वोचितानि कर्माणि सर्वथा कुर्यादिति यावत् । कुतः ? एवं कर्माणि कुर्वति नरे मनुष्यमात्रेऽपि त्वयि कर्म पापं न लिप्यते । स्वोचितेन असङ्कल्पितफलेन कर्मणा भगवत्पूजां कुर्वन्तं अल्पाधिकारिणमपि न प्रागुत्तराणि पापानि बाधन्ते । ततश्च ज्ञानाधिकारी स भवतीति यावत् । इतः कर्मकरणात् अन्यथा अकरणे कर्म पापं न लिप्यत इति नास्ति । भगवत्पूजामकुर्वन्तं पापानि बाधन्त एव! ततश्चासौ ज्ञाने न अधिक्रियते । अतश्च कर्माणि कुर्यादिति । पुरुषार्थनये 'नियमाच्च' (३.४.७.) इति सूत्रभाष्यादौ 'नरे ज्ञानिन्यपि त्वयि कर्म न लिप्यत इति नास्ति' इत्यपरोक्षज्ञानिनोऽपि कर्माकरणे मुक्तौ आनन्दह्रासरूपपापकर्मलेपो अस्त्येवेति ज्ञानिपरतया मन्त्रो व्याख्यातः ॥२॥

**नृ.भि**- वैराग्यवज्ज्ञानार्थिनः शौचकर्मानुष्ठानं यथावश्यकमिति भावेन तद्विधत्ते- **कुर्वन्निति** ॥ शतं समाः शतवर्षाणि इह मानुषादिजन्मनि यदि

जिजीविषेत् जीवितुमिच्छेत् तर्हि कर्माणि कुर्वन्नेव वर्तेत । आमरणं भगवत्पूजात्मकानि स्वोचितान्यसङ्कल्पितफलानि कर्माणि सर्वदा कुर्यादित्यर्थः । कुतः? एवं कर्माणि कुर्वति नरे मनुष्यमात्रेऽपि त्वयि कर्म पापं न लिप्यते । अल्पाधिकारिणमपि त्वां पापं न बाधत इत्यर्थः । इतः कर्मकरणादन्यथा । स्वोचितकर्माकरणे कर्म न लिप्यत इति नास्ति । भगवत्पूजामकुर्वन्तं पापं बाधत एव । ततश्चासौ उपनिषद्विद्याधिकारी न भवति । अतः कर्माणि कुर्यादिति ॥२॥

**अनन्त**- ज्ञानार्थिनो वैराग्यवत् स्वोचितकर्मानुष्ठानमप्यावश्यकमिति कर्म विधत्ते- **कुर्वन्निति** ॥ इह कर्मकरणार्हदेहे । शतं समाः वर्षाणि जिजीविषेत् जीवितुमिच्छेदिति यत् तत्कर्माणि कुर्वन्नेव । यावदायुष्यं ईशार्पणबुद्ध्या स्वोचितकर्माणि कुर्यादिति यावत् । कुतः? एवं कर्माणि कुर्वति नरे मनुष्यमात्रेऽपि त्वयि कर्म पापं न लिप्यते न बाधते । ईश्वरपूजात्वेन कर्म कुर्वाणमल्पाधिकारिणमपि प्रागुत्तरपापानि न बाधन्ते । ततश्च ज्ञानेऽधिक्रियत इति यावत् । इतः कर्मकरणादन्यथा, कर्माकरणे । कर्म न लिप्यत इति नास्ति । ततश्च ज्ञाने नाधिक्रियते । तस्मात्कर्म कुर्यादिति भावः ॥ २ ॥

**कृष्ण**- विच्छिन्नतृष्णत्ववत् स्वोचितकर्मानुष्ठानमपि आवश्यकमित्याह - **कुर्वन्निति** ॥ कुर्वन् , एव, इह, कर्माणि, जिजीविषेत्, शतं, समाः, एवं, त्वयि, न ,अन्यथा, इतः, अस्ति, न, कर्म, लिप्यते, नरे । इति पदच्छेदः ।

अत्र नरः, यावत्, तावत्, ज़ीवेत्, एतत्, इति पदपञ्चकमध्याहर्तव्यम् । इह नरः यावत् जिजीविषेत् तावत् शतं समाः कर्माणि कुर्वन्नेव जीवेत् । एवं चेत् नरे कर्म न लिप्यते इतोऽन्यथा त्वयि तत् नास्ति । इत्यन्वयः ।

शतं समाः जिजीविषेदिति वा इह मानुषादिजन्मनि नरः देही यावत् यावत्कालपर्यन्तं जिजीविषेत् जीवितुमिच्छेत् तावत् शतं समाः तादृशशतसंवत्सरान् । 'कालाध्वनोरत्यन्तसंयोगे' (सि.कौ.५५९) इति सूत्रानुसारेण 'अकर्मकधातुभिर्योगे देशकालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम्' (सि.कौ.५३१) इति वार्तिकानुसारेण वा द्वितीया । विशेषानुशासनाभावस्थलीयविशेषणविशेष्यवाचकपदयोरेव अभेदान्वयबोधे समानवचनकत्वसमानलिङ्गकत्वनियमेन-

विंशत्याद्याः सदैकत्वे सर्वाः सङ्ख्येयसङ्ख्ययोः ।
सङ्ख्यार्थे द्विबहुत्वे स्तस्तासु चानवतेः स्त्रियः ॥

इति विशेषानुशासनेन समा इति संवत्सरवाचकस्त्रीलिङ्गकपदविशेषण-वाचकशतशब्दस्य नपुंसकत्वैकवचनकत्वेऽपि न दोषः । कर्माणि स्वोचित-भगवत्पूजादीनि कुर्वन्नेव जीवेत् ॥

एवं चेत् स्वोचितकर्मकर्ता चेत् नरे मनुष्यमात्रेऽपि कर्म पापादिकं न लिप्यते । इतः कर्मकरणादन्यथा, कर्माकरण इति यावत् । त्वयि तत्कर्म न लिप्यत इति नास्ति । तथा च मानुषादिजन्मनि प्राणी यावत्कालं जीवेत् तावत्पर्यन्तमनन्त-गुणपूर्णश्रीहर्युपासनादिरूपस्वोचितकर्माणि असङ्कल्पितफलको भूत्वा कुर्वन्नेव जीवेत् । एवञ्चेत् प्रागुत्तराण्यपि पापानि तमल्पाधिकारिणमपि पुरुषं न बाधन्ते । अन्यथा चेत् ज्ञानिनमप्यानन्दह्रासकरणरूपेण बाधन्त एवेति भावः । एतदुक्तं 'नियमाच्च' (३.४.७) इति सूत्रभाष्यादौ । नारदीये च

अज्ञस्य कर्म लिप्येत कृष्णोपास्तिमकुर्वतः ।
ज्ञानिनोऽपि यतो ह्रास आनन्दस्य भवेद्ध्रुवम् ॥
अतोऽलेपेऽपि लेपः स्यादतः कार्यैव सा सदा ।
फलं त्वननुसन्धाय स्वोचिताः सत्क्रिया नृणाम् ॥ २ ॥

## उपनिषत्

**असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः ।**
**तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥ ३ ॥**

**राघ**- एवं प्राप्ताधिकारं प्रति परमात्मतत्त्वबुभुत्साजननाय विपरीतज्ञानिनो निन्दामाह- **असुर्या इति** ॥ सुष्ठु रमणं सुर्यम् । सुपूर्वस्य रमतेः ड्यप्रत्ययः । तद्विरुद्धं असुर्यं महादुःखम् । असुर्यमेषु अस्तीत्यसुर्याः । अर्श आद्यच् प्रत्ययान्तोऽयम् । महादुःखवत्त्वादसुर्याः । असुरप्राप्यत्वाद्वा असुर्याः । अन्धेन तमसा । अन्धयतीति व्युत्पत्त्या निबिडान्धकारेणेत्यर्थः । आवृतास्ते प्रसिद्धा ये इति शेषः । लोकांस्तान् प्रेत्य मृत्वा अभिगच्छन्ति । ते के इत्यत उक्तम्- **ये**

**इति** ॥ आत्महनः यथावदात्मानमज्ञात्वा वैपरीत्येन जानन्तः ये केचन वर्तन्ते ते सर्वेऽपि अभिगच्छन्तीति । नाम निश्चितमेतदित्यर्थः ॥ ३ ॥

**नृ.भि-** एवं सम्पन्नाधिकारिणं प्रति परमात्मतत्त्वबुभुत्साजननाय परमात्माज्ञानिनां निन्दा क्रियते- **असुर्या इति** ॥ आत्महनः निर्गुणत्वाद्यसदुपासनया परमात्मयाथात्म्यतिरस्कारत्वेन गौण्या वृत्त्या परमात्महन्तारः । एवञ्च नियमेन सर्वेऽपि भगवद्विपरीतज्ञानिनो जनाः ते प्रेत्य स्थूलदेहलिङ्गदेहपातानन्तरं सुष्ठु रमणविरुद्धदुःखानुभवस्थानाद्वा, सर्वात्मना सुखानुभवरहितस्थानत्वेन असुरप्राप्यत्वाद्वा, असुर्या नाम, असुर्यशब्दवाच्यतया तेन प्रसिद्धा ये लोकाः तान् लोकान् अभिगच्छन्ति । तस्मात् भगवन्तमन्यथा न जानीया इति ॥ ३ ॥

**अनन्त**- तत्त्वज्ञनमेवेष्टहेतुरिति सूचयितुं वैपरीत्येनात्मविदो निन्दति- **असुर्या इति** ॥ सुष्ठु रमणं सुर्यं तद्विरुद्धत्वादसुर्याः महादुःखा इत्यर्थः । असुरप्राप्यत्वाच्च असुर्याः सुखरहिता इत्यर्थः । अन्धयति दृष्टिं हन्तीति अन्धं निबिडमित्यर्थः । ते प्रसिद्धा ये लोकाः तान् ये के च सर्वेऽपि आत्महनः विपरीतोपासनया परमात्ममहत्त्वविनाशिनः । प्रेत्य मृत्वा । अभिगच्छन्ति ॥ ३ ॥

**कृष्ण**- अथ श्रुतिरेवमधिकारमुक्त्वा विपरीतज्ञानिन अधोगतिमाह- **असुर्या इति** ॥ 'तांस्ते प्रेत्य' इत्यत्र नकारास्य 'पूर्वस्वरोऽनुनासिक' इति सूत्रेण पूर्वस्वरस्यानुनासिकत्वम् ॥

असुर्याः, नाम, ते, लोकाः, अन्धेन, तमसा, आवृताः, तान्, ते, प्रेत्य, अभिगच्छन्ति, ये, के, च, आत्महनः, जनाः । इति पदच्छेदः ।

अत्र यः इति शेषः । असुर्या अन्धेन तमसा आवृताः । ते ये लोकाः तान् ये के च जना आत्महनः ते प्रेत्य अभिगच्छन्ति नामेत्यन्वयः ।

सुष्ठु रमणं सुर्यम् । सुपुर्वात् रमेः ड्यप्रत्ययः । तद्विरुद्धं असुर्यं दुःखम्, असुर्यं येष्वस्तीत्यसुर्याः । अर्शादित्वादच् । असुरप्राप्यत्वाद्वा असुर्याः । तदुक्तं वामने-

महादुःखैकहेतुत्वात् प्राप्यत्वादसुरैस्तथा ।
असुर्या नाम ते लोकास्तान्यान्ति विमुखा हरौ ॥ इति ॥

अन्धयतीत्यन्धम्, तेन तमसा निबिडान्धकारेणेति यावत् । वृताः आवृता वा युक्ताः । ते प्रसिद्वा ये लोका यानि भुवनानि तान्, तानि भुवनानि । ये के च, केचन जना आत्महन आत्मानं वैपरीत्येन ज्ञात्वा निन्दकाः । तदुक्तं पाद्मे-

ये वै यथार्थमात्मानमविदित्वा विनिन्दकाः ।
वैपरीत्येन जानन्तस्ते स्युरात्महनो जनाः ॥

ते यान्ति तमसाक्रान्तान् लोकान् दुःखकरान् बहून् ॥ इति ॥

ते जनाः प्रेत्य मृत्वा अभिगच्छन्ति । नामेति निश्चये । तथा चात्मविषय-कान्यथाज्ञानवन्तः तमो यान्तीति भावः ॥ ३ ॥

### उपनिषत्

## अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन् पूर्वमर्षत् ।
## तद्धावतोऽन्यान् अत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति॥४॥

**राघ-** इदानीं परमात्मतत्त्वमुपदिशति- **अनेजदित्यादिमन्त्रद्वयेन** ॥ तत्परमात्मस्वरूपम् । अनेजत् , 'एजृ कम्पने' अकम्पमानं निर्भयत्वादिति भावः । एकं प्रधानम् । मनसोऽपि जवीयः वेगवत्तरम् । एनत् परब्रह्मस्वरूपं देवाः नाप्नुवन् साकल्येन न व्यजानन् । ब्रह्म तु पूर्वं अनादिकालं स्वभावत इति यावत् । अर्षत् , 'ऋष ज्ञाने' सर्वं व्यजानात् । अडागमाभावश्छान्दसः । तद् ब्रह्म तिष्ठत् विद्यमानमेव सत् धावतो वेगेन गच्छतोऽन्यान् जनान् अत्येति अतिक्रम्य वर्तते । अचिन्त्यशक्तित्वात् सर्वगतत्वाच्चेति भावः । तस्मिन् हरौ मातरिश्वा मुख्यवायुः आ समन्तात् पालयन्तीति व्युत्पत्त्या अपः कर्माणि स्वप्रेरणया प्राणिभिः क्रियमाणानि पुण्यकर्माणि दधाति समर्पयति इति ॥ ४ ॥

**नृ.भि-** एवं निवृत्तकर्मवतः विशुद्धाशयस्यैहिकामुष्मिकविषये विरक्तस्य ईश्वरतत्त्वबुभुत्सावतः परमात्मतत्त्वोपदेशः क्रियते- **अनेजदिति** ॥ परमात्मस्वरूपं निर्भयत्वादेव अनेजत् अकम्पनं न तु निष्क्रियत्वात् । सर्वप्रधानत्वादेव एकं न तु द्वितीयवस्तुशून्यत्वात् । मनो हि वेगवत्प्रसिद्धं ततोऽप्यतिशयवेगवत्वान्मनसो जवीयः । देवाः ब्रह्माद्या अपि सत् ब्रह्मस्वरूपं सम्यक् ज्ञातुमशक्यत्वादेव

नाप्नुवन्ति न जानन्ति । न तु सर्वथा प्रमाणागोचरत्वात् । स्वयं तु सर्वान्पूर्वमेव स्वभावत एव अर्षत् व्यजानात् । अचिन्त्यशक्तित्वात् सर्वगत्वाच्च तत् ब्रह्म तिष्ठदेव धावतः अन्यान् अत्येति अतिक्रम्य वर्तते । न तु सर्वस्य मिथ्यात्वात् । तस्मिन् ब्रह्मणि मातरिश्वा वायुः स्वस्य सर्वलोकचेष्टितत्वेन सर्वकर्मणां स्वकीयत्वात् अपः सर्वाणि कर्माणि दधाति समर्पयति ॥ ४ ॥

**अनन्त**- परमात्मतत्त्वमुपदिशति- **अनेजदित्यादिना** ॥ अनेजत् अकम्पमानम्, निर्भयमित्यर्थः । एकं प्रधानम् । मनसो जवीयः वेगवत्तरम् । देवा एतन्नाप्नुवन् साकल्येन नाजानन् । स्वयं तु पूर्वमनादितः अर्षत् व्यजानात् । तत् तिष्ठत् धावतः अन्यानत्येति । अचिन्त्यशक्तित्वेनेति भावः । मातरिश्वा मुख्यवायुः । तस्मिन् अपः सर्वजीवानां कर्माणि । दधाति अधात् आर्पयत् । सर्वजीवकर्मणां स्वप्रेरणया कृतत्वेन स्वकीयत्वादिति भावः ॥ ४ ॥

**कृष्ण**- इदानीं तत्त्वमुपदिशति- **अनेजदिति** ॥ अनेजत्, एकम्, मनसः, जवीयः, न, एनत्, देवाः, आप्नुवन्, पूर्वम् ,अर्षत्, तत्, धावतः, अन्यान्, अत्येति, तिष्ठत्, तस्मिन्, अपः, मातारिश्वा, दधाति । इति पदच्छेदः ।

अनेजत् एकं मनसः जवीय एनद्देवाः नाप्नुवन्, पूर्वं तत् अर्षत् तिष्ठत् सत् धावतः अन्यान् अत्येति, तस्मिन् मातरिश्वा अपः दधाति इत्यन्वयः ।

अनेजत् निर्भयत्वात् अकम्पमानम् । 'एजृ कम्पने' इत्यस्मात् कर्तरि शतृप्रत्ययः । एकं प्रधानम् । मनसोऽपि चित्तादपि जवीयः वेगशालि । एतत् ब्रह्म । देवाः ब्रह्माद्याः । नाप्नुवन् साकल्येन न व्यजानन् । पूर्वं स्वभावतोऽनादि तत् ब्रह्म अर्षत् सर्वं व्यजानत् । 'ऋष ज्ञाने' इत्यास्मात् लङ्। छन्दस्त्वादडागमाभावः । किञ्च तिष्ठत् सत् विद्यमानं सत् । धावतः वेगेन गच्छतोऽन्यान् जनान् । अत्येति अतिक्रम्य वर्तते । तस्मिन् तादृशपरब्रह्मणि । मातरिश्वा प्राणः । अपः आ समन्तात् पालयन्तीति व्युत्पत्त्या प्राणिभिः क्रियमाणपुण्यकर्माणि । दधाति समर्पयति।

समन्तात्पालयेद्यस्मात्तस्मादापो जलं स्मृतम् ।
पुण्यकर्माणि तेनैव हेतुनापः प्रकीर्त्यते ॥ इति ब्राह्मे ॥

एतत् श्रुत्यर्थ एव ब्रह्माण्डे उक्तः -

अनेजन्निर्भयत्वात्तदेकं प्रधान्यतस्तथा ।
सम्यज्ज्ञातुमशक्यत्वादगम्यं तत्सुरैरपि ॥

स्वयं तु सर्वानगमत् पूर्वमेव स्वभावतः ।
अचिन्त्यशक्तितश्चैव सर्वगत्वाच्च तत्परम् ॥

धावतोऽत्येति सन्तिष्ठत्तस्मिन् कर्माण्यधान्मरुत् ।
मारुत्येव यतश्चेष्टा सर्वा तां हरयेऽर्पयेत् ॥ इति ॥ ४ ॥

## उपनिषत्

**तदेजति तन्नेजति तद्दूरे तद्वन्तिके।**
**तदन्तरस्य सर्वस्य तदु सर्वस्य बाह्यतः ॥ ५ ॥**

**राघ**- तदिति पञ्चम्यर्थे अव्ययम् । जगदिति शेषः । तत्तस्मात् प्रकृतात् हरेः जगदेजति बिभेति । तत् ब्रह्म नेजति न बिभेति । स्वतन्त्रत्वादिति भावः । तदु तदेव । ब्रह्म दूरे । तदु तदेव । अन्तिके समीपे च । सर्वगत्वादिति भावः । तत् ब्रह्म । अस्य प्रमितस्य सर्वस्यान्तः । तदु तदेव सर्वस्य बाह्यतः बहिरपि । सर्वव्यापित्वादिति भावः ॥ ५ ॥

**नृ.भि**- गुणान्तरमाह- **तदेजतीति** ॥ तत् ततः ब्रह्मणः स्वव्यतिरिक्तं सर्वं एजति बिभेति । तत् ब्रह्म नेजति न बिभेति । तत् दूरे तत्तदेव अन्तिके समीपे च वर्तते । तत् अस्य सर्वस्य अन्तः नियामकत्वेन वर्तते । तत् तदेव सर्वस्य बाह्यतः आश्रयत्वेन वर्तते ॥ ५ ॥

**अनन्त**- **तदिति** ॥ तत् तस्मात् एजति । अन्यत् इति शेषः । अस्य जगतः । व्यापकत्वादेरभ्यासस्तात्पर्यार्थः ॥ ५ ॥

**कृष्ण**- **तदेजतीति** ॥ तत् ,एजति, तत्, न, एजति, तत्, दूरे, तत्, उ, अन्तिके, तत्, अन्तः, अस्य, सर्वस्य, तत्, उ, सर्वस्य, बाह्यतः । इति पदच्छेदः ।

तन्नेजतीत्यत्र 'एकारैकारपर ऐकारम्' इति सूत्रं बाधित्वा वा 'न पूर्व एकारम्' इति सूत्रेण एत्वं बोध्यम् । अवर्णपूर्वे एकारैकारपरे च सति ते उभे पूर्वापरभूते ऐकारमाप्नुत इति प्रथमसूत्रार्थः । नकारोत्तरवृत्त्यकारपूर्वे एकारपरे सति ते उभे पूर्वापरभूते एकारमाप्नुतः वेति विकल्पे इति द्वितीयसूत्रार्थः ।

अत्र 'जगत्' इति शेषः । तत् जगत् एजति तत् न एजति । तत् दूरे तत् उ अन्तिके तत् सर्वस्य अस्य अन्तः. तत् उ सर्वस्य अस्य बाह्यतः । इत्यन्वयः ।

तदिति पञ्चम्यर्थेऽव्ययम् । तत् तस्मात् ब्रह्मणः सकाशात् 'भीत्रार्थानां भयहेतुः' (सि.कौ.५८९) इति पञ्चमी । जगत् कर्तृ एजति कम्पते बिभेतीति यावत् । तत् ब्रह्म न एजति न बिभेति । तत् ब्रह्म दूरेऽन्तिके सर्वगतत्वात् समीपस्थितमिति भावः । तत् ब्रह्म सर्वस्य चराचरात्मकस्य अस्य जगतः अन्तः अन्तस्थितमित्यर्थः । तदु तदेव सर्वस्य अस्य जगतः बाह्यतः सर्वव्यापित्वात् बहिरपि वर्तत इति भावः । एतदर्थ एवोक्तः तत्त्वसंहितायाम् -

ततो बिभेति सर्वोऽपि न बिभेति हरिः स्वयम् ।
सर्वगत्वात्स दूरे च बाह्येऽन्तश्च समीपगः ॥ इति ॥ ५ ॥

## उपनिषत्

**यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति ।**
**सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥ ६ ॥**

**राघ**- 'तद्दूरे' इत्यादौ हरेः सर्वभूताश्रयतया गर्वभूतगतत्वमुक्तम् । तज्ज्ञानस्य फलमाह- **यस्त्विति** ॥ सर्वाणि भूतानि चिदचिदात्मकं सर्वं जगत् । आत्मन्येव परमात्माश्रयत्वेनैव अस्तीति यस्तु अनु निस्सन्देहं पश्यति जानाति । यद्वा आश्रितत्वक्रमानुरोधेनेति अनुशब्दार्थः । सर्वभूतेषु च आत्मानं सर्वभूतेषु नियन्तृतया स्थितं हरिं यो अनुपश्यतीत्यन्वयः । ततः परमात्मस्वरूपज्ञानित्वात् हेतोर्न विजुगुप्सते । स्वात्मानं गोप्तुं नेच्छति । भयाभावादिति भावः ॥ ६ ॥

**नृ.भि**- उक्तसर्वगतत्वज्ञानफलमाह- **यस्तु सर्वाणीति** ॥ यस्तु अधिकारी सर्वाणि भूतानि आत्मन्येव आश्रितत्वेन अनुपश्यति सम्यक् जानाति । आत्मानं

अन्तर्नियामकत्वेन सर्वभूतस्थितं अनुपश्यति । ततः एवं सर्वगतत्वज्ञानात् तत एवान्यनिमित्तभयाभावात् न विजुगुप्सते स्वात्मानं गोप्तुं नेच्छति ॥ ६ ॥

**अनन्त- य इति** ॥ भूतानि जीवजडानि । आत्मनि हरौ । ततः सर्वस्येश्वराधीनत्वज्ञानेन । न विजुगुप्सते स्वात्मानं गोप्तुं नेच्छति ॥ ६ ॥

**कृष्ण**- एवं ब्रह्मज्ञानस्य फलमाह- **यस्त्विति** ॥ यः, तु, सर्वाणि, भूतानि, आत्मनि, एव, अनुपश्यति, सर्वभूतेषु, च, आत्मानम्, ततः, न, विजुगुप्सते । इति पदच्छेदः ॥

यः सर्वाणि भूतानि तु आत्मन्येवानुपश्यति, सर्वभूतेषु च आत्मानं ततः न विजुगुप्सते । इत्यन्वयः ॥

यः जीवः सर्वाणि भूतानि तु चिदचिदात्मकसर्वजगदपि आत्मन्येव परमात्मन्येव परमात्माश्रितमेवेति भावः । अनु निस्सन्देहेन पश्यति जानाति । किञ्चेति चार्थः । सर्वभूतेषु समस्तजगत्सु । अत्राप्यधिकरणसप्तमी । नियन्तृतया सर्वजगदवस्थितमित्यर्थः । आत्मानं अनुपश्यति विजानाति स जीवः ततः तादृशज्ञानाद्धेतोः न विजुगुप्सते भयाभावात् नात्मानं गोप्तुमिच्छतीत्यर्थः ।

सर्वगं परमात्मानं सर्वञ्च परमात्मनि ।
यः पश्येत्स भयाभावन्नात्मानं गोप्तुमिच्छति ॥ इति सौकारायणश्रुतेः ॥६॥

## उपनिषत्

**यस्मिन् सर्वाणि भूतानि आत्मैवाभूद्विजानतः ।**
**तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ ७ ॥**

**राघ**- एतमेवार्थं विवृणोति- **यस्मिन्निति** ॥ यस्मिन्नात्मनि सर्वाणि भूतानि तिष्ठन्तीति शेषः । स आत्मैव तत्र सर्वभूतेषु अभूत् । अनादितो वर्तत इत्यर्थः । एवमिति शेषः । एवं विजानतः सर्वाधारतया सर्वेषु भूतेषु आत्मानं विशेषेण जानतः सर्वत्र स्थितस्य हरेः एकत्वं च अनुपश्यतः जानतः को मोहः कः शोकः न कोऽपीत्यर्थः ॥ ७ ॥

**नृ.भि**- एतदेव विवृणोति- **यस्मिन्निति** ॥ यस्मिन् परमात्मनि सर्वाणि भूतानि वर्तन्ते स परमात्मैव तत्र सर्वेषु भूतेषु अभूत् वर्तते । एवं परमात्मानं अन्तर्बहिर्व्याप्तत्वेन विजानतः तस्य सर्वस्य एकत्वं च अनुपश्यतः मोहः मिथ्याज्ञानम् । कः शोकः तन्निमित्तसांसारिकदुःखं च कः? नास्तीत्यर्थः ॥ ७ ॥

**अनन्त**- तमनुवदन्फलमाह- यस्मिन्निति ॥ यस्मिन् भूतानि वर्तन्ते। तत्र सर्वभूतेषु अभूत् वर्तते । विजानतः, 'एवम्' इति शेषः । एकत्वञ्चानुपश्यतः । कः कुत्रत्यः ॥ ७ ॥

**कृष्ण**- एतमेवार्थं विवृणोति- **यस्मिन्निति** ॥ यस्मिन्, सर्वाणि, भूतानि, आत्मा, एव, अभूत्, विजानतः, तत्र, कः, मोहः, कः, शोकः, एकत्वं, अनुपश्यतः । इति पदच्छेदः ॥

अत्र सर्वभूतेषु इति पूर्वमन्त्रस्थितस्यानुषङ्गः । तिष्ठन्ति, एवं, स्थितस्य इति पदत्रयमध्याहार्यम् । यस्मिन् सर्वाणि भूतानि तिष्ठन्ति स आत्मैव सर्वभूतेषु अभूत्; एवं विजानतः तत्र स्थितस्य एकत्वमनुपश्यतः को मोहः? कः शोकः? इत्यन्वयः ॥

यस्मिन् परमात्मनि सर्वाणि भूतानि तिष्ठन्ति, स तादृशः आत्मैव परमात्मैव सर्वभूतेषु सर्वप्राणिषु अभूत् आस । अनादितो वर्तते इत्यर्थज्ञापनाय भूतार्थकलट् प्रयोगः । एवं विजानतः विशेषेण ज्ञानवतः तत्र सर्वभूतेषु स्थितस्य विष्णोः एकत्वं एकरूपत्वम् अनु निश्चयेन पश्यतः जानतः । जीवस्य को मोहः कुत्रत्यो मोहः, कः शोकः कुत्रत्यः शोकः न कोऽपीति भावः ।

यस्मिन् सर्वाणि भूतानि स आत्मा सर्वभूतगः ।
एवं सर्वत्र यो विष्णुं पश्येत्तस्य विजानतः ।
को मोहः कोऽथवा शोकः स विष्णुं पर्यगाद्यतः ॥

इति पिप्पलादशाखायाम् ॥ ७ ॥

### उपनिषत्

**स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम् ।
कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधात्
शाश्वतीभ्यः समाभ्यः ॥ ८ ॥**

**राघ**- भगवज्ज्ञानमात्रेण कुतो मोहाद्यभाव इत्यत आह- **स इति** ॥ स ज्ञानी पर्यगात् प्राप्तोऽभूत् 'ब्रह्म' इति शेषः । तावता कथं शोकाद्यभाव इत्यतः तद्विशिनष्टि- **शुक्रमित्यादिना** ॥ शुचं शोकं रहति त्यजतीति शुक्रं शोकरहितम् । अकायं लिङ्गदेहरहितम् । अव्रणम्, 'व्रण सञ्चूर्णने' इत्यतः स्तोको व्रणः । कालेन अस्तोकत्वादव्रणं नित्यम् । गुणैरस्तोकत्वादव्रणं पूर्णमित्यर्थः । अस्नाविरं स्नावोपलक्षितसप्तधातुमयस्थूलदेहरहितम् । शुद्धं पावित्र्यहेतुम्। शुद्धत्वादेव अपापविद्धम् । तत एव हेतोः पापमूलस्थूलसूक्ष्मशरीरहीनम् । तत एव देहनिमित्तशोकादिशून्यमिति शुक्रमित्युच्यते । एवम्भूतं हरिं पर्यगाद्यतोऽतः कारणाच्छोकाद्यभावः । एवम्भूतहरिसारूप्यलक्षणां तद्गतिं गतस्य शोकाद्यभावो युक्त इति भावः । ननु एवमशरीरश्चेत् जगत्स्रष्टा नेति प्राप्तम् । लोके सदेहस्यैव स्रष्टृतादर्शनादित्याशङ्कां निराह- **कविरिति** ॥ कविः सर्वज्ञः । मनीषी प्रकृत्यादिसर्वमनसां ईशितृत्वात् मनीषी । एतेन ज्ञानाविनाभूतदेहवानिति लभ्यते । स च अप्राकृत एवेति प्रागुक्तः । तन्निमित्तशोकाद्यभावो युक्तः । प्राकृतस्यैव तद्धेतुत्वात् । परिभवति सर्वं वशीकरोति इति परिभूः । सर्वतो वर इत्यर्थः । स्वयमेव परमनपेक्ष्य भवतीति स्वयम्भूः । सदाऽनन्याश्रयः 'शाश्वतीभ्यः समाभ्यः' इति पञ्चमी सप्तम्यर्थे । अनाद्यनन्तसंवत्सरेषु याथातथ्यतो याथार्थ्येन वर्तमानानर्थान् व्यदधान्निर्ममे । 'याथातथ्यतः' इत्युक्त्या ब्रह्मविवर्तत्वादर्थानां न तत्सृष्टौ देहाद्यपेक्षा इति चोद्यं निरस्तम् । 'शाश्वतीभ्यः समाभ्यः' इत्युक्त्या सदा देहहीनस्यापि सृष्टिसमये देहोपादानेनास्तु सृष्टिरिति चोद्यं निरस्तं ध्येयम् । सृष्ट्यादिप्रवाहस्यानाद्यनन्तकालीनत्वादिति ॥ ८ ॥

**नृ.भि**- किंशब्दस्याक्षेपार्थत्वात् ज्ञानिनः शोकाद्यभावयुक्तिमाह- **स पर्यगादिति** ॥ यतः सः सर्वगतत्वेन विष्णुज्ञानी विष्णुं पर्यगात् विष्णुं प्राप्नोति ।

अतो शोकाद्यभावः। विष्णुं प्राप्तावपि कुतः शोकाद्यभाव इत्यतो हेत्वर्थगर्भ-विशेषणानि शुक्रमित्यादीनि । 'रह त्यागे' इति धातोर्नित्यत्वात्पूर्णत्वादव्रणम् । 'व्रण सञ्चूर्णने' इति धातोः स्तोको व्रणः । पावित्र्यहेतुत्वात् शुद्धम् । अपापविद्धं पापालिप्तम् । अकायं लिङ्गदेहवर्जितम् । अस्नाविरं स्नावोपलक्षितस्थूलदेहरहितम् । यद्यशरीरो विष्णुः तर्हि तस्य जगत्सर्जनाद्यनुपपद्यत इति चेत् । उच्यते, प्राकृतभौतिकदेहाभावेऽपि ज्ञानानन्दात्मकदेहोपपादनाय हरेर्माहात्म्यमाह- **कविरिति** ॥ कविः सर्वज्ञः । श्रीब्रह्मादिमनसामीशत्वान्मनीषी । परिभवति सर्वानिति परिभूः सर्वोत्तमः । स्वयमेव भवतीति स्वयम्भूः । शाश्वतीभ्यः समाभ्यः सर्वेष्वपि कल्पेषु अर्थान् महदादिपदार्थान् व्यदधात् निर्मितवान् । उपलक्षणमेतत् । पालनादिसर्वव्यापारमकरोत् ॥ ८ ॥

**अनन्त**- शोकाद्यभावे युक्तिमाह- **स इति** ॥ सः ज्ञानी शुक्रं शोकरहितं पर्यगात् सादृश्यादिलक्षणां गतिं गतः । अतस्तस्य शोकाद्यभाव इति भावः । ब्रह्मणः शुक्रत्वं कथमित्यत आह- **अस्नाविरमकायमिति** ॥ स्नावोपलक्षित-सर्वधातुमयस्थूलशरीररहितत्वादस्नाविरम् । सूक्ष्मदेहराहित्यादकायम् । तदपि कुत इत्यत आह- **अपापविद्धमिति** ॥ निष्पापम् । तदपि कुत इत्यत आह- **शुद्धमिति** ॥ इतरपावित्र्यहेतुः । तत्र हेतुमाह- **अव्रणमिति** ॥ 'व्रण सञ्चूर्णने' इति स्मरणात् व्रणशब्दोऽल्पवाची । कालतो गुणतश्चाल्पम् । न व्रणतीत्यव्रणं नित्यं गुणपूर्णश्चेत्यर्थः । एतच्च श्रुतिसिद्धम् । ननु परमात्मा अशरीरश्चेत् ज्ञानरहितः स्यात् । तथाच कथं जगत्स्रष्टा? घटादिसृष्टेः शरीरसापेक्षत्वात् । ननु जगत्परमात्मन्यारोपितं अतो न शरीरापेक्षा इति न । बाधकाभावेन तस्य सत्त्वात् । नच कश्चित्कालं सृष्ट्वा पश्चादसृजन्नेव स्थास्यतीति वाच्यम् । सृष्टेरनाद्यन्त-कालीनतया प्रमितत्वात् । अतः कथं स्रष्टुस्तस्य अशरीरत्वमित्यत आह- **कविरिति** ॥ कविः सर्वज्ञः। जडदेहाभावेऽपि ज्ञानादि-रूपदेहवत्त्वादिति भावः । अन्यत्रादृष्टतादृशदेहवत्त्वे युक्तिमाह- **मनीषीत्यादि** ॥ लक्ष्म्यादिमनसामीशितृत्वात् मनीषी । परिभवति सर्वानिति परिभूः सर्वोत्तमः । स्वयमेव भवतीति स्वयम्भूः अनन्याश्रय इत्यर्थः । शाश्वतीभ्यः समाभ्यः अनन्तवर्षेषु याथातथ्यतः याथार्थ्येन वर्तमानानर्थान् व्यदधात् । अस्राक्षीत् ॥ ८ ॥

**कृष्ण**- एवं परमात्मज्ञानमात्रेण कथं मोहाद्यभाव इत्यत आह- **स इति** ॥ सः, पर्यगात्, शुक्रं, अकायं, अव्रणं, अस्नाविरं, शुद्धं, अपापविद्धं, कविः, मनीषी, परिभूः, स्वयम्भूः, याथातथ्यतः, अर्थान्, व्यदधात्, शाश्वतीभ्यः, समाभ्यः । इति पदच्छेदः ॥

यतः सोऽकायम् अव्रणं शुद्धम् अपापविद्धम् अस्नाविरं शुक्रं पर्यगात्, ततः को मोहः कः शोक इति पूर्वेणान्वयः । कविः मनीषी परिभूः स्वयम्भूः शाश्वतीभ्यः याथातथ्यतोऽर्थान् व्यदधात् । इत्यन्वयः ॥

यतः यस्मात् कारणात् । सः तादृशज्ञानी । अकायं लिङ्गदेहरहितम् । 'कं सुखं त्वयते यस्मात् कायं लिङ्गकलेवरम्' इति स्मृतेः । व्रणमपूर्णं न भवतीत्यव्रणं पूर्णमित्यर्थः । 'अर्थान् व्रणयते यस्मादपूर्णं व्रणमित्यतः' इत्युक्तेः । 'व्रणसञ्चूर्णने' इति धातुः । शुद्धं पावित्र्यहेतुम् । अत एव अपापविद्धम् । अत एव अस्नाविरं स्थूलदेहरहितम् । 'स्नाविरं स्थूलदेहं स्याद्यस्मात्स्नावादिरीर्यते' इत्युक्तेः । अत एव शुक्रं शोकरहितम् । 'शुचं रहति यत्तस्माच्छुक्रं ब्रह्म सनातनम्' इति वचनात् ब्रह्मेत्यर्थः । पर्यगात् प्राप्नोत् ततः कारणात् को मोहः कः शोकः न कोऽपीत्यर्थः । ननु लोके सदेहस्यैव सृष्टिकर्तृत्वदर्शनादेतादृशस्य अशरीरस्य ब्रह्मणः कथं जगत्स्रष्टृत्वमित्यत आह- **कविरिति** ॥ कविः सर्वज्ञः। मनीषी मनसोऽपीशितृवेन मनीषी कमलापतिः' इत्युक्तेश्च । मनसः ईशा इच्छा यस्मै स मनीष आनन्दः यस्यास्तीति मनीषीति प्राशस्त्यार्थे मत्वर्थो वा । अनेन विशेषणद्वयेन ज्ञानानन्दमयदेहत्वं आत्मनो लब्धम् । परिभवति सर्वमिति परिभूः सर्वतो वर इति यावत् । स्वयमेव परमनपेक्ष्य भवति सर्वमिति परिभूः, सर्वतो वर इति यावत् । स्वयमेव परमनपेक्ष्य भवति तिष्ठति इति स्वयम्भूः । सदा अनन्याश्रय इत्यर्थः । शाश्वतीभ्योऽनाद्यनन्ताभ्यः समाभ्यः संवत्सरेभ्य इति । सप्तम्यर्थे पञ्चमी । प्रवाहतोऽनाद्यनन्तसंवत्सरेषु इत्यर्थः । तथा च प्रवाहतोऽनाद्यनन्तसंवत्सरेषु एकरूपतया स्थित्वेत्यर्थः । याथातथ्यतः यथार्थेनार्थान् चराचरात्मकपदार्थान् व्यदधात् ससृजे यद्वा याथातथ्यतः यथार्थेन वर्तमानानिति शेषः । अनेन सृष्ट्यादिकं सर्वं मिथ्येति वदतां मतं निरस्तम् । वाराहे चायमर्थ एवोक्तः -

शुक्रं तच्छोकराहित्यादव्रणं नित्यपूर्ति(र्ण)तः ।
पावनत्वात् सदा शुद्धमकायं लिङ्गवर्जनात् ॥
स्थूलदेहस्य राहित्यादस्नाविरमुदाहृतम् ।
एवम्भूतोऽपि सार्वज्ञात् कविरित्येव शब्द्यते ॥
ब्रह्मादिसर्वमनसां प्रकृत्या मनसोऽपि तु ।
ईशितृत्वात् मनीषी स परिभूस्सर्वतो वरः ॥
सदाऽनन्याश्रयत्वाच्च स्वयम्भूः परिकीर्तितः ।
स सत्यं जगदेतादृङ् नित्यमेव प्रवाहतः ॥
अनाद्यनन्तकालेषु प्रवाहैकप्रकारतः ।
नियमेनैव ससृजे भगवान् पुरुषोत्तमः ॥
सज्ज्ञानानन्दशीर्षोऽसौ सज्ज्ञानानन्दबाहुकः ।
सज्ज्ञानानन्ददेहश्च सज्ज्ञानानन्दपादवान् ॥
एवम्भूतो महाविष्णुर्यथार्थं जगदीदृशम् ।
अनाद्यतन्तकालीनं ससर्जात्मेच्छया प्रभुः ॥ इति ॥ ८ ॥

### उपनिषत्

**अन्धं तमः प्रविशन्ति ये अविद्यामुपासते ।**
**ततो भूय इव ते तमो य उ विद्यायाꣳ रताः ॥ ९ ॥**

**राघ**- 'विजानतोऽनुपश्यतः' इत्यत्र यथावत्परमात्मज्ञानं मुक्तिहेतुरित्युक्तम् । तज्ज्ञानं मिथ्याज्ञाननिन्दासमुच्चितमेव मुक्तिहेतुर्न केवलमित्याह- **अन्धं तम इत्यादिमन्त्रत्रयेण** ॥ तत्र तावद्यथावज्ज्ञानस्येव अन्यथाज्ञाननिन्दनस्य आवश्यकत्वोपपादनाय अन्यथाज्ञानस्य प्रागुक्तमसुर्यलोकसाधवनत्वमनूद्य अन्यथाज्ञानानिन्दनस्य ततोऽधिकानर्थहेतुत्वमाद्येन मन्त्रेणोच्यते । अत्र अविद्या-शब्देन विद्याविरोधिमिथ्याज्ञानवाचिना तद्विषयो अन्यथाप्रकारो ग्राह्यः । तथा च अविद्यां यथावदाकारादन्यथाकारमुपासते ध्यायन्ति ये, ते अन्धं तमः प्रविशन्तीत्युक्तानुवादः । ये विद्यायां उ तत्वज्ञाने एव रताः मिथ्याज्ञानानिन्दका

इत्येवकारार्थः । ते ततो मिथ्याज्ञानिप्राप्यतमसो भूय अधिकं तमः, इवशब्दस्य व्यक्तमित्यर्थः, असंशयमिति यावत् । प्रविशन्तीत्यन्वयः ॥ ९ ॥

**नृ.भि**- अयथार्थज्ञाननिन्दासमुच्चितमेव भगवद्यथार्थज्ञानं मोक्षसाधनमित्याह- **अन्धं तम इति त्रिभिः मन्त्रैः** ॥ ये जनाः अविद्यां ब्रह्मणो जीवैक्य-निर्गुणत्वाद्यन्यथाकारमुपासते ते अन्धं तमः प्रविशन्ति । ये विद्यायामेव रता अयथार्थज्ञाननिन्दां न कुर्वन्ति ते ततः अयथार्थज्ञानिप्राप्यदुःखानुभवात् भूयोऽधिकम् अन्धं तमो दुःखानुभवम् । इव सुव्यक्तं यान्ति । किं विपक्षे बाधकसद्भावादेवोभयं संवहनीयं नेति ब्रूमः ॥ ९ ॥

**अनन्त**- केवलं ज्ञानं मोक्षहेतुर्न । किं नाम ? मिथ्याज्ञानसमुच्चितमेवेति वक्तुम्- **अन्धन्तम इत्यादिमन्त्रत्रयम्** ॥ अन्यथाज्ञाननिन्दाया आवश्यकत्वं वक्तुं अन्यथाज्ञानस्यानर्थहेतुत्वमाद्येन मन्त्रेणाह- **अन्धमिति** ॥ ये अविद्याविषयमन्यथाकारमुपासते जानन्ति । ते अन्धन्तमः प्रविशन्ति । ये विद्यायां सम्यज्ज्ञान एव रताः नतु मिथ्याज्ञाननिन्दायाम् । ते ततः मिथ्याज्ञानिप्राप्यात्तमसः भूय इव अधिकमिव व्यक्तमित्यर्थः । तमो विशन्ति॥ ९ ॥

**कृष्ण**- 'यस्तु' इत्यादिनोक्तं परमात्मतत्त्वज्ञानं मिथ्याज्ञाननिन्दासमुच्चितमेव मुक्तिहेतुरित्याह- **अन्धन्तम इत्यदिमन्त्रत्रयेण** ॥ अन्धं, तमः, प्रविशन्ति, ये, अविद्यां, उपासते, ततः, भूयः, इव, ते, तमः, ये, उ, विद्यायां, रताः । इति पदच्छेदः ॥

अत्र यच्छब्दप्रयोगात् तच्छब्द अर्थाल्लभ्यते । येऽविद्यामुपासते ते अन्धं तमः प्रविशन्ति । ये विद्यायां उ रताः ते ततः भूयोऽन्धं तमः प्रविशन्तीव इति पूर्वेणान्वयः ॥

अत्र अविद्याशब्देन विद्याविरोधिमिथ्याज्ञानवाचिना मिथ्याज्ञानविषयान्यथा-प्रकारो लक्ष्यते । तथाच ये जनाः अविद्यां यथा तदुक्तप्रकारभिन्नप्रकारं ब्रह्म उपासते ध्यायन्ति, तेऽन्धं तमः प्रविशन्ति । उ इत्यवधारणम् । ये जनाः विद्यायां उ तत्त्वज्ञान एव, न तु मिथ्याज्ञाननिन्दने इत्यर्थः । रताः ते जनाः ततः अन्धन्तमसः भूयोऽधिकमन्धं तमः प्रविशन्ति । इवेति निश्चयार्थे । यद्वा ततः भूय इव अन्धं

तमः प्रविशन्ति इत्यन्वयः । ततः मिथ्याज्ञानिप्राप्यतमसः भूय इव अधिकमिव स्थितं तमः प्रविशन्ति । तथा चोपमानार्थकेवशब्दप्रयोगात् मिथ्याज्ञानानिन्दनेन तत्त्वज्ञान एव निरताश्चेत् मिथ्याज्ञानिप्राप्यतमस्सजातीयतम एव यान्तीति भावः तदुक्तं स्कान्दे-

अन्यथाकारमेतत्तु ब्रह्म ध्यायन्ति ये नराः ।
ते यान्त्यन्धं तमो घोरं तथा तेषामनिन्दकाः ॥

ते प्राप्य तमसो दुःखतरं च नरकान्तरम् ।
अन्धं तमः सजातीयं प्रविशन्ति हतौजसः ॥

तन्निन्दया हरेर्ध्यानात् पुनस्तस्माद्विनिर्गताः ।
मुक्तिं यान्ति ततो विष्णुं ध्यायेत्तांश्च विनिन्दयेत् ॥ इति ॥ ९ ॥

### उपनिषत्

**अन्यदेवाहुर्विद्यया अन्यदाहुरविद्यया ।**
**इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १० ॥**

**राघ-** न केवलं विपक्षे अनर्थप्राप्तेरेव सम्यज्ज्ञानासम्यज्ज्ञाननिन्दनयोः कार्यत्वं, किन्तु मोक्षफलस्यांशतः उभयसाध्यत्वादपि द्वयोः कार्यत्वमित्याह- **अन्यदेवेति** ॥ विद्यया तत्त्वज्ञानेन अन्यदेव मोक्षैकदेशरूपं फलं प्राप्यमाहुः वृद्धाः । अविद्यया अन्यथाज्ञाननिन्दया चेति यावत् । अन्यदेव मोक्षैकदेशलक्षणं फलं प्राप्यमाहुः वृद्धाः । इति इत्येव वृद्धवचनसम्मतियुक्तं वचनं धीराणां धीमतां सकाशात् शुश्रुम श्रुतवन्तः स्म । ये धीरा नोऽस्माकं मोक्षसाधनं विचचक्षिरे व्याचचक्षिरे । अतो द्वयमपि आवश्यकमिति भावः ॥ १० ॥

**नृ.भि-** किं नाम मोक्षफलस्यांशत उभयसाध्यत्वाच्चेति भावेनाह- **अन्यदेवेति** ॥ विद्यया यथार्थज्ञानेन अन्यदेव मोक्षैकदेशलक्षणं फलं प्राप्यमाहुः । अयथार्थज्ञाननिन्दनेन अन्यदेव मोक्षैकदेशलक्षणं फलं प्राप्यमाहुः वृद्धाः इति धीराणां धीमतां वृद्धसम्मतियुक्तं वचनं शुश्रुम अशुश्रुम । ये धीराः नोऽस्मभ्यं तत् मोक्षसाधनं विचचक्षिरे व्याचचक्षिरे । तस्मादुपपन्नः समुच्चयः ॥ १० ॥

**अनन्त**- न केवलं परपक्षेऽनिष्टप्राप्तेरेव सम्यज्ज्ञानमिथ्याज्ञाननिन्दनयोः कर्तव्यत्वं किन्तु मोक्षफलस्यांशतः उभयप्राप्यत्वमित्याह- **अन्यदिति** ॥ विद्यया सम्यज्ज्ञानेन । अन्यदेव मोक्षैकदेशलक्षणं फलं प्राप्यमाहुः। अविद्यया मिथ्याज्ञाननिन्दया । शेषं पूर्ववत् । इति धीराणां वचः शुश्रुम । ये धीराः नः अस्मभ्यं तत् मोक्षसाधनं व्याचचक्षिरे अकथयत् । तस्मादुपपन्नः समुच्चयः ॥१०॥

**कृष्ण**- न केवलं मिथ्याज्ञाननिन्दनेन तमः प्राप्तिः किन्तु मिथ्याज्ञाननिन्दायाः मोक्षफलसाधनत्वमप्यस्तीत्याह- **अन्यदेवेति** ॥ अन्यत्, एव, आहुः, विद्यया, अन्यत्, आहुः, अविद्यया, इति, शुश्रुम, धीराणां, ये, नः, तत्, विचचक्षिरे । इति पदच्छेदः ॥

विद्यया अन्येदेवाहुः, अविद्यया अन्यदेवाहुः, इति ये नः तद्विचचक्षिरे तेषां धीराणां शुश्रुम । इत्यन्वयः ॥

वृद्धाः विद्यया तत्त्वज्ञानेन अन्यदेव मोक्षैकदेशफलं भवतीत्येवाहुः । अविद्यया मिथ्याज्ञाननिन्दया अन्यत् पुनस्तदैकदेशं फलं भवतीत्याहुः । इति एवम्प्रकारेण ये धीराः नोऽस्माकम् अस्मभ्यं वा तत् मोक्षसाधनं विचचक्षिरे व्याचचक्षिरे । तेषां धीराणां सकाशात् शुश्रुम । अतः द्वयमप्यावश्यकमिति भावः ॥ १० ॥

## उपनिषत्

**विद्यां चाविद्यां च यस्तद्वेदोभयꣳ सह ।**
**अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ ११ ॥**

**राघ**- एतन्मन्त्रार्थमेव व्यक्तमाह- **विद्याञ्चेति** ॥ विद्यां विष्णुयाथात्म्यज्ञानम् । अविद्यां मिथ्याज्ञाननिन्दनम् । चशब्दावितरेतरयोगे । सह एकपुरुषार्थहेतुत्वेन तदुभयं यो वेद स इति शेषः । अविद्यया अन्यथाज्ञाननिन्दया मृत्युं दुःखाज्ञानाद्यनिष्टं तीर्त्वा विद्यया विष्णुयाथात्म्यज्ञानेन अमृतं आनन्दानुभवलक्षणं मोक्षैकदेशमश्नुते प्राप्नोति । अनिष्टनिवृत्तेर्मिथ्याज्ञाननिन्दनसामर्थ्यलभ्यत्वात् आनन्दानुभवस्य च तत्त्वज्ञानसामर्थ्यलभ्यत्वात् दलद्वययुक्तमोक्षप्राप्तये द्वयमपि आवश्यकमेवेत्युक्तं भवति ॥ ११ ॥

**नृ.भि**- इममेवार्थं विवृणोति- **विद्याञ्चेति** ॥ विद्यां च ईश्वरस्य यथार्थज्ञानविषयं याथात्म्यम्, अविद्यां च अयथार्थज्ञाननिन्दाञ्चेति तदुभयं सह एकपुरुषार्थहेतुत्वेन यो वेद, सः अविद्यया अयथार्थज्ञाननिन्दया मृत्युं संसारदुःखं तीर्त्वा, विद्यया यथार्थज्ञानेनामृतं स्वरूपानन्दानुभवरूपमोक्षमश्नुते प्राप्नोति ॥११॥

**अनन्त**- एतद्विवृणोति- **विद्याश्चेति** ॥ विद्याश्च अविद्याश्च उभयं सह एकपुरुषार्थसाधकत्वेन वेद सः । अविद्यया मृत्युं दुःखादिकं तीर्त्वा । विद्यया अमृतं सुखज्ञानादिकम् । अश्नुते प्राप्नोति ॥ ११ ॥

**कृष्ण**-एतन्मन्त्रार्थमेव विशिनष्टि - **विद्यामिति** ॥ विद्यां, च, अविद्यां, च, यः, तत्, वेद, उभयं, सह, अविद्यया, मृत्युं, तीर्त्वा, विद्यया, अमृतं, अश्नुते । इति पदच्छेदः ॥

यः विद्यां चाविद्यां सह तदुभयं वेद, सः अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते । इत्यन्वयः ॥

यः देही विद्यां च तत्त्वज्ञानं च अविद्यां च मिथ्याज्ञाननिन्दनं च । अन्योन्यसमुच्चये चशब्दद्वयम् । तदुभयं एतद्विद्याद्वयं सह एकपुरूषार्थहेतुत्वेन वेद, सः देही अविद्यया अन्यथाज्ञाननिन्दनेन मृत्युं दुःखाज्ञानाद्यनिष्टं तीर्त्वा, विद्यया तत्त्वज्ञानेन अमृतं आनन्दानुभवरूपमोक्षमश्नुते अनुभवति । तथाच अनिष्टनिवृत्ति-हेतुत्वमविद्यानिन्दाया, आनन्दानुभवहेतुत्वं विद्याया इति द्वयमप्यावश्यकमिति भावः । अथवा एकश्च शब्दः समुच्चयेऽन्यस्त्ववधारणे । तथा च विद्यामविद्यां च सहैव यो वेदेत्यर्थः ॥११॥

### उपनिषत्

**अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते ।**
**ततो भूय इव ते तमो य उ सम्भूत्याᳪ रताः ॥१२॥**

**राघ**- मिथ्याज्ञानमनर्थहेतुः तत्त्वज्ञानमेव मुक्तिहेतुरिति प्रागुक्तस्य विवरणम् 'अन्धं तमः' इत्युत्तरमन्त्रत्रयेण क्रियते । तत्राद्यस्यायमर्थः । असम्भूतिं जगत्सृष्टेरकर्तारम्, सृष्टिकर्ता नेत्युपासत इत्यर्थः । सम्भूत्यां उशब्द एवार्थो

अनेनान्वेति, सम्भूत्याम् उ सृष्टिकर्तृत्व एव रताः । भगवान् सृष्टिकर्तैव न संहारकर्तेत्युपासत इत्यर्थः । प्राग्वदेव अवशिष्टस्यार्थो ध्येयः (ज्ञेयः) ॥ १२ ॥

**नृ.भि**- एतन्मन्त्रत्रयार्थं विवृणोति- **अन्धं तमः इत्युत्तरमन्त्रत्रयेण ॥** येऽसम्भूतिं जगत्सृष्ट्यकर्तारं परमात्मानमुपासते ते अन्धं तमः प्रविशन्ति । ये सम्भूत्याम् उ एव रताः संहारादिकर्तृत्वं नास्तीति, ते ततः भगवदसृष्टिकर्तृत्व-ज्ञानिप्राप्यान्धतमदुःखानुभवात् भूयोऽधिकं तमः प्रविशन्ति । सुव्यक्तं प्रविशन्ति ॥१२॥

**अनन्त**- मिथ्याज्ञानमनर्थहेतुः सम्यज्ज्ञानं तु मोक्षहेतुरित्युक्तं विवरितुम्- **अन्धन्तम इत्यादिमन्त्रत्रयम् ॥** तत्राद्यस्यार्थः । ये असम्भूतिं नास्ति जगदुत्पत्तिर्यस्मादित्यसम्भूतिः तम् । हरेः जगत्स्रष्टृत्वाभावमित्यर्थः । उपासते जानन्ति । सम्भूत्यां सृष्टिकर्तृत्वे । उ एव । नतु संहारकर्तृत्वे ॥ १२ ॥

**कृष्ण**- मिथ्याज्ञानतत्त्वज्ञानयोः तमोमुक्तिहेतुत्वमुक्तम् । तत्र कीदृशं मिथ्याज्ञानं, कीदृशं तत्त्वज्ञानमित्याशङ्कायामनेकविधमिथ्याज्ञानतत्त्वज्ञानमध्ये एकविधमुदाहरति, तथा तत्फलं चाह- **अन्धं तम इति ॥**

अन्धं, तमः, प्रविशन्ति, ये, असम्भूतिं, उपासते, ततः, भूयः, इव, ते, तमः, ये, उ, सम्भूत्यां, रताः । इति पदच्छेदः ॥

ये जनाः ब्रह्मेति शेषः । असम्भूतिं सृष्ट्यकर्तृ इति उपासते ध्यायन्ति तेऽन्धं तमः प्रविशन्ति । अत्र सृष्टिवाचकसम्भूतिपदस्य सृष्टिकर्तरि लक्षणा । ये जनाः सम्भूत्यां उ सम्भूत्यामेव सृष्टिकर्तृत्वज्ञान एव । न संहारकर्तृत्वज्ञान इत्युकारार्थः । अत्रापि सम्भूतिपदस्य सृष्टिकर्तृत्वप्रकारकज्ञाने लक्षणा । रता आसक्ताः ते जनाः ततः सृष्ट्यकर्तृत्वज्ञानिप्राप्यतमसः भूयोऽधिकं तमः प्रविशन्तीति पूर्वेणान्वयः । अन्वयस्य सुलभत्वात् प्रत्येकं न लिखितः । तथा च हरेः सृष्ट्यकर्तृत्वज्ञानं मिथ्याज्ञानं तत्फलं तु अन्धं तम इत्युक्तं भवति ॥१२॥

### उपनिषत्

**अन्यदेवाहुः सम्भवादन्यदाहुरसम्भवात् ।**
**इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १३ ॥**

**राघ**-न केवलं विपक्षे अनर्थसत्त्वादेव सृष्टिसंहारयोः कर्तृत्वं हरेर्ज्ञेयम् । किन्तु दलद्वययुक्तमोक्षोपयोगित्वादपीत्याह- **अन्यदेवेति** ॥ सम्भवात् हरेः सृष्टिकर्तृत्व-ज्ञानात् । असम्भवात् संहारकर्तृत्वज्ञानादित्यर्थः । शिष्टं प्राग्वज्ज्ञेयम् ॥ १३ ॥

**नृ.भि**- न केवलं विपक्षे बाधकादुभयं ज्ञातव्यम्, किन्तु मोक्षोपयेगित्वाच्चेति भावेनाह- **अन्यदेवेति** ॥ सम्भवात् सृष्टिकर्तृत्वज्ञानात्, असम्भवात् सम्भवविपरीतसंहारादिकर्तृत्वज्ञानात् ॥ १३ ॥

**अनन्त**- न केवलमनर्थहेतुत्वादिदं ज्ञातव्यम् । किन्तु मोक्षोपयोगित्वाद-पीत्याह- **अन्यदिति** ॥ सम्भवात् सृष्टिकर्तृत्वज्ञानात् । असम्भवात् संहारकर्तृत्वज्ञानात् । शेषं पूर्ववत् ॥१३॥

**कृष्ण**- न केवलं हरेः सृष्ट्यकर्तृत्वज्ञानेन तमः प्राप्तिरपितु मोक्षैकदेशफल-साधनत्वमपीत्याह- **अन्यदेवेति** ॥

अन्यत्, एव, आहुः, सम्भवात्, अन्यत्, आहुः, असम्भवात्, इति, शुश्रुम, धीराणां, ये, नः, तत्, विचचक्षिरे । इति पदच्छेदः ॥

अन्वयः सुलभ एव । वृद्धा इति शेषः । वृद्धाः सम्भवात् सृष्टिकर्तृत्व-प्रकारकज्ञानात् अन्यदेव, मोक्षैकदेशफलमित्येव आहुः । असम्भवात् सृष्ट्यकर्तृत्वप्रकारकज्ञाननिन्दनात् संहारकर्तृत्वज्ञाने वा लक्षणा। अन्यत् मोक्षैकदेशं फलं भवतीत्याहुः । इत्येवं प्रकारेण वृद्धवचनं ये धीराः नः अस्माकम् अस्मभ्यं वा तत् मोक्षसाधनं विचचक्षिरे व्याचचक्षिरे । तेषां धीराणां धीमतां सकाशात् शुश्रुम ॥१३॥

## उपनिषत्

**सम्भूतिं च विनाशं च यस्तद्वेदोभयꣳ सह ।**
**विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते ॥ १४ ॥**

**राघ**- एतन्मन्त्रार्थमेव व्यक्तमाह- **सम्भूतिञ्चेति** ॥ सम्भूतिं सृष्टिकर्तृत्वम्, विनाशं जगत्संहारकर्तृत्वम्, शिष्टं प्राग्वत् । सृष्ट्युपलक्षितानन्तगुणात्मकत्वज्ञानानन्दानुभवः, विनाशकर्तृत्वज्ञानादखिलक्लेशनिवृत्तिरिति उभयरूपमोक्षाय उभयज्ञानमावश्यकमिति भावः ॥ १४ ॥

**नृ.मि**- एतदेव विवृणोति- **सम्भूतिञ्चेति** ॥ अन्यत्पदजातं पूर्ववद्व्याख्येयम् ॥१४॥

**अनन्त**- एतदेव स्पष्टयति- **सम्भूतिमिति** ॥ विनाशं संहर्तृत्वम् । विनाशेन संहर्तृत्वज्ञानेन । सम्भूत्या सृष्टिकर्तृत्वज्ञानेन । सम्भवासम्भवशब्दयोः विष्णुगुणान्तरोपलक्षणत्वेन एकस्यापि गुणस्य तत्र हानिं न जानीयादिति भावः ॥१४॥

**कृष्ण**- एतन्मन्त्रार्थमेव स्फुटयति- **सम्भूतिं चेति** ॥

सम्भूतिं, च, विनाशं, च, यः, तत् ,वेद, उभयं, सह, विनाशेन, मृत्युं, तीर्त्वा, सम्भूत्या, अमृतं, अश्नुते । इति पदच्छेदः ॥

अन्वयस्तु विद्यां चेति मन्त्रान्वयवत् । चद्वयोर्मध्ये एकः समुच्चये, एकस्तु अवधारणे । यः ज्ञानी सम्भूतिं सृष्टिकर्तृत्वज्ञानं विनाशं च सृष्ट्यकर्तृत्वप्रकारक-ज्ञाननिन्दनमपि संहारकर्तृत्वप्रकारकज्ञानमपि वा तदुभयं सह च एकपुरुषार्थहेतुत्वेनैव वेद स ज्ञानी विनाशेन पूर्वोक्तज्ञानेनेत्यर्थः, मृत्युं दुःखाद्यनिष्टं तीर्त्वा सम्भूत्या सृष्टिकर्तृत्वज्ञानेनामृतं आनन्दानुभवरूपमोक्षैक-देशमश्नुते अनुभवति । 'अन्धं तमः प्रविशन्ति येऽविद्यामुपासते' इत्यादिमन्त्र-षट्कार्थ एवोक्तः कौर्मे...

अन्यथोपासका ये तु तमोऽन्धं यान्त्यसंशयम् ।
ततोऽधिकतमं व्यक्तं यान्ति तेषामनिन्दकाः ॥

तस्माद्यथास्वरूपं च नारायणमनामयम् ।
अयथार्थस्य च निन्दां च ये विदुः सह सज्जनाः ॥

तेऽनिन्दयाऽयथार्थस्य दुःखाज्ञानादिरूपिणः ।
दुःखाज्ञानादिसन्तीर्णाः सुखज्ञानादिरूपिणः ॥

यथार्थस्य परिज्ञानात् सुखज्ञानादिरूपताम् ।
यान्त्येवं सृष्टिकर्तृत्वं नाङ्गीकुर्वन्ति ये हरेः ॥

तेऽपि यान्ति तमो धोरं तथा संहारकर्तृताम् ।
नाङ्गीकुर्वन्ति तेऽप्येवं तस्मात्सर्वगुणात्मकम् ।
सर्वकर्तारमीशेशं सर्वसंहारकारकम् ॥

यो वेद संहृतिज्ञानाद्देहबन्धाद्विमुच्यते ।
सुखज्ञानादिकर्तृत्वज्ञानात्तव्द्यक्तिमाव्रजेत् ॥

सर्वदोषविनिर्मुक्तं गुणरूपं जनार्दनम् ।
जानीयान्न गुणानां च भागहानिं प्रकल्पयेत् ॥

न मुक्तानामपि हरेः साम्यं विष्णोरभिन्नताम् ।
नैव प्रचिन्तयेत्तस्माद्ब्रह्मादेः साम्यमेव वा॥

मानुषादिविरिञ्चान्तं तारतम्यं विमुक्तिगम् ।
ततो विष्णोः परोत्कर्षं ज्ञात्वा सम्यग्विमुच्यते ॥ इति ॥१४॥

### उपनिषत्

**हिरणमयेन पात्रेण सत्यस्यापिहितं मुखम् ।**
**तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥ १५ ॥**

**राघ**- एवमाद्यमन्त्रद्वयेनोक्तदिशा प्राप्ताधिकारं शिष्यं प्रति 'अनेजदेकम्' इत्यादिना भगवत्स्वरूपं निरूप्य 'यस्तु सर्वाणि' इत्यादिसार्धमन्त्रद्वयेन तत्साक्षात्कारो मोक्षहेतुरित्युक्तम् । स च साक्षात्कारो न श्रवणादिमात्रेण । किन्तु ईश्वरप्रसादेन भवतीत्यतो अनुष्ठितश्रवणादिकेनापि तत्साक्षात्कारार्थं भगवत्प्रार्थनं कार्यमिति

भावेन प्रार्थनाप्रकारमाह- **हिरण्मयेन इत्यादिना स्मरेत्यन्तेन ग्रन्थेन ॥** हिरण्मयमिव हिरण्मयं ज्योतिर्मयम्, पिबति रसान् त्रायते जगदिति च पात्रम्, तेन हिरण्मयेन पात्रेण सूर्यमण्डलेन सत्यस्य सद्गुणपूर्णस्य सूर्यमण्डलस्थस्य तव मुखं, उपलक्षणश्चैतत् , वपुः सर्वदा अपिहितमस्ति । हे पूषन् पूर्ण, 'पुष पुष्टौ' इति धातोः, तद्वपुः त्वं सत्यधर्माय सत्यं भगवन्तं हृदये धारयतीति व्युत्पत्त्या त्वद्ध्यानादिमते भक्ताय मह्यं दृष्टये मम त्वद्दर्शनार्थं अपावृणु अपगतावरणं कुरु ॥१५॥

**अनन्त**- एवं परमात्मतत्त्वं निरूप्य ज्ञाततत्त्वस्याज्ञानिनो परोक्षज्ञानार्थं ज्ञानिनां मोक्षार्थञ्च विष्णुप्रसादो मृग्य इति तत्प्रसादसाधनतत्प्रार्थनाप्रकारमाह- **हिरण्मयेनेत्यादिना** ॥ हिरण्मयेन हिरण्यमिव प्रकाशमानेनेत्यर्थः। पात्रेण, पिबति त्रायते जगदिति च पात्रं सूर्यमण्डलं तेन सत्यस्य साधुगुणयुक्तस्य विष्णोः मुखं वपुः अपिहितं छन्नम् । पूषन् पूर्ण । ते तद्रूपं सत्यधर्माय विष्णुमादरनैरन्तर्याभ्यां बिभ्रते भक्तायेत्यर्थः । दृष्टये दर्शनार्थम् । अपावृणु अपगतावरणं कुरु ॥ १५ ॥

**कृष्ण**- अत्राद्यमन्त्रद्वयोक्तदिशा प्राप्ताधिकारं प्राणिनं प्रति 'अनेजत्' इत्यादिना परमात्मस्वरूपं निरूप्य, 'यस्तु सर्वाणि' इत्यादिना साक्षात्कारस्य मोक्षहेतुत्वमुपपाद्य, न केवलं भवति साक्षात्कारः श्रवणादिमात्रेण, अपि तु ईश्वरप्रसादेनाप्यतोऽनुष्ठितश्रवणादिकस्यापि ईश्वरसाक्षात्कारहेतुभूतेश्वरप्रसादसिद्ध्यर्थं भगवत्प्रार्थनाप्रकारं विवक्षुरादौ सूर्यस्थितेश्वरप्रसादप्रार्थनाप्रकारमाह वेदपुरुषः- **हिरण्मयेनेति** ॥

हिरण्मयेन, पात्रेण, सत्यस्य, अपिहितं, मुखं, तत् ,त्वं, पूषन्, अपावृणु, सत्यधर्माय, दृष्टये । इति पदच्छेदः ।

अन्वयस्य सौलभ्यात् सार्थं दर्शयामहे । हे पूषन् पूर्ण 'पुष पुष्टौ' इति धातुः । त्वं हिरण्मयेन ज्योतिर्मयेन पात्रेण पिपर्ति रसान् आसमन्तात् त्रायते जगदिति च पात्रम्, तेन 'पृ पालनपूरणयोः' इति 'पा रक्षणे' इति धातुः । रसपूरणेन जगद्रक्षकेणेत्यर्थः । सूर्यमण्डलेनेति यावत्। 'याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति' इति श्रुतेः । सत्यस्य सद्गुणपूर्णस्य तव मुखम् । सत्यधर्माय सत्यं

सद्गुणपूर्णं हरिं हृदये धारयतीति सत्यधर्मस्तस्मै । हरिध्यानादिमते भक्ताय मह्यमित्यर्थः । अपिहितमाच्छादितम् । दृष्टये त्वद्दर्शनार्थं अपावृणु अपगतावरणं कुरु । तथा चोक्तं ब्रह्माण्डे-

पात्रं हिरण्मयं सूर्यमण्डलं समुदाहृतम् ।
विष्णोः सत्यस्य तेनैव सर्वदाऽपिहितं मुखम् ॥
तत्तु पूर्णत्वतः पूषा विष्णुर्दर्शयतिस्वयम् ।
सत्यधर्माय भक्ताय.................. ॥ इति ॥ १५ ॥

### उपनिषत्

**पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् समूह । तेजः यत्ते रूपं कल्याणतमं तत्ते पश्यामि (योऽसावसौ पुरुषः सोऽहमस्मि) ॥ १६ ॥**

**राघ**- हे पूषन् पूर्ण । एकर्षे सर्वविषयकत्वादिना प्रधानज्ञानवत्वहेतुना एकर्षिशब्दवाच्यः सन् एकर्ष्याख्यमुनिस्थ । यम सर्वनियामकतया यमशब्दवाच्यः सन् यमान्तर्गत । सूरिभिः प्राप्यत्वहेतुना सूर्यशब्दवाच्यः सन् सूर्यान्तर्गत । प्राजापत्य प्रजापतेः हिरण्यगर्भस्य विशेषेण प्राप्यतया प्राजापत्यशब्दवाच्य । रश्मीन् मदीयं स्वरूपज्ञानं व्यूह विस्तारय । तेजो बाह्यज्ञानं च समूह विस्तारयेत्यर्थः । तेज इति स्वरूपज्ञानम् । रश्मीनिति बाह्यज्ञानं वा । तथा च यत्ते रूपं कल्याणतमं तद्रूपं ते प्रसादादहं पश्यामीति । आदित्यरश्म्यादीनां अपगमनादिना तदन्तर्गत-प्रतीत्यसम्भवात् आदित्यरश्म्यादिविषयं व्याख्यानमयुक्तम् ॥ १६ ॥

**नृ.भि**- प्राप्ताधिकारस्य जिज्ञासोरपरोक्षज्ञानार्थमपरोक्षज्ञानिनो मोक्षार्थं चावश्यापेक्षितभगवत्प्रसादार्थं भगवत्प्रार्थनाप्रकारं निरूप्यते- **हिरण्मयेनेति** ॥ हिरण्मयवद्धिरण्मयम् । पिबति रसान् त्रायते जगदिति पात्रम् । तेन सूर्यमण्डलेन सत्यस्य सद्गुणपूर्णस्य आदित्यमण्डलान्तर्गतस्य तव मुखं वपुः सर्वदा अपिहितमस्ति । तत्तद्रूपं हि पूर्णत्वात् पूषन् । प्रधानरूपत्वादेकर्षे । नियमनाद्यम । सूरिभिर्ज्ञेयत्वात् सूर्य । विशेषेण हिरण्यगर्भज्ञेयत्वात् प्राजापत्य, विष्णो, त्वं सत्यं

विष्णुं हृदये धारयतीति सत्यधर्मा, विष्णुभक्तः तस्मै मह्यं दृष्टयेऽपरोक्षज्ञानाय अपावृणु अपगतावरणं कुरु । रश्मीन् मदीयस्वरूपज्ञानं च समूह विस्तारय । तथा सति यत्ते कल्याणतमं रूपं तद्रूपं ते प्रसादादहं पश्यामि ॥ १५ ॥ १६ ॥

**अनन्त**- एकर्षे मुख्यज्ञानात्मक, सर्वज्ञेत्यर्थः । मम नियामक । सूर्य सूरिगम्य । प्राजापत्य विशेषतो विरिञ्चिगम्य । रश्मीन् स्वरूपज्ञानम् । व्यूह वर्धय । तेजः वृत्तिज्ञानं समूह वर्धय । यत्ते रूपम् । तेऽनुग्रहादिति भावः । पश्यामि पश्येयम् । असौ मुख्यवायौ स्थितः योऽसौ प्रसिद्धः पुरुषः । सः अहं अहेयत्वादहं नामा । अस्मि सदास्तित्वेन प्रमितत्वादस्मिनामा तञ्च पश्यामीति शेषः ॥ १६ ॥

**कृष्ण- पूषन्निति** ॥ पूषन्, एकर्षे, यम, सूर्य, प्राजापत्य, व्यूह, रश्मीन्, समूह, तेजः, यत्, ते, रूपं, कल्याणतमं, तत्, ते, पश्यामि । इति पदच्छेदः ।

अन्वयं तु पूर्ववद्दर्शयामः । हे पूषन् पूर्ण । एकर्षे सर्वविषयकत्वदिना प्रधानज्ञानरूपत्वेन हेतुना एकर्षिशब्दवाच्य। यम सर्वनियामकत्वेन यमशब्दवाच्य । सूर्य सूरिप्राप्यतया सूर्यशब्दवाच्य प्राजापत्य विशेषेण प्रजापतिगम्यतया प्राजापत्यशब्दवाच्य हरे ।

......................प्रधानज्ञानरूपतः ।
विष्णुरेक ऋषिर्ज्ञेयो यमो नियमनाद्धरिः ॥

सूर्यः स सूरिगम्यत्वात् प्राजापत्यः प्रजापतेः ।
विशेषेणैव गम्यत्वात्...................... ॥ इति ब्रह्माण्डोक्तेः ।

रश्मीन् मदीयस्वरूपज्ञानं व्यूह विस्तारय। तेजः बाह्यज्ञानं समूह विस्तारय। रश्मीनिति बाह्यज्ञानं तेज इति स्वरूपज्ञानं वा यत् ते तव रूपं स्वरूपं कल्याणतममतिशयेन मङ्गलरूपं, तत् तादृशं त्वद्रूपं ते तव प्रसादादिति शेषः । पश्यामि । रशतीति रश्मिः । 'रश कान्तौ' इत्यस्मादौणादिकः क्मिन् प्रत्ययः । तेजयतीति तेजः । 'तिज निशाने' इत्यस्मात् सन्प्रत्ययः ॥ १६ ॥

## उपनिषत्

### योऽसावसौ पुरुषः सोऽहमस्मि ॥ १६ ॥

**राघ-** सर्वजीवोत्तममुख्यवायुरूपप्रतीकस्थित्यादिज्ञानमावश्यकमिति भावेन तत् स्थित्यादिकमाह- **य इति** ॥ योऽसौ प्रसिद्धोऽसौ मुख्यप्राणे स्थित इति शेषः । सोऽहेयत्वात् अहमित्युक्तः सदाऽस्तित्वेन मेयत्वहेतुना अस्मीति तिङ्प्रतिरूपकाव्ययपदवाच्यः तं पश्यामीत्यर्थः । यद्वा असावसाविति द्वयमपि प्रथमान्तमेव । वीप्सायां द्विरुक्तिः । पूर्वं पूषादिशब्दैरुपलक्षणतया प्राणाद्यनेक-प्रतीकस्थत्वं विष्णोरुक्तम् । तत्र भेदशङ्कायां 'योऽसौ' इति वाक्यमुच्यते । योऽसावसौ पुरुषः प्राणाद्यनेकप्रतीकेषु स्थितः सोऽहमस्मि मदन्तर्यामितया अस्तीत्यर्थः । पूषाद्यनेकप्रतीकेषु मयि च स्थित एक एवेति फलितोऽर्थः । अहंपदस्य प्रत्यगात्मजीवान्तर्यामिणि मुख्यतया तत्समभिव्याहारादस्मीति उत्तरमपुरुषप्रयोगोऽपि साधुरेवेति ज्ञेयम् ॥ १६ ॥

**नृ.भि-** सूर्योपलक्षितं मुख्यप्राणदिभिन्नोऽनेकान्तर्यामिभेदो न मन्तव्यमित्याह- **योऽसाविति** ॥ योऽसौ प्रसिद्धोऽसौ मुख्यप्राणे स्थितोऽहं सः मदन्तर्यामी । इदमन्तर्याम्यैक्यं नोपचरितमित्याह - **स एवेति** ॥ सः मुख्याप्राणान्तर्यामी अहं मदन्तर्यामी, असौ च अथ यो वा असौ यो प्रसिद्धोऽसौ मुख्यप्राणे स्थितः । स अहेयत्वादहं नाम । नित्यास्तित्वनित्यज्ञानाभ्यामस्मि । तं पश्यामि । तथा देहस्थत्वेऽपि तस्याहेयत्वादिकं नोपचरितमित्याह- **स एवाहमस्मीति** ॥१६॥

## उपनिषत्

**योऽसावसौ पुरुषः सोऽहमस्मि ।**
**वायुरनिलममृतमथेदं भस्मान्तꣳ शरीरम् ॥**

**कृष्ण-** अथ सर्वजीवोत्तममुख्यवायुप्रतीकस्थितत्वज्ञान-मावश्यकमिति वायुकार्यकारितया हरेर्वायुप्रतीकस्थितिमाह- **योऽसाविति** ॥ यः, असौ, असौ, पुरुषः, सः, अहं, अस्मि, वायुः, अनिलं, अमृतं, अथ, इदं, भस्मान्तं, शरीरम् । इति पदच्छेदः ॥

यो हरिरसौ सूर्यमण्डलस्थितोऽसौ यमादिशब्दवाच्यः सः तादृशो हरिः वायुः वाय्वन्तर्गतः । 'वायुः प्रवृत्तिकर्तृत्वात्सर्वस्य जगतो हरिः' इति वचनात्सर्व-

प्रवर्तकत्वाच्च वायुशब्दवाच्यः । पुरुष इत्यादिसर्वं वायुपदविशेषणम् । उपचारतया वायौ मुख्यतया च विष्णावन्वेति । किं भूतः वायुः विष्णुश्च । पुरुषः दैत्येषु पूर्णकोपवान्, पूर्णषड्गुणैश्वर्यवांश्च ॥

दैत्येषु पूर्णकोपत्वात्पुरुषो वायुरीरितः ।
मुख्यत्वेन हरिर्ज्ञेयः सम्पूर्णैश्वर्यवत्वतः ॥ इत्युक्तेः ॥

अहमव्ययमिदम् । अहं ब्रह्मज्ञानित्वात् अहंशब्दवाच्यो वायुः । अहेयत्वादहंशब्दवाच्यो हरिः । आस्तिकत्वादस्मीत्यव्ययवाच्यो वायुः । त्रिकालस्थितित्वात् हरिश्च ॥

ब्रह्मगत्वादहं वायुरहेयत्वादहं हरिः ।
आस्तिक्याद्वायुरस्मि स्यात् त्रिकालस्थितितो हरिः ॥ इत्युक्तेः ।

अनिलामृतादिपदं मुख्यतया परब्रह्मवाचकमिति द्योतनाय नपुंसकत्वेन श्रुत्युक्तम् । वायुविशेषणे तु लिङ्गपरिणामः । अं ब्रह्म निलम् आश्रयो यस्य सोऽनिलः वायुः । न विद्यते निलं यस्य तदनिलं परब्रह्म । अनाश्रयमित्यर्थः । अमृतः नित्यज्ञानत्वेनामृतशब्दवाच्यो वायुः। नित्यत्वेनामृतं परब्रह्म-

अतिरोहितर्विज्ञानाद्वायुरप्यमृतः स्मृतः ।
मुख्यामृतः स्वयं रामः परमात्मा सनातनः ॥ इत्युक्तेः ॥

भक्तमङ्गलकारित्वात्, मङ्गलरूपत्वाद्वा अथेत्यव्ययवाच्यो वायुः हरिश्च । 'भक्तसम्पत्प्रदानेन हरिवायू इदौ स्मृतौ' इत्युक्तेः । भक्तानां ज्ञानादिसम्पत्प्रदानेनेदंशब्दवाच्यो वायुर्हरिश्च । 'ज्ञानिभिर्भर्त्सितत्वाच्च भस्म संसारमिष्यते' इति वचनात् भस्मनः संसारस्य अन्तो नाशो येनेति व्युत्पत्त्या भस्मान्तशब्दवाच्यो वायुर्हरिश्च। 'नाशहेतुत्वतो वायुः शरीरं ब्रह्म चापि तत्' इत्युक्तेः दैत्याभीष्टनाशकत्वेन शरीरशब्दवाच्यो वायुः । जगत्संहारकर्तृत्वेन शरीरशब्दवाच्यो हरिः । अनेन उभयत्रान्वितविशेषणव्यूहेन यत्र वायुशब्दस्तत्र हरिरिति व्याप्तिः विशेषेण वायुप्रतीकस्थितिश्च उक्ता । तथा च योऽसावसौ सः पुरुषोऽहमस्मि ॥

अनिलम् अमृतम् अथ इदं भस्मान्तं शरीरं वायुरित्यन्वयो द्रष्टव्यः । अथवा अनिलामृतपदयोः लिङ्गव्यत्ययो ज्ञेयः । अत्र यद्यपि, तथापि, यदा इति पदत्रयमध्याहर्तव्यम् । परमात्मा अमृत इति किमु वक्तव्यमिति वाक्यशेषः । तथा च योऽसौ असौ पुरुषः सोऽहमस्मि । यद्यपि इदं शरीरं भस्मान्तं तथापि अनिलो वायुः यदा अमृतोऽथ परमात्मा अमृत इति किमु वक्तव्यमित्यन्वयः ॥

असाविति सप्तमी । योऽसौ प्राणप्रतीकस्थितोऽसौ पुरुषः पुरुषाद्यनेकप्रतीकस्थितः । यद्वा असावसाविति वीप्सा । सः हरिः अहमस्मि मदन्तर्यामितया अस्तीत्यर्थः । एवञ्च पुरुषाद्यनेकप्रतीकस्थितो वायुस्थितो मत्स्थितः परमात्मा एक एवेति भावः । ननु परमात्मनः 'स पर्यगाच्छुक्रम्' इत्यादिना नित्यत्वमुक्तम् । सोऽहमस्मीत्यादिना शरीरान्तर्गतत्वं जीवान्तर्गतत्वोक्त्या अनित्यास्तित्वमुक्तम् । देहनाशस्य प्रत्यक्षसिद्धतया तदन्तर्गतजीवस्येव परमात्मनो मरणाद्यसम्भवात् कथं घटत इत्याशङ्कां कैमुत्येन निराकरोति- **वायुरित्यादिना** ॥ यद्यपि इदं जीवाधिष्ठितं शरीरं भस्मान्तं नाशशालि, तथापि अनिलः ब्रह्माश्रितो वायुः यदा अमृतः नित्यः, अथ, तदा परमात्मा अमृतः नित्य इति किं वक्तव्यम् । तथा च सकलशरीरान्तर्गतजीवान्तो वायुः यदाश्रयणेन नित्यः, सः हरिर्नित्य इति किमु वक्तव्यमिति भावः ॥

## उपनिषत्

### वायुरनिलममृतमथेदं भस्मान्तꣳ शरीरम् ॥ १७ ॥

**राघ**- ननु परमेश्वरस्य यत्कल्याणरूपत्वमुक्तं, यच्च सोऽहमस्मीति जीवान्तर्गतस्य नित्यास्तित्वमुक्तं तन्न युक्तम् । देहनाशस्य प्रत्यक्षादिसिद्धतया तदन्तर्गतस्य जीवस्येव मरणाद्यवश्यम्भावादित्याशङ्कां कैमुत्येन निराह- **वायुरिति** ॥ यद्यपि इदं शरीरं भस्मान्तं तथापि तदन्तर्गतस्य हरेः न मरणादिदोषप्रसक्तिः । कुतः? अनिलम् । अः ब्रह्मैव निलं निलयनं आश्रयो यस्य सोऽनिलः । परमेश्वराश्रितो वायुरपि यदाऽमृतः नित्यः, अथ तदा परमेश्वरोऽमृत इति किमु वक्तव्यमित्यर्थः । अनिलामृतपदयोः लिङ्गव्यत्ययो ज्ञेयः । वायोरमृतत्वं नित्यज्ञानत्वेन ज्ञेयम् । 'अतिरोहितविज्ञानाद्वायुरप्यमृतः स्मृतः' इत्युक्तेः । 'एतेन मातरिश्वा व्याख्यातः' इत्यत्र भाष्यादौ तथा निर्णयाच्चेति ॥ १८ ॥

**नृ.भि-** अनित्यदेहस्थत्वेन विष्णोर्जीववदनित्यत्वं भवेदेवेति कथं नित्यास्तित्वादिकमिति शङ्काया कैमुत्येन नित्यत्वमाह- **वायुरिति** ॥ अनिलं अः निलं निलयनं यस्यासौ, अनिलं लिङ्गव्यत्येन अनिलः, अकारवाच्यभगवदाश्रितो वायुरपि अमृतम् । अमृतः प्रलयेऽप्यविलुप्तज्ञानत्वेन स्तुत्यः, किमु तदाश्रयो विष्णुरमृत इति ॥

**अनन्त-** अहमस्मीति विष्णोर्जीवगतस्य नित्यास्तित्वकल्याणरूपत्वञ्चोक्तं तन्न घटते । देहभस्मान्तत्वदर्शनात्तन्नाशे जीववत्तस्यापि मरणेन ज्ञानलोपावश्य-म्भावादित्यत आह- **वायुरिति** ॥ अथ यद्यपि इदं शरीरं भस्मान्तं तथापि न विष्णोः मरणं ज्ञानलोपादिप्रसङ्गः । कुतः? अनिलं लिङ्गव्यत्ययः छान्दसः । अः विष्णुः निलं निलयः यस्यासौ अनिलः । तदधीन इत्यर्थः । वायुरपि यदा अमृतं लिङ्गव्यत्ययः । मरणेऽप्यविलुप्तज्ञानः । तदा किमु वक्तव्यं तस्याश्रयो हरिरिति ॥१७॥

## उपनिषत्

**ओम् क्रतो स्मर कृतꣳ स्मर ओम् क्रतो स्मर कृतꣳ स्मर ॥१७॥**

**राघ-** अथ प्रणवप्रतीकं प्रार्थयते- **ओमिति** ॥ ओतत्वादिगुणयुक्ततया ओमित्युच्यमान क्रतो ज्ञानरूप हरे । 'माम्' इति शेषः । स्मर अनुगृहाण । कृतं मदीयं ध्यानादिकं कर्म स्मर। ध्यानादिना मया कृतेन मयि अनुग्रहोन्मुखो भवेत्यर्थः । नित्यज्ञप्तिस्वरूपस्य संस्कारजन्यस्मरणायोगात् । अभ्यासः तात्पर्यार्थः ॥१७॥

**नृ.भि-** इदानीं प्रणवप्रतिपाद्यं भगवन्तं प्रार्थयते- **ओमिति**॥ देशकालगुणैः पूर्णत्वात् ओंशब्दवाच्य, क्रतो ज्ञानस्वरूप, विष्णो, मां स्मर । मां प्रत्यनुग्रहोन्मुखो भव । मया कृतं त्वदाराधनादिकं च स्मर । मया कृतेन प्रसन्नो भव । अभ्यासः तात्पर्यार्थः ॥ १७ ॥

**अनन्त-** प्रणवप्रतीकोपासनामाह- **ओमिति** ॥ ओम् ओततत्वादिगुणयुक्त । क्रतो सर्वज्ञ । कृतं मया कृतं ध्यानादिकम् । स्मर अनुग्रहोन्मुखो भव इत्यर्थः ॥१७॥

**कृष्ण**- अथ प्रणवप्रतीकस्थितभगवत्प्रार्थनाप्रकारमाह- **ओमिति**॥ ओम्, क्रतो, स्मर,कृतं, स्मर, इति पदच्छेदः ॥

ओम् ओतत्वादिगुणयुक्ततया ओमितिशब्दवाच्य, क्रतो ज्ञानरूपहरे । मामिति शेषः । स्मर अनुगृहाण । कृतं भवद्ध्यानादिमदीयकर्म स्मर अनुगृहाण स्वीकुर्वीत्यर्थः । अभ्यासस्तात्पर्यनिर्णयार्थः ॥

भक्तानां स्मरणं विष्णोर्नित्यज्ञप्तिस्वरूपतः ।
अनुग्रहोन्मुखत्वं तु नैवान्यत् क्वचिदिष्यते ॥ इति ब्रह्मतर्के ॥ १७ ॥

### उपनिषत्

## अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् ।
## युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम ॥१८॥

**राघ**- कृतश्रवणादिना पुरुषेण साक्षात्कारार्थं हरेः प्रार्थनं कार्यमित्यतः तत्प्रकारं हिरण्मयेनेत्यादिनोक्त्वा अधुना प्राप्तसाक्षात्कारेणापि पुंसा मोक्षार्थं भगवदुपासनं कार्यमिति भावेन अग्निप्रतीकस्थभगवत्प्रार्थनाप्रकारमाह- **अग्न इति** ॥ अङ्गं देहम्, गुणभूतं जगद्वा नयति प्रेरयतीति व्युत्पत्त्या अग्निपदमुख्यार्थः सन् अग्नौ विद्यमानहरे । अस्मान् सुपथा पुनरावृत्तिहीनार्चिरादिमार्गेण राये मोक्षाख्यवित्ताय नय । कुतः? हे देव अस्मदनुष्ठितानि विश्वानि सम्पूर्णानि मोक्षाय पर्याप्तानीति यावत् । वयुनानि ज्ञानानि भवान् विद्वान् वेद । प्रारब्धकर्मयुक्तस्य कथं मोक्ष इत्यत उक्तम्- **युयोधीति** ॥ अस्मानित्यत्रापि अनुषज्यते । अस्मान् जुहुराणं अल्पान् कुर्वत्संसारे परिवर्तयदिति यावत् । एनः पापं अनिष्टं कर्मेति यावत् । अस्मत् अस्मत्तः युयोधि वियोजय । 'युयु वियोगे' इति धातुर्लुग्विकरणम् । वयं तु ते तुभ्यं भूयिष्ठां भक्तिज्ञानोपेतां नम उक्तिं नम इत्युक्तिं विधेम कुर्मः । न तु तत्प्रतिकर्तुं शक्नुम इति ॥१८॥

समस्तगुणपुर्णाय दोषदूराय विष्णवे ।
नमः श्रीप्राणनाथाय भक्ताभीष्टप्रदायिने ॥

ईशावास्योपनिषदो भाष्याद्युक्तार्थसङ्ग्रहः ।
राघवेन्द्रेण यतिना कृतोऽयं शिष्ययाञ्चया ॥

**इति श्रीराघवेन्द्रयतिविरचितः श्रीमदीशावास्योपनिषत्खण्डार्थः समाप्तः**

**नृ.भि**- साक्षात्कारप्रार्थनानन्तरं अग्निप्रतीकं भगवन्तं मोक्षं प्रार्थयते - **अग्ने इति॥** अङ्गनेतृत्वादिगुणत्वादग्निशब्दवाच्य, अग्न्यन्तर्गतविष्णो, सुपथा पुनरावृत्तिशून्येन अर्चिरादिना मार्गेण राये मोक्षाख्यवित्ताय अस्मान् त्वं नय । हे देव, विश्वानि अस्मद्योग्यसम्पूर्णमोक्षाय पर्याप्तानि वयुनानि ज्ञानानि त्वं विद्वान् ज्ञातवानसि । अस्मान् जुहुराणमल्पीकुर्वत् भवजनकत्वेन मोक्षप्रतिबन्धकम् । एनः पापं प्रारब्धम् । अस्मत् अस्मत्सकाशात् । युयोधि वियोजय । वयं तु ते नमइत्युक्तिं विधेम, न तु प्रतिकर्तुं शक्नुमः ॥ १८॥

विद्याधीशार्यशिष्येण नरसिंहेन भिक्षुणा ।
प्राकाशि सुखबोधार्थं प्रीयतां तेन माधवः ॥

**इति श्रीविद्याधीशतीर्थशिष्यनृसिंहभिक्षुविरचिता**
**ईशावास्यखण्डार्थप्रकाशिका समाप्ता**

**अनन्त**- अग्निप्रतीकं हरिं प्रार्थयते- **अग्ने इति ॥** अगं देहं अप्रधानत्वेन जगद्वा नयतीत्यग्निः हे अग्ने । सुपथा पुनरावृत्तिरहितमार्गेण । अस्मान् राये मोक्षवित्ताय नय । हे देव विश्वानि पूर्णानि मोक्षं साधयितुं समर्थानि । वयुनानि भवान् विद्वान् । प्रारब्धावद्यस्य कथं मुक्तिरित्यत आह- **युयोधीति ॥** अस्मान् जुहुराणं अल्पीकुर्वत् जननादिसम्पादकं एनः पापम् । अस्मत् अस्मत्तः । युयोधि वियोजय । ते भूयिष्ठां भक्त्यादियुक्तत्वेन बह्वीम् । नम उक्तिं नमश्शब्दम् । विधेम उच्चरिष्यामः । इतः परं प्रत्युपकारं कर्तुं न शक्नुम इति भावः ॥

रामादिसर्वदेवेष्टसम्पादनसुरद्रुमम् ।
भक्तसंस्तुत्यवश्याय मिहिरं नृहरिं नुमः ॥

**॥ इत्यनन्तभट्टविरचिता याज्ञीयमन्त्रवृत्तिः समाप्ता ॥**

**कृष्ण**- हिरण्मयेनेत्याद्येतावता प्रबन्धेन कृतश्रवणादिना पुरुषेण साक्षात्कारोपयोगितया भगवत्प्रार्थना कार्येति तत्प्रकारमुक्तम् । अथ प्राप्तसाक्षात्कारेणापि प्रणिना मोक्षार्थं भगवत्प्रार्थनं कार्यमिति भवेनाग्निप्रतीकस्थभगवत्प्रार्थनाप्रकारमाह- **अग्ने नयेति** ॥

अग्ने, नय, सुपथा, राये, अस्मान् ,विश्वानि, देव, वयुनानि, विद्वान्, युयोधि, अस्मत्, जुहुराणं, एनः, भूयिष्ठां, ते, नमउक्तिं, विधेम । इति पदच्छेदः ।

सुपथा राये अस्मानित्यत्र 'राये स इन्द्रपूर्वश्चाकारपरे' इति सूत्रेण न अकारलोपः । तदर्थस्तु चकाराकृष्टे अस्मान् ग्रहणे अकारपरे वर्तमानः राये परः इन्द्रपूर्वोऽकारो न लुप्यते इति । अग्ने हे देव भवानेव विश्वानि वयुनानि विद्वान् अतः अस्मान् सुपथा राये नय । जुहुराणं एनः अस्मत् युयोधि ते भूयिष्ठां नमउक्तिं विधेम इत्यन्वयः ।

अग्ने अगं देहं गुणभूतं वा जगत् नयति प्रेरयतीति व्युत्पत्त्या अग्निपदमुख्यार्थः सन् अग्नौ विद्यमान हे देव हरे, भवान् विश्वानि सम्पूर्णानि वयुनानि मदीयज्ञानानि विद्वान् वेद । अतः तस्मात्कारणत् अस्मान् सुपथा पुनरावृत्तिरहितेन अर्चिरादिमार्गेण राये मोक्षाख्यवित्ताय नय प्रापय। प्रारब्धकर्मबद्धस्य कथं मोक्ष इत्यत आह- **युयोधीत्यादिना** ॥ अत्रास्मानित्यस्यानुषङ्गः । अस्मान् अल्पीकुर्वत् जुहुराणं एनः पापमनिष्टं कर्मेति यावत् । अस्मत् अस्मत्तः 'ध्रुवमपायेऽपादानम्' (सि.कौ.५८७) इति पञ्चमी । युयोधि वियोजय । 'युयु वियोगे' लुग्विकरणम् । वयं तु ते तुभ्यं भूयिष्ठां भक्तिज्ञानोपेततया बहुलां नमउक्तिं नम इत्युक्तिं विधेम कुर्मः । उक्तिपदप्रयोगात् त्वामेव अनुसरामः, न तु त्वत्प्रतीपं कुर्म इति भवो बोध्यः ॥ २० ॥

नारदप्रभृतिध्येयो नारदप्रतिमप्रभः ।
ईशस्तोषाय मे भूयादीशावास्यप्रभाकृतेः ॥

**॥ इति श्रीमद्वेदव्यासपादाराधकेन गुहपुरवासकृष्णशर्मणा रचितायामुपनिषत्प्रभायां ईशावास्योपनिषत्प्रभा समाप्ता ॥**

**॥ समाप्तोऽयं ग्रन्थः ॥**

# मन्त्रानुक्रमणिका

# परिशिष्टम्

## उपनिषत्

अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते।
ततो भूय इव ते तमो य उ विद्यायाꣳ रताः ॥

(बृ.उ ६.४.१०)

भा.बो- एवं यथावत्परमात्मादिज्ञानं भगवत्प्रसादद्वारा मोक्षसाधनमित्युक्तम् । न केवलमेतावत् । किंनाम अन्यथाज्ञाननिन्दासमुच्चितमेवेति भावेन यथावज्ज्ञानस्येवान्यथाज्ञाननिन्दाया अप्यावश्यकत्वोपपादनायान्यथाज्ञानानिन्दनस्य अन्यथाज्ञानापेक्षयाधिक्येनानर्थसाधनत्वं मन्त्रेणाह- **अन्धन्तम इति** ॥ ये अविद्यां विरुद्धविद्यां मिथ्याज्ञानं तद्विषयमन्यथाकारं ब्रह्मनिर्गुणत्वादिकमुपासते ते अन्धन्तमः प्रविशन्ति । ये विद्यायां यथार्थज्ञाने एव रताः नत्वन्यथाज्ञाननिन्दां कुर्वन्ति ते ततोऽन्यथोपासकाद्भूय इव किञ्चिद्विशेषेण तमः प्रविशन्तीत्यर्थः ॥ १० ॥

## भाष्यम्

अन्यथोपासका येऽस्य ते यान्ति ह्यधरं तमः ।
ततः किञ्चिद्विशेषेण दुर्ज्ञानस्याविनिन्दकाः॥

सम्यगाचार्यवचनमवि(व)ज्ञाय विरोधिनि ।

सत्त्वबुद्धिं यतः कुर्युस्ततस्तेऽधिकपापिनः ॥
अप्राप्तत्यागिनः प्राप्तनिष्ठाहीनो हि दोषवान् ॥

(बृ.भा. ६.४.१०)

भा.बो- अन्धन्तमः प्रविशन्तीति मन्त्रमप्रतीत्यन्यथाप्रतीतिनिरासाय व्याचष्टे- **अन्यथेति** ॥ श्रुतावविद्यापदं विषयिवाचकं विषयस्यान्यथाकारस्य लक्षकमित्यभिप्रेत्य 'अविद्यामुपासते' इत्येतत् 'अन्यथोपासकाः' इति व्याख्यातम् । ततः अन्यथोपासकप्राप्यतमसः । 'भूय इव' इत्यस्यार्थमाह- **किञ्चिद्विशेषेणेति** ॥ श्रुतावुशब्दोऽवधारणार्थो विद्यायामित्यनेन सम्बध्यते ।

तेन विद्यायां यथार्थज्ञान एव रताः नत्वन्यथाज्ञाननिन्दां कुर्वन्तीत्येषोऽर्थो लभ्यते । अत उक्तम्- **दुर्ज्ञानस्याविनिन्दका इति** ।। अन्यथोपासकापेक्षया दुर्ज्ञानाविनिन्दाकाः किञ्चिद्विशेषेण तमो यान्तीति कुत इति चेन्न । तदपेक्षया तेषामधिकपापित्वात् । तदपिं कुतः? उभयोरपि दुर्ज्ञानाविनिन्दकत्वाविशेषादित्यत आह- **सम्यगिति** ।। विद्यायां रता इत्युक्तत्वेन तेषां समीचीनाचार्योपदेशस्तावत्प्राप्तः । सम्यगाचार्यवचनं ब्रह्मनिर्गुणत्वादिनिन्दापरं सम्यगबाधितार्थमविज्ञायाचार्योक्तार्थविरोधिनि ब्रह्मनिर्गुणत्वादौ सत्त्वबुद्धिं यतः कुर्युस्ततस्ते अन्यथोपासकापेक्षया अधिकपापिन इत्यर्थः ।।

नन्वन्यथोपासका अपि ब्रह्मनिर्गुणत्वादौ सत्त्वबुद्धिकारिण एव ततः कथं ते अधिकपापिन इत्यत आह- **अप्राप्तत्यागिन इति** ।। अन्यथोपासकोऽह्यप्राप्तत्यागी तस्य विद्यारतत्वाभावेन समीचीनाचार्योपदेशाभावे दुर्ज्ञाननिन्दनस्याप्राप्तत्वात् । अयं तु प्राप्तनिष्ठाहीनः सम्यगाचार्योपदेशे प्राप्ते दुर्ज्ञाननिन्दने निष्ठाशून्यत्वात् अप्राप्तत्यागिनः प्राप्तनिष्ठाहीनो ह्यधिकदोषवानिति । आचार्योपदेशाभावेन अप्राप्तनित्यकर्मादित्यागिनः आचार्योपदेशादिना प्राप्तनित्यकर्मादौ निष्ठाहीनो दोषवानिति लोकप्रसिद्धमिति हिशब्देन दर्शयति ।। १० ।।

## उपनिषत्

**अनन्दा नाम ते लोका अन्धेन तमसावृताः ।**
**तांस्ते प्रेत्याभिगच्छन्त्यविद्वांसो बुधो जनाः ।।**

(बृ.उ ६.४.११)

भा.बो- ननु भगवज्ज्ञानं कदा सम्पादनीयमिति चेत् सम्यज्ज्ञानिन्युपदेष्टरि सत्येव अन्यथानर्थसद्भावादिति भावेन तत्र मन्त्रमाह- **अनन्दा इति** ।। यद्वा न केवलमन्यथाज्ञानिनस्तदनिन्दकस्य च तमःप्राप्तिः किन्तु गुरूपदेशोल्लङ्घिनश्च अतो भगवदुपदेष्टरि सति भगवत्स्वरूपं ज्ञातव्यमेवेति भावेन तत्र मन्त्रमाह- **अनन्दा इति** ।। बुधः बोधयतीति भुत् ज्ञानी तस्मात् ज्ञानिनः ये भगवत्स्वरूपमविद्वांसो जनाः ते प्रेत्य अन्धयतीत्यन्धेन तमसा आवृताः अनन्दा सुखविरुद्धदुःखरूपाः ते प्रसिद्धा ये लोकाः तानभिगच्छन्तीत्यर्थः ।। ११ ।।

भाष्यम्

नित्यदुःखस्वरूपत्वादनन्दं तत्तमो मतम् ।
बोधके विद्यमानेऽपि ये विदुर्न परं हरिम् ।।
तेऽपि यान्ति तमो घोरं नित्योद्रिक्तासुखात्मकम् ।।
इत्यादि च ।।

बुधः सकाशेऽप्यविद्वांस इत्यर्थः ।।

बोधनाज्ज्ञानवान्भुत्स्यात्तत्सकाशाच्च ये हरिम् ।
न विदुस्ते तमो यान्ति सर्वदुःखात्मकं परम् ।।
(बृ.भा. ६.४.११)

भा.बो- अनन्दा इत्युक्तानन्दशब्दार्थमाह- **नित्येति** ।। नन्दः सुखम् । नञो विरुद्धार्थत्वेन अनन्द इति तद्विरुद्धं दुःखमुच्यते । मुख्ये सत्यमुख्यग्रहणायोगान्नित्यदुःखस्वरूपत्वादित्युक्तम् । इदानीम् 'अनन्दा नाम ते लोकाः' इति मन्त्रं व्याचष्टे- **बोधक इति** ।। अविद्वांसो बुध इत्यस्य 'बोधके विद्यमानेऽपि ये विदुर्न परं हरिम्' इति कथं व्याख्यानम् । ततः तस्याप्रतीतेरित्यतस्तद्व्याचष्टे- **बुध इति** ।। ननु बुध इत्यस्य प्रथमान्तत्वात् कथं बुधः सकाशेऽपीत्युक्तमित्यतः षष्ठ्यन्तमेव तदित्यभिप्रेत्य तन्मन्त्रव्याख्यानरूपं स्पष्टं प्रमाणमाह- **बोधनादिति** ।। ११ ।।

उपनिषत्

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ।। (बृ.उ ७.१५.१)

भा.बो- हिरण्मयमिव हिरण्मयं ज्योतिर्मयम् । पिबति रसान् त्रायते च जगदिति पात्रम् । तेन हिरण्मयेन पात्रेण सूर्यमण्डलेन सत्यस्य सद्गुणपूर्णस्यादित्यमण्डलान्तर्गतस्य तव मुखं वपुः पिहितमस्ति । हे पूषन् तद्वपुः सत्यधर्माय त्वद्विषयध्यानादिमते मह्यं दृष्टये मम त्वद्दर्शनसिध्यर्थमिति यावत् । अपावृणु अपगतावरणं कुरु ।। १ ।।

भाष्यम्

सूर्यमण्डलनाम्ना तु पात्रेण स्वमुखं हरिः ।
पिधायैव जगत्सर्वं पश्यत्यमितविक्रमः ॥
उदकं पीयते तेन तमसस्त्रायते जगत् ।
यतोऽतः पात्रमुद्दिष्टं विद्वद्भिस्सूर्यमण्डलम् ॥
पूषा पूर्णत्वतो विष्णुर्दृष्टये विष्णुधर्मिणः ।
स्वमुखं प्रकाशयेत् ...................... ॥ १ ॥

भा.बो- एवं पूर्वोक्तविद्यासु भगवदुपासनं तत्साक्षात्कारद्वारा मोक्षसाधनमित्युक्तं तत्रेश्वरसाक्षात्कारो नोपासनामात्रेण भवति । नापि मोक्षः साक्षात्कारमात्रेण किन्तु भगवत्प्रसादादेवेत्यतः कृतोपासनेन साक्षात्कारार्थं प्राप्तसाक्षात्कारेणापि मोक्षार्थं भगवत्प्रार्थनं कार्यं तत्प्राकरप्रदर्शनार्थं हिरण्मयेन पात्रेण इति ब्राह्मणमारभ्यते । तत्र सगुणब्रह्मप्राप्त्यर्थमेकऋष्यादि-शब्दाभिधेयमादित्यं प्रति मार्गयाचनमनेन क्रियत इत्यन्यथाप्रतीतिनिरासाय ब्राह्मणं प्रमाणेन व्याचष्टे- **सूर्यमण्डलेति** ॥ मुखमिति समस्तविग्रहोपल-क्षणम् । यदि हिरण्मयेन पात्रेण सत्यस्य मुखमपिहितं तर्हि तस्यान्यविषयज्ञानं न स्यादित्याशङ्कां परिहरति- **जगत्सर्वमिति** ॥ नन्वेतद्विरुद्धमित्यत आह- **अमितविक्रम इति** ॥ सूर्यमण्डले पात्रशब्दं निर्वक्ति- **उदकमिति** ॥ 'तत्त्वं पूषन्नपावृणु' इति वाक्यं व्याचष्टे- **पूषेति** ॥ पुष पुष्टाविति धातोः । यथाभूतस्य धर्मस्यानुष्ठाता सत्यधर्मेति व्याख्यानमसत् । सत्यस्यापिहितमिति सत्यशब्देन विष्णोः प्रकृतत्वेन प्रकृतपरित्यागापत्तेरिति भावेन तदर्थमाह- **विष्णुधर्मिण इति** ॥ विष्णुं धारयतीति विष्णुधर्मी तस्येत्यर्थः । नच विष्णोरनाधारत्वात् कथमेवं व्याख्यानम्? विष्णुं हृदये धारयतीति व्याख्यानात् । हृदये विष्णुधारणञ्चादरनैरन्तर्योपेतं तद्ध्यानादिकमेव तच्च भक्तस्यैव सम्भवतीति विष्णुधर्मीति विष्णुभक्त एवोच्यते अत एवोक्तमन्यत्र 'सत्यधर्माय भक्ताय' इति । अनेन श्रुतौ सत्यधर्मायेति चतुर्थी षष्ठ्यर्थेत्युक्तं भवति । यद्यपि मन्त्रे अपावृण्विति प्रार्थनं अत्र प्रकाशयेदिति स्वरूपकथनं तथापि मन्त्रतात्पर्यमात्रोक्तिरित्यदोषः ॥ १ ॥

उपनिषत्

**पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् समूह तेजः । यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषः सोऽहमस्मि ॥ २ ॥**

भा.बो- हे पूषन्, एकर्षे, यम, सूर्य, प्राजपत्य मदीयान् रश्मीन् व्यूह तेजश्च समूह स्वरूपं बाह्यञ्च मदीयं ज्ञानं विस्तारयेति यावत् । तथाच यत्ते रूपं कल्याणतमं तत्ते प्रसादादहं पश्यामि । असुः प्राणः तस्मिन्नसौ स्थितो यः पुरुषः सोऽसावहेयत्वेनासुत्वमेयत्वाभ्यां अहमस्मिनामकः तञ्च पश्यामीति वाक्यशेषः॥ २ ॥

भाष्यम्- ...............एकं नान्यथा तु कथञ्चन ।
नान्यो यत्तादृशो ज्ञाता तस्मादेकऋषिर्हरिः ॥
यमो नियमनात्प्रोक्तः सूर्य ऊरीकृतेरयम् ।
ज्ञेयः प्रजापतेरेव प्राजापत्यस्ततः स्मृतः ॥
प्राणे स्थितो यः पुरुषः सोऽसावहमिति स्मृतः ।
अहेयत्वादसुत्वाच्च मेयत्वाच्चास्मिनामकः ॥ २ ॥

भा.बो- एकं प्रधानम् । अन्यथा विष्णुधर्मित्वाभावे पूषन्नेकर्षे यम सूर्य प्राजापत्येत्यत्र पूषन्नित्यस्य व्याख्यातत्वादितरान् शब्दान्व्याचष्टे- **नान्य इति** ॥ एकं प्रधानं ऋषिर्ज्ञानं यस्यासावेकऋषिः यथोक्तं 'प्रधानज्ञानरूपत्वाद्विष्णुरेक-ऋषिः' इति । ज्ञानस्य प्राधान्यञ्च तत्सदृशज्ञानान्तरराहित्यमित्यभिप्रेत्यैवमुक्तम् । नियमनात् 'सर्वस्य' इति शेषः ऊरीकृतेरुदकस्य, स्वभक्तस्य वाङ्गीकृतेः प्रजापतेर्हिरण्यगर्भस्यायं प्राजापत्य इत्यभिसन्धाय सम्बन्धो दर्शितः । प्रजापतेरेव ज्ञेय इति । 'विशेषेण' इति शेषः । 'योसावसौ पुरुषः सोऽहमस्मि' इत्यत्र द्विरसाविति किमर्थमुच्यत इति शङ्कां निवारयंस्तद्व्याचष्टे- **प्राण इति** ॥ एकस्यासावित्यस्यार्थः प्राण इति । ननु यद्यसुः प्राणस्तस्मिन्नसावित्यर्थः स्यात्तर्हि एतदनन्वितं स्यात् क्रियापेक्षत्वादधिकरणस्येत्यतः क्रियाध्याहारेणान्वयं दर्शयति- **स्थित इति** ॥ असावसाविति वीप्सार्थतया किं न व्याख्यायत

इति चेन्न । एवं व्याख्याने विष्णोः प्राणाख्यप्रतीकस्याप्युक्तिलाभात् ॥ अहेयत्वादिति ॥ न हीयत इत्यहमित्यर्थः ॥२॥

## उपनिषत्

**वायुरनिलममृतमथेदं भस्मान्तं शरीरम् ॥**
**ओम् क्रतो स्मर कृतꣳ स्मर**
**ओम् क्रतो स्मर कृतꣳ स्मर ॥३॥**

भा.बो- ननु मुख्यप्राणान्तर्गतस्य भगवतस्सोऽहमस्मीति नित्यास्तित्वं कल्याणतमत्वञ्चोक्तं तदयुक्तम् । मुख्यप्राणदेहस्य भस्मान्तत्वदर्शनात् । देहनाशे च तदन्तर्गतजीववन्मरणाद्यवश्यम्भावादित्याशङ्क्याह ॥ **वायुरनिलमिति** ॥ अनिलं अमृतं लिङ्गव्यत्ययो, विभक्तिव्यत्ययो वा यद्यपीदं शरीरं भस्मान्तं तथापि तदन्तर्गतस्य परमेश्वरस्य न मरणादिदोषप्रसङ्गः । कुतः? अनिलः परमेश्वराश्रितवायुरपि यदाऽमृतः अथ तदा परमेश्वरोऽमृत इति किमु वक्तव्यमिति तदमृतत्वस्य कैमुत्यसिद्धत्वादित्यर्थः ॥

अथ प्रणवप्रतीकं भगवन्तं प्रार्थयते- **ओमिति** ॥ ओम् ओतत्वादिगुणयुक्त क्रतो ज्ञानरूप मां स्मर मया कृतं ध्यानादिकं स्मर । अभ्यासस्तात्पर्यार्थः । नित्यज्ञानस्वरूपस्य विष्णोः भक्तविषयकस्मरणं नाम तदनुग्रहोन्मुखत्वमेव नतु संस्कारकारणकं ज्ञानमिति ध्येयम् । यथोक्तम्-

भक्तानां स्मरणं विष्णोर्नित्यज्ञप्तिस्वरूपतः ।
अनुग्रहोन्मुखत्वं तु नैवान्यत्किंचिदिष्यत इति ॥

## भाष्यम्

अदोषत्वाद इत्युक्तो वायुस्तन्निलयो यतः ।
अनिलं तत एवासावमृतं चेति कीर्त्यते ॥

तदाश्रयोऽपि ह्यमृतः किमु साक्षात् स्वयं हरिः ।
क्रतुश्च ज्ञानरूपत्वात् स एव हि जनार्दनः ॥३॥

भा.बो- 'वायुरनिलममृतम्' इति वाक्यमेवम्भूतस्य मे शरीरपाते सति तत्स्थो वायुराध्यात्मिकः प्राणः अनिलं बाह्यं वायुं अमृतमाधिदैविकं प्रति गच्छतु । अथेदं शरीरं भस्मान्तं सत् पृथिवीं प्रति यात्विति परैर्व्याख्यातं तदसत् । अवश्यम्भाविन्यर्थे प्रार्थनायोगात् । प्रकरणादप्युपपत्तेर्बलीयस्त्वात् । अतो लिङ्गव्यत्ययेन विभक्तिव्यत्ययेन वा समानाधिकरणान्येतानि पदानि । ननु तर्हि 'वायुरनिलम्' इति पुनरुक्तिरित्यत आह- **अदोषत्वादिति** ॥ अ इत्युक्तः । हरिरिति वर्तते । यतो वायुस्तन्निलयः स हरिरेव निलं निलय आश्रयो यस्यासौ तन्निलयः तत एवानिलमिति कीर्त्यत इत्यर्थः । 'अमृतं चेति कीर्त्यते' 'अतिरोहितविज्ञानात्' इति शेषः । ननु विष्णुप्रार्थनप्रकरणे वायोरनिलत्वामृतत्वोक्तिरसङ्गतेत्यत आह- **तदाश्रय इति** ॥ स हरिराश्रयो यस्यासौ तदाश्रयः । तथाच कैमुत्येनेश्वराश्रिततत्वमुच्यत इति नासङ्गतिरिति भावः । 'ओम् क्रतो स्मर' इत्युक्तक्रतुशब्दं निर्वक्ति- **क्रतुश्चेति** ॥ 'क्रतुर्मनीषा' इत्यभिधानादित्यर्थः ॥३॥

### उपनिषत्

## अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् ।
## युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम ॥४॥

भा.बो- एवं साक्षात्कारप्रार्थनानन्तरमग्निप्रतीकं भगवन्तं मोक्षं प्रार्थयते- **अग्न इति** ॥ हे अग्ने अस्मान् सुपथा पुनरावर्तिवर्जितेनार्चिरादिमार्गेण राये मोक्षाख्यवित्ताय नय । कुतः? हे देव अस्मदनुष्ठितानि विश्वानि सम्पूर्णानि मोक्षाय पर्याप्तानीति यावत् । वयुनानि ज्ञानानि भवान्वेद प्रारब्धकर्मप्रतिबद्धस्य कथं मोक्ष इत्यत उक्तम्- **युयोधीति** ॥ अस्मज्जुहुराणं अस्मानल्पीकुर्वत् संसारे परिवर्तयदिति यावत् । एनः पापमनिष्टं कर्मेति यावत् । अस्मद्युयोधि अस्मत्तो वियोजय । वयं ते तुभ्यं भक्तिज्ञानाभ्यां भूयिष्ठां नम इत्युक्तिं विधेम नतु तत्प्रतिकर्तुं शक्नुम इत्यर्थः ॥

### भाष्यम्

सोऽग्निरङ्गप्रणेतृत्वाद्विश्वज्ञानविदां वरः ॥ इति च ॥

जुहुराणमल्पं कुर्वत् । न वा अहमिमं जानातीतिवत् सर्वत्राप्यहंशब्दोऽहेयत्ववाच्येव ॥४॥

भा.बो- 'अग्ने नय' इत्यग्निशब्दं व्याचष्टे- **सोऽग्निरिति** ॥ अगं शरीरमप्रधानं जगद्वा नयतीत्यग्निरित्यर्थः । विश्वानि वयुनानि विद्वानित्यस्यार्थमाह- **विश्वेति** ॥ 'त्वद्दत्तया वयुनयेदमचष्ट विश्वम्' इति प्रयोगाद्वयुनशब्दो ज्ञानवाचीति भावेन विश्वज्ञानेत्युक्तम् । जुहुराणं कुटिलमित्यन्यथाप्रतितिनिरासाय तदनूद्य व्याचष्टे- **जुहुराणमिति** ॥ अन्यथा 'यदस्मान्कुरुतेऽत्यल्पांस्तदेनोऽस्मद्वियोजय' इति वचनविरोधादिति भावः । तस्योपनिषदहमित्यत्र 'योऽसावसौ पुरुषः सोहमस्मि' इत्यत्र च अहं शब्दोऽहेयत्ववाचीत्युक्तं तदुपपादयति- **नवेति** ॥ अत्राहंशब्दस्याहेयत्ववाचित्वं प्रागेवोपपादितम् ॥४॥

॥ समाप्तं परिशिष्टम् ॥

# ನಮ್ಮ ಪ್ರಕಾಶನಗಳು

| | | | |
|---|---|---|---|
| ಸಂಸ್ಕೃತ | 1. | ಮಾಂಡೂಕ್ಯೋಪನಿಷತ್ ಭಾಷ್ಯ | 75.00 |
| | 2. | ಸದಾಚಾರಸ್ಮೃತಿ | 10.00 |
| | 3. | ಮಂತ್ರಸ್ತೋತ್ರಸಂಗ್ರಹಃ | 15.00 |
| | 4. | ರುದ್ರವ್ಯಾಖ್ಯಾನ | 30.00 |
| | 5. | ಶ್ರೀಮನ್ನ್ಯಾಯಸುಧಾಸ್ತುತಿ | 06.00 |
| | 6. | ಗರುಡ ಪುರಾಣ | 80.00 |
| | 7. | ಸ್ಮೃತ್ಯರ್ಥಸಾಗರ | 100.00 |
| | 8. | ಕೃಷ್ಣಾಮೃತಮಹಾರ್ಣವ | 100.00 |
| | 9. | ಅಥರ್ವಣೋಪನಿಷತ್ | 150.00 |
| | 10. | ಶ್ರೀಮನ್ನ್ಯಾಯಸುಧಾ | 3000.00 |
| | 11. | ಮಹಾಭಾರತ ತಾ. ನಿರ್ಣಯ | 320.00 |
| | 12. | ತಂತ್ರಸಾರೋಕ್ತ ಮಂತ್ರವ್ಯಾಖ್ಯಾನಮ್ | 75.00 |
| | 13. | ಈಶಾವಾಸ್ಯೋಪನಿಷದ್ಭಾಷ್ಯಮ್ | 75.00 |
| ಕನ್ನಡ | 1. | ಪೂಜಾರಹಸ್ಯ | ಅಚ್ಚಿನಲ್ಲಿ |
| | 2. | ಶ್ರೀಸತ್ಯಪ್ರಮೋದ ವಿಜಯ | 25.00 |
| | 3. | ಶ್ರೀಸತ್ಯನಿಧಿವಿಲಾಸ | 60.00 |
| | 4. | ವಿಷ್ಣುಸ್ತುತಿ | 06.00 |
| | 5. | ವಾದಾವಲೀ | 150.00 |
| | 6. | ಪುರುಷಮತದ ಪಕ್ಕಿ | 80.00 |
| | 7. | ಸಂಧ್ಯಾರಹಸ್ಯ | 15.00 |
| | 8. | ಜಿಜ್ಞಾಸೆ | 40.00 |
| | 9. | ಸತ್ಯಾತ್ಮಸುಧಾ | 40.00 |
| ಇಂಗ್ಲಿಷ್ | 1. | ನ್ಯಾಯಸುಧಾ ಭಾಗ 2 | 150.00 |
| | 2. | ನ್ಯಾಯಸುಧಾ ಭಾಗ 3 | 120.00 |
| | 3. | ದಿ ಕ್ವೆಸ್ಟ್ | 50.00 |
| | 4. | ವಿಷ್ಣು | 50.00 |
| | 5. | ಸತ್ಯಾತ್ಮಸುಧಾ | 50.00 |
| ತಮಿಳು | 1. | ಪೂಜಾರಹಸ್ಯ | 25.00 |
| | 2. | ಸಂಧ್ಯಾರಹಸ್ಯ | 20.00 |
| ತೆಲುಗು | 1. | ಸಂಧ್ಯಾರಹಸ್ಯ | 20.00 |
| | 2. | ಬಳಿತ್ಥಾಸೂಕ್ತ | 10.00 |
| | 3. | ಪೂಜಾರಹಸ್ಯ | 100.00 |
| ಹಿಂದಿ | 1. | ಸಭಾಸಾರ ಸಂಗ್ರಹ | 225.00 |
| | 2. | ಸಿವಲ್ ಸೂಟ್ | 225.00 |
| | 3. | ಸುಮಧ್ವವಿಜಯ | 175.00 |